॥ ८१ ॥ जयो विजयराज्याख्या, कृतार्थः प्रस्थितस्ततः । तदानीं नामिलत्तस्य, राज्यसङ्क्षोभशङ्कया ॥ ८२ ॥ महिम्ना तन्मणेः क्ष्मायां, खे च खेचरलीलया । चम्भ्रम्यति स्म स स्वैरं, कौतुकी किल नालसः ॥ ८३ ॥ नाम्ना समानामन्येद्युः, प्रययौ स जयापुरीम् । रैमहर्म्यसमृद्धा या, लङ्कापाङ्क्तामकारयत् ॥ ८४ ॥ जैत्रमल्लस्तत्र भूमान्, जैत्रश्रेष्ठ्याद्य प्रियाः । पुत्राः सप्त जगज्जैत्रश्रीर्जैत्रश्रीश्च पुत्रिका ॥ ८५ ॥ साक्षात् कामलता कामलता नाम पणाङ्गना । तत्रास्ति सोऽस्यामासक्तस्तत्सौधे तस्थिवांश्चिरम् ॥ ८६ ॥ विनोपायं धनोत्पत्तिरीप्सिताऽस्य कथ न्विति । वत्से ! कथञ्चित्पृच्छेति, तां लुब्धाऽक्काऽन्यदाऽवदत् ॥८७॥ सा प्राज्ञा प्राह किं मातः !, लुब्धया पृच्छ याऽनया । किं मच्चकार्थक्लेशेन, मच्चकैर्हि प्रयोजनम् ॥ ८८ ॥ इत्याद्युक्ताऽपि लोभार्त्ता, तत्पृच्छार्थैकदाग्रहम् । अक्का कथञ्चित्तामुग्रदुष्टमग्रहीतवत् ॥ ८९ ॥ ततस्तया जयाह्वानः, सोपरोधमपृच्छयत । प्रेमभङ्गभिया सोऽपि, यथास्थितमचोचत ॥ ९० ॥ न कस्यापि प्रकाश्यं स्याद्गुह्यं स्त्रीणां विशेषतः । तस्यै तथाऽपि स प्रोचे, स्त्रीवशाः किं न कुर्वते ? ॥९१॥ मातुः प्ररूपयामाह ( से ), तत्स्वरूपं ततस्तया । दुष्टा दुष्टाशया साऽपि, तन्मणिग्रहणाशया ॥ ९२ ॥ ततः कपटिनी नीतिकुट्टिनी कुट्टिनी रहः । दुग्धं लुब्धा विशालीयान्वेपीद्विष्वग्महामणिम् ॥९३॥ अन्यत्रादर्शनात्स तत्पार्श्वे संभाव्य दम्भिनी । स चन्द्रहासमदिरा, दधिवद्भावपाययत् ॥ ९४ ॥ ततो गुप्तांशुकं पेशूच्छोलस्यास्य साऽग्रहीत् । स तत्तुल्योपलं न्यस्य, स्वातपूरितरीतिवित् ॥९५॥ क्रमाय सावधानेऽस्मिन्, स्थाने जानाति तं मणिम् । स्थाने विषादस्यातोऽपि, न विषादस्तथाऽजनि ॥ ९६ ॥ दिनान्तरे किं तु किञ्चि

तस्मै तां स्वर्णकोटीं च, यच्छेत् क्ष्माभृद्वयो जयः। हृष्टस्तच्छ्रवणात् स्पष्टपटह क्ष्मापधाम्यगात् ॥१३॥ राज्ञाऽनुज्ञात
माग्रभामाग्रधीमेवमवादिषत्। घोषामगुण्ठनआपायाडम्बरपुरस्सरम् ॥ १४ ॥ महौषधीमावितात्मशण्डाच्छोट
नया रयात्। राज्ञः कन्यां पटूचक्रे, किं न दिव्यौषधीफलात्? ॥ १५ ॥ युग्मम् ॥ लोकोत्तराकृतिफलाऽनुमितैत-
स्कुलादिकः। सुविस्मितः प्रमुदितस्तस्मै क्ष्माव्ययितस्ततः ॥१६॥ सकनीमवनीं वीक्षाप्रासां नागकनीमिव । ददौ
कनककोटीं च, नान्यथा मापितं सताम् ॥ १७ ॥ युग्मम् ॥ महीनेता महोत्साहे, विवाहे विहिते तयोः। यौतके
कौतुकेनोच्चैः, सर्वं सौभाग्यिक ददे ॥ १८ ॥ तत्र तस्थौ सुखं सेष, दोगुन्दुक इवामरः। व्यायस्तुपाय सन्मत्या,
प्रस्थानेषु महामणिम् ॥ १९ ॥ अथ च–राजाङ्गजारोपपित्स्वे, प्रयुक्ता गुप्तमप्यहो। कश्चित्कथञ्चिद्बुबुधे, धूर्त्तोऽस्मा
तां महौषधीम् ॥२०॥ तां जिघृक्षुः कृतक्षत्रवेष एव विशेषतः। जयमावर्जयद्व्याजाद्विनयाद्यैः सुभृत्यवत् ॥२१॥
सैषं विश्वास्य त गुप्तां, गृहान्तस्तां गृहीतवान्। हृष्टश्चाष्टवांश्च प्राक्, धिग् विश्वासमनर्थदम् ॥ २२ ॥ तदुक्तम्–
"जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दयाम्। बृहस्पतिरविश्वासं, पाञ्चालः स्त्रीषु मार्दवम् ॥ २३ ॥ कन्यादि
लाभान्तरितखेऽप्यनन्तरिताऽमुना। अमानि हानिः सा प्रायः, सुख दुःखे निमज्जति ॥ २४ ॥" कन्यादिलाभः
को वाऽस्योर्वीशसूनोर्महात्मनः। दिव्यद्विपस्तुहानिस्तु, दुःखाकूपोषकैः कथम्? ॥२५॥ दृष्टे दैवेन दैवेनापहृते ते
तु वस्तुनी। दैवेनैव प्रापणीये, मात्राधिक्यफलादपि ॥२६॥ तत्किं वृथा कथनयाऽन्यस्य दर्शितदैन्यया। इत्यन्तरेव
दध्रेऽसौ, दुःखमौर्विमिवाम्बुधिः ॥२७॥ इतश्च–अभ्यर्च्य याचितोऽप्युच्चैर्जयं निर्वास्य वेश्यया। सामान्यमणिवच्चैव,

ददौ किञ्चिन्महामणिः ॥२८॥ मयेदृग्व्यसनामेव, विध्यवसर्वाप्यभीष्टकृत्। कुतो वा दुर्नयेऽभीष्टं ?, किन्तु पाप्मैव पाप्मिनः ॥२९॥ ततो धिक्कारमध्यायाः, काम कामलतावपः। व्यधुस्तामभ्यधुश्चापाप्यसौ तस्यैव दीयताम् ॥३०॥ किं चैष राजमान्यस्त्वाद्राजलीलां बभाज यः। साक्षात्कल्पद्रुमपि तं, हा ! यद्वाभिरकासयः ॥३१॥ ताभिरित्याशु पालन्धाऽधिकलुब्धा च कुट्टिनी। किञ्चिद्विचिन्त्य तद्गेह, गृहीत्वाऽगाज्जयान्तिके ॥३२॥ दम्भेन दम्भिनी दुःस्थां चोन्मुद्रयन्त्यवग्। हा वत्स ! किं विमुञ्च्यास्माकेव सम्भालयस्यपि ॥३३॥ यद्वा प्रासः श्रीरिमान, मान राज्ञः परं श्रितः। स्वर्गं गत इवाक्षीव, स्मरस्यपि कथं नु नः ? ॥३४॥ विस्मारकस्याप्यस्माक, स्मरामस्तव नो कथम् ?। पद्मिन्यः पद्मिनीप्राणनाथेनैव विकस्वराः ॥ ३५ ॥ त्वद्वियोगाभिसन्तप्ता सुता कामलता लता। वत्स ! जीवनवेनोच्चैर्निर्वाप्या भवतैव चेत् ॥ ३६ ॥ किञ्च किञ्चिद्गृहस्त्वपूर्वं, लेभेऽस्माभिर्गृहान्तरे। किंसत्कमिति नो विद्मस्तुभ्य दद्मः प्रिया-स्मने ॥ ३७ ॥ ग्रहणानुग्रहणास्मान्, स्वगृहागमनेन च। प्रार्थनाभ्यर्थनायां हि, सतां न कौशलं किल ॥ ३८ ॥ जल्पित्वेत्यर्पयामास, सा तस्मै त महामणिम्। नष्टं पुण्यमिव स्पष्टमहो कपटपाटवम् ॥३९॥ तदाह—"पक्षिणां वायसो धूर्तः, श्वापदेषु च जम्बुकः। नरेषु धूतकारश्च, नारीषु गणिका पुनः" ॥ ४० ॥ अज्ञाकपटतस्तुश्रीस्मृति-तद्गृहलाभतः। तदा कोपीत्सुक्यहर्षैः, सोऽन्वभूत्सावसङ्करम् ॥ ४१ ॥ क्षणोऽधुना न कोपस्येत्यतः कोपं स गोपयन्। प्रीतिं प्रकटयन्नेष्यामीत्युक्त्वा, विससर्ज ताम् ॥ ४२॥ सोऽपि कामलतां व्यापन्, विन्ध्योर्वीमिव वारणः। प्रागेवागात्तद्गृहे धिग्, व्यसनं दुरपासनम् ॥ ४३ ॥ मासवत्स्यौ च तत्रैव, तदासक्तः कियद्दिमीम्। तन्मणीपूर्व

माणर्द्धिर्महतामप्यहो स्थितिः ॥ ४४ ॥ वियोगोद्विग्नचिन्ताब्धिमग्नराजसुतोदितात् । तादृग्जामातृवृत्तान्तात्,
क्लान्तात्मा क्ष्माभृदप्यभूत् ॥४५॥ व्यसनाब्धिनिमग्नोऽस, जातस्त्वय मम लज्जया । ध्यात्वेत्यमात्यमाहूय, प्राहिणोत्तस्य
पार्थिवः ॥ ४६ ॥ तस्या धाम्नो द्वारमेत्यामात्यस्तं याचवाहूयत् । तावदापितमेवाश्रीरापीवार्त्तः सोऽप्यचिन्तयत्
॥४७॥ हाऽहं राज्ञाऽपि विज्ञातः, स्यास्तुरत्र विटादिवत् । कथं स्वास्यं दर्शयामि?, यामि तद्दूरतः क्वचित् ॥ ४८ ॥
ततस्तार्क्ष्य इवोत्प्लुत्य, प्राग् निर्गत्य च तद्गृहात् । स्वं रूपं च परावर्त्य, निरगान्नगराद्बहिः ॥ ४९ ॥ नैवात्र कश्चिद्-
द्वेत्ति, से खेचर इवोच्चकैः । मणिप्रभावादुत्पत्याप्यगाद्दूरतरं क्वचित् ॥५०॥ तत्रावधूतरूपेणारण्ये शून्ये भ्रमन्नयम् ।
नष्टवस्त्वासिपिशुन, शाकुन प्राप्य विप्रिये ॥ ५१ ॥ यावद्भ्यो च लब्धाऽस्मि, कथं चेद् महौषधीम् । तावत्तस्या
मिलत् प्रीत्येवान्योऽसद्भूतरूपभृत् ॥ ५२ ॥ जयस्तेनासवत् पृष्टः, स्पष्टयित्वा महौषधीम् । किंगुणेयं सोऽपि तां
स्वामुपलक्ष्य मुदाऽब्रवत् ॥ ५३ ॥ सर्वं वेद्म्यहं तत्रेऽस्या, गुणाम्नायो गुणास्त्वहो । ब्रूहि क्व त्वया लब्धा, लुब्धा-
त्मा सोऽप्यथाभ्यधात् ॥ ५४ ॥ पुर्यामेकस्यामेकस्माद्, भो महात्मन्! महात्मनः । महोषधमान्महाविद्यामिवास्मि
प्रापिवानिमाम् ॥ ५५ ॥ गर गारुडशक्त्येवानया शुभप्रयुक्तया । स तत्क्षणात् क्षिणोति स्म, महाक्षोपमहाग्रहम्
॥ ५६ ॥ मत्प्रयुक्ता तु कं हेतु, वोपक्षमात्पतोऽप्यसौ । तदस्यां चेत्समाज्ञाती, तदाम्नायगुणान् मण ॥ ५७ ॥ स्तेन
ततस्त स स्पष्टं, निष्टक्ष्याचष्ट रुष्टवत् । रे अनार्य! हन्त चौर्यादिभ्यस्तु फलेत् कथम्? ॥ ५८ ॥ अत्रामुत्राप्य-
नर्थाय, क्रौर्यमृचौर्यमङ्गिनाम् । विश्वासघातजातस्य, तस्य किं ब्रूमहे तुलाम् ॥५९॥ धूर्त्त! धूर्त्ततयैवं मामिव यश्च-

यसे जगत् । किन्तु काप्याशु लब्धासि पाप ! पापफलं ध्रुवम् ॥६०॥ शृण्वन्नेवेति तां क्षोणी, क्षिप्त्वैव मुद्गरादिवत् ।
जीवनाशं ननाश द्राग्, ध्रुवं दोषः प्रकम्पते ॥६१॥ समर्थोऽपि कृतार्थः सन्, गतार्थेभासितो जयः । तस्मादे नान्यथा
विष्ठ,पापः पापेन पच्यताम् ॥६२॥ प्रवासारण्यवासाप्यमुग्रोपघर्मिवामयी । क्लेशोऽपि स्वार्थसिद्ध्या सोऽन्वमोमोदिष्ट
दिष्टवान् ॥ ६३ ॥ विनोदास्यन्यदा भूत्वा, निकामश्यामवामनः । भोगावतीपरोगाख्या, सोऽगाद्भोगापुरीं पुरीम्
॥६४॥ नभोगविमुखभूत्या, सुभोगस्तत्र भूविभुः । सैषा भोगवती विश्वसुभगा भोगिनी कनी ॥६५॥ स क्षुद्रामि
रिव क्षोभं, क्षुद्राः कौतुकात्मने । परीतः परितोऽश्रौपीत्, पटहोद्घोषणामिमाम् ॥६६॥ दुष्टाहिदष्टा जीव्येत, कनी
येनास्यनीशितुः । तां ददेऽस्मै नृपः साश्वसहस्रं च शतं गजान् ॥६७॥ ततः कलीकिल इवोत्कलिकां नाटयन्नयम् ।
स्पृष्टवान् पटहं हास्यं, विस्मयं च जने पुनः ॥ ६८ ॥ कन्याहिलाभे भो ! कापीमुधा वामन ! मा मनः । मुक्ता
कनीयं वेधापैर्युक्ता मास्म प्रतिश्रुतिः ॥ ६९ ॥ न्यवार्यतार्यैरित्येष, प्रैर्यतार्यैतरैः पुनः । उपैक्ष्यत च मध्यस्थैरहो
प्रेष जगत्स्थितिः ॥ ७० ॥ ततः कौतूहलानल्पजल्पलोकानुगः । जगाम वामनोऽक्षामशक्तिर्धाम क्ष्मा
भुजः ॥ ७१ ॥ अहो आहोपुरुषिकेत्यादिवादिव्यथो नृपु । नत्वा नृप नृपादिष्टः, स कन्याग्रे निविष्टवान् ॥ ७२ ॥
मेघाम्बेव महीपथ्या, प्राग्वन्मुसंप्रयुक्तया । तां अथाजीवयामास, न हि तादृग् विसंवदेत् ॥ ७३ ॥ सर्वे सविस्मया
ह्यासन्, विषादं च तदा वपुः । कन्याया जीवनास्स्य, तादृग्रूपनिरूपणात् ॥ ७४ ॥ आदानीये गुणैः कन्याद्यानी-
येऽस्मिन्नरोत्तमे । किं नाम वामनत्वादि, धिग् दैवं रसकूपकम् ॥ ७५ ॥ किंवाऽधुना निष्फलया, चिन्तया लतया-

ऽनया । मान्यथा स्याद्विधिकृत, व्याहत च महात्मनाम् ॥ ७६ ॥ कन्यास्वेवं अनन्यावेः, साव हाव च दुर्वाम् ।
असौ जनप्रवाद चावमन्येमां ददामि तत् ॥ ७७ ॥ विमृश्येति नृपोऽस्मै तां, यावयच्छति तावता । कुर्वन् स्वगर्व
सर्वस्व, सर्वस्वाख्यात्सर्वगी: ॥७८॥ महीन ! दीति हीनाङ्गुर्वशायेदवाय मे । किं हसीं वायसायेव, ददास्येता
विद्यांपर ! ॥ ७९ ॥ त्वया दत्ताऽपि चा कन्या, कथं मां स्वीकरिष्यति ! । कथ चा लोकसांमस्यमत्यन्तानुचित चवः
॥ ८० ॥ तदुक्तम्–"यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् । वस्तुविनाश दृष्ट्वा तथाऽपि परि
खिद्यते चेतः ॥ ८१ ॥" सविय दीयमानाऽपि, त्वया नादीयते मया । स्वोत्तरीयानुसारेण, ननु पादप्रसारणम्
॥ ८२ ॥ करीरनिम्बादिरतेर्द्राक्षावणविदूरगात् । उष्ट्रादपि निकृष्टोऽसौ, स्वानुरूप न वेत्ति य ॥ ८३ ॥ श्लेष्मादि-
संश्लेषशुपश्चन्दनादिविनिर्मुक्तः (गैतेः)। मक्षिकातोऽपि स क्षुद्रः, स्वानुरूप न वेत्ति यः ॥८४॥ आदाने वदने दाने,
निदाने सदनेऽदने । आसने शयने यानेऽप्युत्थाने स्थापनेऽर्थने ॥ ८५ ॥ ध्याने विधाने सन्धाने, शोधने बोधने
घने । हाने मानेऽभिमाने च, समाह्वाने विवाहने ॥८६॥ उत्पाटने विघटने, घटने स्फेटनेऽटने । पाटने कुट्टने शाने,
विज्ञाने सेवने वने ॥ ८७ ॥ पठने पाठने गाने, कोपने गोपनेऽसने । एवमादिषु सर्वत्र, यः स्वं वेद विवेद सः
॥ ८८ ॥ कलापकं । सङ्ग्रहस्त्वेवम्–स्वगृहेऽन्यगृहे वाऽपि, कृत्स्नकृत्येषु कृत्यवित् । स्वप्रतिष्ठार्हतावाच्याद्यनुरूप
प्रवर्त्तते ॥ ८९ ॥ इत्थ तस्मिन्नुसमस्तावधिसंवादिनि वादिनि । चमत्क्रियन्ते स्म, सर्वेऽप्युर्वीश्वरादयः ॥ ९० ॥
गुणानुरागिणः स्वल्पास्तेभ्योऽपि गुणिनस्ततः । गुणिनो गुणरक्ताश्च, तेभ्यः स्वागुणवीक्षिणः ॥९१॥ स्वास्यरङ्गेऽप

गां राजा, नर्त्तकीवदनर्त्तयत्। भो भद्र! ते मया देया, कन्या काऽत्र विचारणा? ॥ १२ ॥ प्राज्याः प्राणाः प्रति-
छायाः, पुंस सत्यैव गीर्नृणाम्। तत्तस्यै किं न क कुर्याद्विशिष्य च महाशयः ॥ १३ ॥ तदर्थमेव पित्रार्थैः, श्री
रामो वनवासकृत्। न न्यवारि हरिश्चन्द्रेणाप्यकारि कुकर्म तत् ॥१४॥ इत्थं प्रमाण्य वैमात्यमनपेक्ष्य कनीं ददौ।
पञ्चविष्यः प्राग् भविष्यत्प्रिये तस्मै प्रिय तु सः ॥ १५ ॥ कन्या कन्याजनन्याद्यैरप्यमानि तथैव तत्। अहो
वचननिर्वाहमहोत्साहो महात्मनाम् ॥ १६ ॥ तूर्णसम्पूर्णतत्सात्त्वपरीक्षः स सुपर्ववत्। रूपश्रीकं स्वशक्तिं च,
व्यक्तीकर्तुमथाब्रवीत् ॥ १७ ॥ एतामनेन रूपेण, नृप! रूपस्विनीं कनीम्। पाणौ कुर्वे कथं कुर्वे, तत्कथश्चित्तुरू
पताम् ॥ १८ ॥ अभीष्टसाध्यसिद्धिश्च, साहसादेव देहिनाम्। येन निर्लक्षणोऽपि स्याद्द्वात्रिंशल्लक्षणाधिकः ॥१९॥
यतः—"अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु। गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम्
॥ २०० ॥" सत्त्वमात्रस्य तन्माहात्म्यमथ प्रहिसात्कृतम्। प्राग् नेष्येऽहं निजं देहं, निःसन्देहं परां श्रियम् ॥ १ ॥
इत्युक्त्वा सत्क्रियां कृत्वा, सत्त्वाढ्यः सकलेष्वपि। पश्यत्सु विस्मयभयखेदोद्वेगवशाविभि' ॥२॥ ज्वालाजटाले
ज्वलने, स पपात पतङ्गवत्। तत्क्षणान्निर्ययौ चोर्वीमभिन्नं पतङ्गवत् ॥ ३ ॥ युग्मम् ॥ माहात्म्येन महौषध्या,
न दग्धः स्वल्पमप्ययम्। जज्ञे मणीमहिम्ना च, दिव्यभास्वनरूपभृत् ॥ ४॥ अथोच्चैर्विस्मितैः कृतस्मितैः क्षितिभु-
दादिभिः। सोऽनुयुक्तः सनिर्बन्धं, यथास्थितमचीकथत् ॥ ५ ॥ मन्त्रवास्फुरितः किन्तु, महामणिमहौषधीम्।
सुधी संगोपयामास, तयो रक्षा तथैव हि ॥ ६ ॥ ततः प्रमोदमेदस्वी, मेदिनीमान् महामहैः। तेनोद्वाह्य न्यधा-

दिव्यभोगिनीं भोगिनीं कनीम् ॥ ७ ॥ शतं मतङ्गजान् दिव्याद्भुतानश्वान् सहस्रशः । कृती वितीर्णवांस्तस्मै,
सौधागण्यधनान्यपि ॥ ८ ॥ भोगिन्या सह भोगीन्द्रः, स नरेन्द्रमहाग्रहम् । अवाप्य चित्रं तत्रोषेचिर स्वैरं व्य-
लालसीत् ॥ ९ ॥ मुदा कदाचिदन्वीयाद्यावस्मरपुरस्सरम् । क्ष्माकान्तमिव स धान्तमाक्रीड क्रीडनेच्छया ॥१०॥
प्रेक्ष्य साक्षेपमप्राक्षीत्, पद्माक्षी तत्र कामपि । वास्तव्यां काऽप्यवास्तव्या, क एष सखि! गच्छति ? ॥ ११ ॥
युग्मम् ॥ स्वकेव गाढशब्दा साऽप्यशब्दायत तां प्रति । तत्त्वदाश्चर्यनिर्मोता, जामाताऽयं महीपतेः ॥ १२ ॥
श्रपाकूतमिदंश्रुत्वैव, सुमना व्यमनायत । परं परिभवस्थानमभिमानवतां श्ववः ॥ १३ ॥ यतः—"उत्तमाः
स्वगुणैः ख्याता, मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याताः, श्वशुरैरधमाधमाः ॥ १४ ॥" तत एव ततः
पद्मासिन्नुस्सः स सुप्तस्तवत् । सोऽपि मासः प्रतसः सम्तदेतस्यचिन्तयत् ॥१५॥ न सर्वथाऽत्र मे स्थातुं, युक्तं नापि
जयापुरीम् । तद्भ्रातुर्विजयोपान्तं, यामि कामितसुखर्के ॥ १६ ॥ ममानर्जितराज्यस्य, प्राज्यराज्यभुपाऽमुना ।
सयोगः किंगुणो यद्वा, ग्रहस्येव विवस्वता ॥१७॥ तस्मादपराज्यमर्जित्वा, जित्वाऽरीन् परमर्द्धिमान् । गन्ताऽस्मि
भ्रातुरभ्यर्णमेव स्याद्गौरवं ध्रुवम् ॥१८॥ मद्भूशमासराज्योऽपि, गुणैः प्राज्योऽपि सोऽन्यथा । मां न सन्मानयेज्जातु,
निम्ना (धा) ने नहि नाम्रकम् ॥१९॥ ध्यात्वेति राज्यमत्र स, स्मरन्नप्यस्मरन्निव । सम्यग् न सस्मार विस्मारणात्तत्सम
मावतः ॥ २० ॥ पदे पदे लीलया स्याद्गतप्रत्यागत धियाम् । धियांवरस्याप्यस्यासीत्र तदा तत्कथञ्चन ॥ २१ ॥
तत्स्वैवदेवनामेवस्यमूक्रष्टपद स तत् । धिक् प्रागदुष्कर्मसोन्मादप्रमादमदिरान्धताम् ॥ २२ ॥ सोऽनन्यग

तिकः प्राग्यत्, स्वगासिर्गतमांस्ततः । प्राहु तं मन्मनम्यु स्वपन्धुमम्बुधिमम्बुवत् ॥ २३ ॥ परीक्षार्थी परीक्षार्थमथा
छाङ्गनिमित्तवित् । मूत्वा प्राहुः पुरः मातर्याल स्वाक्पातवानिति ॥ २४ ॥ ज्ञानेन जाने मूआनेऽनुमानेनानुमेय
वत् । वासभवासतरिम्यवस्वेभ्यर्योर्जनादि ते ॥ २५ ॥ सङ्केतैश्चामुनाऽऽश्रयेनिकेतैर्जल्पितैर्नृपः । चमत्कृतः स्मृत-
भ्रातृवियोगः सास्त्ररग् जगौ ॥ २६ ॥ कास्ते कथ भो ! मद्बन्धुः, कदा संगस्यते च मे । सोऽप्याह सुरवत् स्वैरं,
विहरन् स सुखी भृशम् ॥ २७ ॥ सङ्गतिस्तु कथ तेन, सद्यः सम्पत्स्यतेऽत्र ते । यद्विष्णुविधुनेवाशोर्वरवरविहा
रिणा ॥ २८ ॥ यथा वियोयमास्सोऽपि, सम्पद्येत सदापि । वैषयिक्यशक्तीनां, नैव किञ्चिद्गोचरः ॥ २९ ॥
किन्तु भ्रातुः सङ्गतिस्ते, नैव सङ्गतिमर्हति । कथ ज्येष्ठः कनिष्ठस्य, सोढा सुग्रीविमीदृशीम् ? ॥३०॥ वाणीमभा
णीत्क्षोणीमान्, मा भाणीर्भद्र ! भेदकृत् । विस्तरैव हि राज्यस्य, संजिगांसोऽस्मि बन्धुना ॥३१॥ सोऽपि कोऽपि
निरीक्षेषु, रेखामुत्कीर्णकेषु च । चिरशोर्मे मोज्यबभ्राज्य, यः स्वस्मिन्याय्यमप्यदात् ॥३२॥ स साम्राज्यासिसमये,
मयाऽशोध्यत सर्वतः । तथाऽपि क्वापि न प्रापि, पापिनेव निधिर्गतः ॥ ३३ ॥ तस्सङ्गमावधि च्छत्रं, धारये नैव
वीजये । भराजचामरे चैत्यमहीपममिग्रहम् ॥ ३४ ॥ तस्काऽपि शक्तिश्चेत्ते सत्, सम्यस्येवार्यमानय । सोऽप्या
ख्यदीक्षस्वाकर्पमिपपा कर्षयामि तम् ॥ ३५ ॥ चक्षुः प्रमवभूत्तिरोभूय रयात् क्वचित् । जयः साक्षादमू-
दभ्रान्तर्मूर्तिर्मानुमानिव ॥ ३६ ॥ जय जयबन्धुमन्तमिवावेक्ष्य व्यसिष्मयीत् । प्रामोमोवीन्मेदिनीमाननसीव
सम्भ्रमात् ॥ ३७ ॥ ततः स्वहृत्तमुक्षीर्ये, कार्यैर्विधिनिवार्य च । राज्यावानाम्रहं राज्यमभ्रमस्माश्रयोऽग्रहीत्

॥ ३८ ॥ रवेरिव विधुः सिद्धसार्थः श्रीविजयाश्रयः । ततो निर्गत्य सगतिर्गतो भोगापुरीं पुनः ॥ ३९ ॥
जजाप च स निष्पापधृतिस्तत्र भवमारतः । सप्तमेऽह्नि नृपं नैमित्तिकस्तत्रैत्युवाच च ॥४०॥ पत्नावालानमुन्मूल्य,
पट्टहस्ती पुरीजनान् । मत्तोऽधुना धुनात्युच्चैरुन्मथायायुधवद् द्रुमान् ॥ ४१ ॥ तदा तव ध्रुवं भावि, पञ्चत्वं पञ्चमे-
ऽहनि । परलोकार्थपाथेयं, तद्यथाऽर्हमथाचर ॥ ४२ ॥ ततो वदत्यनुद्वेगसवेगं सत्वमुन्नृपः । प्रादात्तस्मै तुष्टिदा
नमिपोचैः शुभशंसिने ॥ ४३ ॥ जयाय तनयाभायायास्या राज्यं तवैव सः । सद्गुरोर्व्रतमादत्त, दानादानविदां
वरः ॥४४॥ अचिराचिरकार्यस्य, चिकीर्षैकाग्र्यतोऽनिशम् । कायोत्सर्गात् पञ्चमेऽह्नि, प्रापोच्चैः पञ्चमीं गतिम्
॥ ४५ ॥ साम्राज्यचिन्तां कृत्वाऽथ, जयः प्रति जयापुरीम् । प्रचचालाचलां चक्रे, चमूचक्रैश्चलाचलाम् ॥ ४६ ॥
अभ्यमित्र्यमिवाभ्येतमेतमेतन्नृपश्वरैः । जानन् जामातरं पुर्यामानयद्बहुमानतः ॥ ४७ ॥ स्वपुत्राणां कृपात्रत्वा
तस्मै पात्राय सोऽप्यथ । राज्यमुत्सृज्य प्रव्रज्य, शिवसाम्राज्यमागमत् ॥ ४८ ॥ प्राग्भवप्रेमदुर्मोचतया काम-
लतां च सः । द्वयोस्तृतीयां कृतवान्, राज्ञीं राज्ञो न किं भवेत् ? ॥ ४९ ॥ निकृतीनां कृती वध्वा, तां स्वधां निर-
कासयत् । सदेशतस्तोपरोपौ, महतां न हि निष्फलौ ॥५०॥ तत्राप्यसौ राजसूत्रमासूत्र्य स्वप्रियावियुक् । प्रेम्णा
कृष्टो रश्मिनेव, गौरागाद्विजयान्तिके ॥ ५१ ॥ भियाभिस्तिसृभिस्ताभिः, सुभगेनेव शक्तिभिः । पराक्रमेणेव
नयो, जयेन विजयो व्यभात् ॥ ५२ ॥ प्राप्ते चागतमात्रेण, प्रेम्णाऽमात्रेण तेन ते । ददे सुवेपदा मण्योपच्यौ
दिव्यनिधी इव ॥ ५३ ॥ जयन्तीमपि रूपर्ध्या, जयन्ती विजयाह्वया । जयन्तीपुरीशपुत्री, स्वयंवरेऽवृणीत माम्

॥५४॥ स्वम रम्भेत्यन्यचोत्को, जयन्त्यां विजयो जये। न्यस्य राज्य मणीवास्म्या, स्वगत्याऽगात् खगेन्द्रवत् ॥५५॥
कुरूपः कुब्जरूपम, कौतुकात्कौतुकार्थिकैः। गुरुवक्रेष्ठितः स्पष्टमासिष्टोच्चैः स्वयंवरे ॥५६॥ दीर्घोष्ठवन्तसूक्ष्माक्षि
चक्रनक्रकरादिभिः। तस्यचेष्टोक्तिभिश्चेष, कस्य हास्याय नाभवत्? ॥ ५७ ॥ सन्मञ्चस्थनरेशालिशालितेऽसौ
स्वयंवरे। मन्दुरायां च्यभाद्वाजिराजिन्यामिव मर्कटः ॥ ५८ ॥ विश्वोत्तरस्वमीप्सुश्चेत्सद्भिश्चप्रवर वरम्। स्वयं
वरे कुब्जरूप, त्व वृणीथाः स्वयंवरे। ॥ ५९ ॥ समान्तर्गोत्रवेश्येत्याविश्च विष्टाधिकाऽथ सा। तत्रागात्स्वर्गिक
न्येव, नृपानस्था नृपाङ्गजा ॥ ६० ॥ युग्मम् ॥ क्ष्मास्वामिनां हग्मनांसि, साहरत् पश्यतोहरा। तान् ते तथा
ऽप्यहो प्राणेश्वरीमेव चिकीर्षवः ॥६१॥ वेत्रिणीवर्णितान् सर्वानुर्वीशान् सश्रियोऽपि सा। साकूत्या व्यमुचद्भ्रूभी,
निर्गन्धोत्फुल्लपुष्पवत् ॥ ६२ ॥ माऽमीषां पङ्क्तिमेवोऽभूदितीयासिलराजमुक्। खेदात्साऽख्यायि वेत्रिण्या, ननु
कञ्चमिमं वृणु ॥६३॥ तदुक्ति सत्यतां नेतुमिव समाश्रयेण सा। वरस्रज कुब्जकण्ठे, निदधे च वधे मुदम् ॥६४॥
सोत्कर्षप्याभूतः कुब्जः, क्ष्माभृत स्यातर्पास्तदा। रे दुर्भगाः स्वदौर्भाग्य, द्विष्ट द्विष्टास्तु माऽस्म माम् ॥ ६५ ॥
श्रुत्वेत्युच्छृङ्खला केऽपि, नृपाः कोपाद्विपा इव। कन्यां हर्तुं प्रहर्तुं तं, प्राग् वधायुद्धायुधाः ॥६६॥ त्रैलोक्यत्रासकृत्स्कि
भ्रूपदर्शनतस्त्वसौ। दर्पेक्षवघूरपभीक्षासयामास तान् द्रुतम् ॥६७॥ कन्यापितृमहीमर्तृप्रभृलोकेष्वय क्रमात्।
स्वकार्यचिन्तामात्सर्यभयाश्चर्यमपास्मसु ॥ ६८ ॥ स्वविमानविमानस्वच्छद्विमानममानरुक्। तत्रैक प्रापवुत्सीयां
वावीदन्वीय कोऽप्यतः ॥ ६९ ॥ युग्मम् ॥ जय श्रीविजयक्ष्माप!, क्ष्मापमूर्द्धन्यपन्यपी । दक्षिणश्रेण्यधीशः

स्वकन्योद्वाहनहेतवे ॥७०॥ त्वामाह्वयति सम्मः, प्रससीवचसाऽञ्जसा । उत्कृष्टकन्या सुत्कृष्टवरस्यैवोचिता मता
॥७१॥ युग्मम् ॥ त्वामानेतु विमानेन, मान्यं मामेव खेचरम् । प्रैषीत् सद्यः प्रसद्यैतां, प्रार्थना सत्कुतार्थय ॥७२॥
अथो सहाप्यास श्वोत्तरश्रेणिप्रभोः पुमान् । तथैव कन्योद्वाहार्थं, विजयाह्वयमाह्वयत् ॥७३॥ सम निमन्त्रणमहो,
प्रावृषेण्यस्येव सुत्कृते । प्राक्पुण्यलभ्यमागल्भ्यसम्भवे किं भवेन्न वा ? ॥ ७४ ॥ ज्ञातोऽसीत्यथ स सद्यकुञ्जरूपः
स्वरूपभृत् । रामः सीतामिव प्रीत्योपयेमे प्राक् पतिं वराम् ॥७५॥ श्रेणिद्वयेशयोः कन्ये, अप्युपायस्त स क्रमात् ।
वैजयन्तीं जयन्तीं च, रतिप्रीती इव स्मरः ॥ ७६ ॥ श्रेणिद्वयेऽपि श्वशुरोपरोधेन सगौरवम् । कियत्स्थित्या स
निस्वार्द्दैवस्यान्वीतः कृतार्थ्यभूत् ॥ ७७ ॥ भौतादिवत्प्रभूतानामुपहासाध्यसत्फलः । स्वभः सुबीजवत्तस्य, सुस्तरो
सरसस्फलः ॥७८॥ खेटेन्द्रयत्खेटनानायिमानाद्विश्रियाऽथ स । स श्रिप्रियः स्वपुर्यागात्, पौरह्रसोत्कगौरव ॥७९॥
उर्वीमुर्वीमथानुर्वीकुर्वन् सैन्यैः स साग्रजः । यां विध्यामृद्धिमानैश्च, मतस्वे पितर प्रति ॥ ८० ॥ वृत्तान्यवैन्यै
स्तत्सैन्यैरजन्यैरिव तत्पिता । विह्रस्तस्त ससिमित्तोत्साहितम्राम्यपेणयत् ॥ ८१ ॥ वाहिन्याः सङ्गमे युद्धतीर्थे
श्रद्धालुरुग्रकैः । सर्वान् निवार्य विजयः, सर्वैं सार्द्धमयुध्यत ॥ ८२ ॥ महोपघ्याऽस्त्रालगनात्, सैन्यान् सर्वान्
पितु स तु । छित्त्वाऽस्त्राण्यसिलान्यस्त्रैर्निरस्त्रान स्त्रीरिव व्यधात् ॥ ८३ ॥ वीतास्त्र एव वसाऽपि, विशास्त्र इव
शास्त्रिकः । विलक्षः क्षमितोऽभ्येत्य, विजयेन जयेन च ॥ ८४ ॥ पुत्रौ सोऽप्युपलक्ष्योच्चैः, प्रेम्णाऽऽश्लिष्योल्लस-
न्मुदा । उत्कल्लोलाम्बुधेर्लीलां, व्यधाच्चिरमथाभ्यधात् ॥८५॥ वत्सौ ! तत्सार्थकान्योक्तिवाचिनी वां वियोगतः ।

दुःखोत्कर्षेण मे वर्षशतं कल्पशतं स्वभूत् ॥८५॥ स्वभाविवृत्तान्तमथो, यथावद्विनिवेद्य सः । मृत्येऽपि पुत्रयोश्चि त्र, सौमनस्यं परं व्यधात् ॥८७॥ सून्वोर्वृत्तान्मिथः प्रोक्तावस्युर्वैर्विस्मितः पिता । पुरे परैर्महैर्नीत्वा, तौ राज्याय न्यमन्त्रयत् ॥ ८८ ॥ विजयोक्त्या जये राज्यभारमारोप्य सप्रियः । चित्र निर्वृतये तीर्थं, प्रसमार पमार सः ॥ ८९ ॥ तद्राज्यचिन्तामायोज्य, नयधीरे महाशयः । नित्य हरेर्लीलास्याद्विजयस्यान्तिके जयः ॥ ९० ॥ कुर्वन् दिग्विजयमतो, विजयः सजयो द्विधा । योगत्रयमिषर्पिः क्ष्माम्बण्डत्रयमसाधयत् ॥ ९१ ॥ तत्राज्ञा विजयपुरे, ख्याते कामपुरेऽथ सः । राज्यं चक्रे चिरं सेव्यो, नृपैर्वैर्वासुदेववत् ॥९२॥ धर्मसूनुभीमसेनचरित्रैरर्जुनश्च यः । जनार्दनरतिश्चित्र, तथापि क्वापि नाजनि ॥९३॥ विहरन् जिनकल्पीव, केवलः केवलश्रिया । तत्र प्राप्तोऽथ तद्गु सा, भेजे रविरिव त्विषा ॥९४॥ भणतः परमर्षोऽसौ, विजयेन जयेन च । सप्रियेणोपदेशान्ते, पृष्टप्राग्भवमित्य वच ॥ ९५ ॥ विभूतिभ्राजितौ भूतमर्दुचक्रातराधुमी । भानुभामौ परौ प्रेम्णाऽभूतां भूतिलके पुरे ॥९६॥ पित्रोः माद्यदिनेऽन्येद्युः, परमान्नपिटासिनी । शुन्येका न्यपतन्नमकटिस्ताभ्यां प्रकुहिता ॥ ९७ ॥ मरिपसमूहे श्रान्तः, पदभग्नु क्षुधार्दितः । साश्रुरेत्य तयाऽऽलाप, सगिरोर्घैस्तदा व्यधात् ॥ ९८ ॥ साश्चर्येष्वथ सर्वेषु, तत्रागात् ज्ञानवान् मुनिः । पृष्टश्चाभ्यामभाषिष्ट, भो ! भो ! वां पितराविमौ ॥ ९९ ॥ प्राग् मिथ्यात्वात्ससमवेष्वेव जातौ हतौ द्विमिः । भवेऽष्टमेऽस्मिन्नकामनिर्जरातोऽधुना युवोः ॥ १०० ॥ जाता जातिस्मृतिरथो, आद्यमस्मत्कृते यवः । वदोय भौ तु विग्भीश्चमिथेतौ मातुर्मिथः ॥१॥ युग्मम् ॥ तत्पत्स्या हन्त मिथ्यात्वं, सम्यक्त्व अपता

हता। प्रवरं सर्वधर्मेभ्यः, सुकरं च शिवकरम् ॥ २ ॥ श्रेणिकादिकथवेककसम्यग्दर्शनाञ्जिनरमाऽपि न दूरे।
पूर्वकोटितपसोऽप्यतितीव्राद्, ब्रह्मलोकगतिरेव विना तत्॥ ३॥ श्रुत्वेति प्रत्यपद्यन्त, भानुभामादयोऽखिलाः।
प्रायं प्रपद्य मद्दिपशून्यौ तु स्वर्गते द्रुतम् ॥ ४ ॥ ताभ्यामभ्येत्य दिव्यर्द्धिदर्शनाद्भानुभामयोः । देवादिसत्त्वश्रि
तयाऽऽराधनैकाग्रताऽभवत् ॥ ५ ॥ सौख्यलालसयोर्धर्म्यक्रियासलसयोस्तयोः । विष्णोरिवैकममवज्जगज्जैत्र
सुदर्शनम् ॥६॥ तयोः प्रिये च प्रिययोर्द्वे सख्यौ च तद्गिरा। सम्यक् सम्यक्त्वमभजन्, कोऽपि सत्सङ्गतेर्गुणः
॥७॥ शङ्का सकृत्कुतीर्थोत्थ्या, भानोस्तत्त्वत्रयेऽप्यभूत्। प्रोज्ज्वले कालुष्यमियैतज्जिन्वादि च ना(स्विद्य) जनि ॥८॥
भानोर्भार्या कुलभव, सुग्रीवकुलसम्भवा। चक्रेऽन्तरान्तरा क्षीणां, स्यान्मदः करिणां च यत्॥९॥ आयुः समाप्य
सौधर्मं, प्राप्य च्युत्वा च ते क्रमात्। युवां प्रियाश्च युवयोस्तिस्रस्तिस्रोऽभवन्निमाः ॥ १० ॥ तत्त्वत्रयाराधनाद्वां,
दिव्यवस्तुत्रयी तथा। ईदृक् प्रियात्रयी स्वर्णत्रयीराज्याप्यजायत ॥ ११ ॥ त्रिः शङ्कया दिव्यवस्तुनिर्गमापत्रपा
चभूत्। जयस्य प्राक् प्रियायास्तन्मदाप्नीचकुलादि च॥१२॥ तेऽथ श्रुत्वा निजा जातिं, स्मृत्वा धृत्वा हृदात्मताम्।
यतिधर्मैषिणः श्राद्धधर्ममाददिरे मुदा ॥१३॥ अयोध्यां विजयोर्वीशः, सम्यक्त्वाविप्रवर्त्तने। एकातपत्र चक्रेऽ
ईदृक्सं किं न भूपाश्रया? ॥ १४ ॥ चतुःश्रद्धानादिभेदैः, ससपर्याऽस्य दर्शने। शुद्धिस्तथाऽभूत्स यथा, विपमेऽ-
प्यस्खलन्न हि॥ १५ ॥ नानाजिनार्चाचैत्यार्चैर्यात्राभिः सङ्घभक्तिभिः। सर्वमिथ्यात्वहानाच, स सम्यक्त्वमदी-
दिपत्॥१६॥ विजयाद्यास्तस्य देव्यस्तिस्रस्तासां त्वमी क्रमात्। नन्दना नन्दनानन्दसुन्दराह्वाह्वयोऽभवन् ॥१७॥

अथ च–भाविदेहेऽन्यदाऽर्हन्त, शक्रोऽप्राक्षीत् प्रभोऽधुना। अर्हद्धर्मैकदृढधीर्गृही कोऽप्यस्ति भारते ?॥१८॥अब्धौ
लवणपूर्णेऽथवत्तस्मात्रास्य च का भवेत्। सम्बन्धो भारते मे च, तेन पृच्छा मयाऽभया ॥ १९ ॥ बभाषे भगवान्
वज्रिन्!, सधर्मे बजभृत्तम। राजाऽऽस्ते विजयपुरे, साम्प्रतं विजयाह्वय ॥२०॥ स सम्यक्त्वगुणादेवैरप्यकम्प्यः
सुमेरुवत्। श्रुत्वेति मुदितः स्वर्गिपतस्तः प्रशशास तम्॥२१॥तथ्यामप्यन्यथा कर्तुं, मिथ्यादृक्कोऽपि तां गिरम्।
निर्ययौ निर्जरोऽनास्था, यिक्क सर्वज्ञवचस्यपि ॥ २२ ॥ प्राप्तोऽसौ विजयपुरे, जैनावधूतरूपभृत्। राजानं रञ्जया
मास, कलाद्यभ्यासकौशलात् ॥ २३ ॥ वशीकृतं क्षोणीशोऽप्यनिशं तद्गुणव्रजैः। गुरोरिव विनीतात्मा, तस्य
चोक्त समानयत्॥२४॥ कदाचिद्धर्मसद्भावसावर क्ष्मापुरन्दरम्। निगोदादिपदेऽप्युच्चैः, स सन्देहानदर्शयत्॥२५॥
तत्त्वप्रकाशकुशलः, क्ष्मापस्तान् युक्तिशुण्डया। तूर्णं तरूनिव करी, समूलमुदमूलयत् ॥ २६ ॥ ततोऽवधूतः
क्ष्माकान्तमभाषत सुभाषितैः। सर्वज्ञैः कोऽप्यहो धर्मः, शर्मदः कर्ममर्मभित् ॥ २७ ॥ परमुर्वीश! निर्दोषु,
सम्यक् शक्येत केन सः ?। सज्ञधारागतिप्रख्य, क्ष्मापोऽप्याख्यन्महर्षिभिः ॥२८॥ युग्मम् ॥ मूर्द्धानमवधूयैनम
वधूतोऽभ्यधात्ततः। धर्मोऽस्त्वयं एषेषामन्तः को वेद का स्थितिः ?॥२९॥ भूपः प्राह महाभाग!, व्यग्रधीः किमिद
दृग्। विसंवादोऽर्हन्मुनीनां, न काप्यर्हद्गिरामिव ॥ ३० ॥ सोऽपि माहात्म्यमप्येषु, पूर्वमेवमवेदिषम्। अन्यथा
दर्शनात् सम्प्रत्यन्यथा किं स्ववादिषम् ॥३१॥ देव पव स्वयं यद्वा, दक्षधीस्तान् परीक्षताम्। यतीन् कोऽपवदेद्दुर्धी
रार्हतांस्तु विशेषतः ॥ ३२॥ क्ष्माभृदाख्यत् परीक्षा भोः!, सुनिर्णीतगुणस्य का। साऽप्यस्तु वा यथायोगं, यदि

तेऽत्रापि सदयः ॥ ३३ ॥ अथ तत्रापपुर्गच्छयुजः केचिन्मुनिसत्तमाः । नृपाध्येस्तत्सपर्यातः, पर्यास च जनुःफलम्, ॥ ३४ ॥ तद्गुणान् वर्णयन् क्षोणिरमणोऽमाणि तेन च । श्लाघाऽप्येषां परीक्ष्यैव, मणीनामिव युज्यते ॥३५॥ परीक्षणं च सर्वेषां, स्पष्टं स्यात्सच्चर्यया । तत्सन्निधौ वसत्सात्तु, युक्तं कुर्याः परीक्ष्य च ॥ ३६ ॥ इत्युच्चैः प्रेरितः पृथ्व्याः, पतिस्तस्यां तमश्चये । निर्ययौ नष्टचर्यार्थी, रामचञ्चद्यामवेषभृत् ॥ ३७ ॥ महर्षिमेकमेकत्रापश्यच्च सह वेश्यया । मद्यामिषास्वादसक्तं, सुव्यक्तं विटचेष्टितम् ॥ ३८ ॥ स प्रेक्ष्य रोपमन्दाक्षनिर्वेदोद्वेगविभ्रमैः । धर्मैकभावोऽप्युर्वीभृदन्यमूलावसङ्करम् ॥ ३९ ॥ विमृश्य च विशेपज्ञस्तममापत भूपतिः । आः किमेतन्मुनेऽनर्हं, निस्सीममसमञ्जसम्? ॥४०॥ क्व कीर्त्तिस्सुरेन्द्रस्य, क्व विष्ठाकीटकस्य च । क्व चारित्रं पवित्रं ते, क्व चेदं दुष्टचेष्टितम् ॥४१॥ किं ज्ञानं दर्शनं किं वा, किं चारित्रं च किं तपः । को जपः का क्रिया का श्रीः, का भीरेवं करोषि यत् ॥ ४२ ॥ धिक्त्वां धिक् ते च दुर्बुद्धिं, धिक् ते वेषं च दाम्भिकम् । धिक् ते निःशङ्कचित्तत्व, धिग् भवं विपर्यांश्च धिक् ॥ ४३ ॥ अत्रापि च परत्रापि, भविता भवतः क्व नु । स्थानं हाऽनन्तदुःखानि, सोढा मोक्षाऽन्यतो कथम्? ॥ ४४ ॥ निष्कलङ्कस्य धर्मस्य, कलङ्कोद्भावनात्त्वान् । अनन्तदुःखमभव, अनन्तं भ्रमिता भवम् ॥ ४५ ॥ तस्त्वक्ष । तस्माद्वेतस्माद्विरमाशु कुकर्मणः । किं तस्य तेन विज्ञात, यः कुकृत्ये प्रवर्त्तते ॥ ४६ ॥ एव मुक्तस्मुर्वीश, मत्यब्रवीद्व्रतिब्रुवः । हंहो तत्त्वार्थमज्ञात्वा, किं मामेव विभापसे? ॥ ४७ ॥ रीतिरेषैव सर्वेषां, रहोऽन्यव्रतिनामपि । एतत्कर्तुं हि कः शक्तः?, पश्यन् ज्ञास्यसि वा स्वयम् ॥४८॥ पतितः पतितानेवान्यानप्याख्यातवो

इहा । ध्यायन्नेव नवेषोऽग्रे, गच्छन्तेकमपेक्षत ॥ ४९ ॥ परस्त्रीलम्पट श्वेतपट चौर्यपर परम् । शौनिकापितमेकं च, तथैक धीवरापितम् ॥ ५० ॥ युग्मम् ॥ भ्रष्टा निकृष्टाः सर्वेऽपि, ध्रुवमेते गणाद्बहिः । कर्पणीया गुरोः पार्श्वा तूर्णं विशीर्णपर्णवत् ॥५१॥ चिन्तयन्निरुथ पार्थिव मथनमाययौ । तावत्सान्तःपुरास्तेषां, गुरु निर्यान्तमैक्षत ॥ ५२ ॥ ततोऽभ्युद्गमनीषवः सावेगमाव्रजन् । यथादृष्टमभापिष्ट, पृष्टस्तेन कलावता ॥ ५३ ॥ सोऽप्युवाच यथोऽस्माकं, येवद्वस्कृयमन्यथा ? । पूर्वेष्विव तवैतेषु, मा मूढिमन्मवान् भवान् ॥ ५४ ॥ राजा मार्गानुगामित्वाद्धृपञ्जपत्तुवर्ता निजाम् । अथान्यथावसम्भाव्यमेतेष्वेतत्रसीव भोः ! ॥ ५५ ॥ ईदृक्कुकृत्यमेतेभ्यस्तरणेरिव तामसम् । सोपपत्तिकतां याति, युगान्तेऽपि कथं स्वहो ? ॥ ५६ ॥ साक्षाद्वीक्षितमेतत्वातथ्य वा तथ्यमेव वा । तथ्यत्वेऽपि हि सर्वेषु, युक्ताऽनास्था न साधुषु ॥ ५७ ॥ सार्थः कश्चिच्चौरधाटीरूपः प्रावर्शि तर्हि किम् । सार्थाः सर्वेऽप्यविश्वास्या, येवं व्यवहृतेः क्षितिः ॥ ५८ ॥ चारित्रवन्तस्तत्पूज्या, एव सन्ति च ते ध्रुवम् । नन्वस्यास्त मतधारे, मयेभिहृषतैव भो ! ॥ ५९ ॥ कलावानूचिवान् राजन् !, दृष्टिरागस्तवाप्यहो । तेषु व्यलीके दृष्टेऽपि, त्रियां कामीव रज्यसे ॥ ६० ॥ दृष्टिरागे च नो धर्मः, किन्तु तत्त्वस्य निर्णये । राज्ञोक्त निरणैष तत्सर्वज्ञोक्त न संशय ॥ ६१ ॥ तेनोदिता च युक्ता, यतीनामेव तां पुनः । मिथ्याकुर्वन् भवान् मिथ्यादृष्टिर्नोलापमर्हति ॥ ६२ ॥ दम्भमूर्निष्फलारम्भस्तपोत्स्याऽसौ विलक्षहृत् । ययौ क्वापि नृपोऽप्यै(न्वै)पीन्मिथ्यादृक्त्वात् पुनर्न तम् ॥६३॥ अन्यदा तत्र धात्रीशमश्रीरूपप्रभृतीन् जनान् । दिव्यः कोऽपि पुमानेत्य, सभे प्रत्येकमित्यवक्॥ ६४ ॥ अहो

अस्मिन् पुरे रौद्रः, सर्पाणां कोऽप्युपद्रवः। नितान्तं भविता क्रुद्धकृतान्तक्रीडिताकृतिः ॥ ६५ ॥ नागेन्द्रमूर्तेः सुस्फूर्तेश्चैत्येऽभ्यर्चनमादरात्। एक एव प्रतीकारस्तस्य व्याधेरिवौषधम् ॥ ६६ ॥ प्रातर्नैमित्तिकोऽप्येकः, प्राप्तः क्ष्मापतिपर्षदि। तथैव कथयामास, संवादः कोऽप्यहो द्वयोः ॥ ६७ ॥ नागराः सादराः सर्वे, ततस्तं नैकमेधया। पूजया पूजयामासुर्मृत्युभीः कस्य वा न हि ? ॥ ६८ ॥ राजा प्रजाभिः सर्वाभिः, प्रेर्यमाणोऽपि नो पुनः। सम्यक्त्वैकरसिस्तस्याः, पूजायां स्वमनोऽप्यदात् ॥ ६९ ॥ दध्यौ च शुद्धधीर्नूनं, कर्मायत्ते शुभाशुभे। तत्क स्वधर्मं मलिनीकुर्यां वैदिकशङ्कया ? ॥ ७० ॥ ततोऽभितोऽपि प्रोत्सर्पद्दर्पाः सर्पाः नृपालये। सर्पन्ति स्म करालास्याः, कलिकाले खला इव ॥ ७१ ॥ फूत्फूत्कारकृतः स्फारस्फटान् स्फुटयमानिव। व्यालोक्य राजलोकस्तान्, समस्तस्त्रस्तवांस्ततः ॥ ७२ ॥ ततः प्रयातः क्ष्माकान्तः, सान्तःपुरपरिच्छदः। सौधान्तरं सुधीस्तिष्ठेत्, क सक्लेशास्पदे पदे ? ॥ ७३ ॥ दुष्कर्माणीव तत्रापि, प्रादुरासँस्तथैव ते। जाते स्थानान्तरेऽप्येवं, व्यमापीत्यखिलैर्नृपः ॥ ७४ ॥ धिग् धिक् कदाग्रहं राज्ञः, प्राज्ञस्यापि यतोऽमुना। अनल्पोऽल्पकृतेऽनर्थः, स्वस्यारेभे स्वघातुना ॥ ७५ ॥ क्लेशशान्त्यै किमद्यापि, नागार्चा नाचरत्यसौ। पश्चादपि विना वैद्यं, व्याधिग्रस्तस्य का गतिः ? ॥ ७६ ॥ इत्यादि साक्षादप्युक्तो, मध्यार्थैर्नृपतिर्दृढः। नानर्च तां ततः क्रुद्धः, स्वप्ने नागो जगौ नृपम् ॥ ७७ ॥ रे रे मामवजानासि, न मे जानासि विक्रमम्। रुष्टः साक्षात्कृतान्तोऽस्मि, तुष्टः कल्पद्रुमः पुनः ॥ ७८ ॥ अन्वयव्यतिरेकाभ्यां, पश्यन्नपि फलं स्फुटम्। न मामर्चसि सम्यक्त्वकदाग्रहगृहीतहृत् ॥ ७९ ॥ अद्यापि प्रातरुत्थाय, स्वय

पूजय मां न चेत्। त्वां सकान्तासुतं नेता, कृतान्तातिथितामहम् ॥८०॥ साक्षादिवैष नागेनाख्यातेऽपि क्षिति
नायकः। मतश्रितिर्भियेयेष, नैव याचस्तवर्चनाम् ॥८१॥ तावद्द्विघाऽपि कालेन, व्यालेन नृपनन्दनः। दंशतो दुष्ट
दंशेन, मुमूर्च्छास्यन्तमाशु च ॥८२॥ युग्मम् ॥ तथावस्थे तथाऽप्युर्वीनेतुश्चेतसि तत्क्षणात्। पश्चात्त्यापि दुष्टाविष्टा
पुत्रदशां वृधौ ॥ ८३ ॥ एव शापपरौ पुत्रौ, द्वे वैश्याचपरे अपि । तथाऽभूवन्न तु क्ष्मासुगमनोऽक्षुभ्यन्मनागपि
॥ ८४ ॥ मन्त्रतन्त्रोपमीजाते, जाते तत्र च निष्फले। राजाविलोकेऽस्तोकेन, शोकेन विनिपीडिते ॥ ८५ ॥ किं
कर्त्तव्यविमूढेषु, प्रधानपुरुषेषु च । दैवादिष्ट इवागात् प्राक्, कोऽपि गारुडिकाग्रणीः ॥ ८६ ॥ युग्मम् ॥ समये
क्ष्मैव जातितज्ज्ञोऽभिलाषा नृपात्मजः । अब्रवुः पुपुषुश्चैनं, स्वागतादिकसत्कृतेः ॥ ८७ ॥ सोऽपि प्राह महीनेतः!,
एतेषां विषम विषम्। असाध्यमिव किञ्चित्तु, प्रतिकुर्वे स्वशक्तितः ॥८८॥ इत्युक्त्वा कन्यकामेकां, पात्रीकृत्याभि
मन्त्रितैः। अक्षतैरक्षतैराच्छोटयामास स यावता ॥ ८९ ॥ तावताऽवातरत्तत्र, दैवत सोऽप्युवाच तत् । प्रसीद
सीदतस्तुकानेतान्मुञ्च फणिप्रभो! ॥९०॥ युग्मम् ॥ तेनाप्यभाणि भूपोऽयं, सर्वदाऽपि कदाग्रही। अवजानाति जातिं
नस्तद्वधाक्षमिमान् रुषा ॥९१॥ सर्वथा तत्र मुञ्चे च, प्रत्युत क्ष्मापमप्यमुम्। मङ्क्षु दङ्क्ष्यामि दक्षात्मन्!, दिव्या
हि विषमा रुषः ॥ ९२ ॥ मान्त्रिकः स्माह सञ्जातमियताऽपि रुषः फलम् । प्रसादमथ कुर्वीथाः, प्रणामान्ताः
सतां रुषः ॥ ९३ ॥ भोगी जगौ जगन्मान्य!, मान्यसे केन ते न गीः?। न मां नमस्यपि परं, जाग्रसौ शुष्कका
ष्ठवत् ॥९४॥ तन्मे भवेत् प्रभूतस्य, कोपाग्नेः प्रशमः कथम्?। प्रत्यर्थिनोऽपि मुच्यन्ते, प्रणता एव नान्यथा॥९५॥

धात्रीशं माश्रिकोऽप्यूचे, नृप ! चेत्प्रतिमाव्रतः । अनर्थाञ्चुट्यसेऽमुष्मात्, पर्याप्तं किं न नस्तदा ! ॥ ९६ ॥ मनो विना प्रणामे च, न काचित्क्रियमक्षितिः । प्राणिनां मन एवेह, प्रमाणं पुण्यपापयोः ॥ ९७ ॥ अप्याकारा नृप सुराभियोगाद्याः स्मृता व्रते । मूमीगृहमपि क्वापि, न भवेद्वारमन्तरा ॥ ९८ ॥ मणमात्रा शुक्कृते, स्वीकृतस्यान्यथाकृतिः । गुणायैवाशनत्यागः, प्रत्यग्रज्वरिणामिव ॥ ९९ ॥ अत्रापि कश्चिद्दोषश्चेत्, प्रायश्चित्तात्तमप्यहो । निराकुर्याः क्षणेनास्य, काश्यं पथ्यादिनाविव ॥४००॥ उत्सर्गश्चापवादश्च, यतिधर्मेऽप्युभौ स्मृतौ । किं पुनः श्राद्धधर्मे भोः !, तवैकान्तग्रहो मुधा ॥ १ ॥ किञ्च–स्याद्वाद एव सर्वत्र, युक्तः स्याद्वादवादिनाम् । तेषामेकान्तधा वस्तु, मिथ्यात्वमिति गीयते ॥ २ ॥ त्यक्त्वा तदाग्रहं राजन् !, नागराजं प्रणम्य च । प्रोज्जीवय प्रियापुत्रान्, मुधैव कः स्वहिते सुधीः ! ॥ ३ ॥ इत्युक्ते माश्रिकेणार्हन्मतज्ञेन विशुधीः । सत्त्वगौरवगौरश्रीर्जगाद जगतीपतिः ॥ ४ ॥ वाच्यमेतद्धि निखिलं, विमल मति चेतसा । न प्राणान्तेऽप्यतिचरेद्धर्मं धीरः पुनर्मनाक् ॥५॥ अल्पस्याप्यतीचाराद्धर्मस्यासारतैव हि । अक्षिकण्टकमात्रेण, पुमान् पङ्गूयते न किम् ? ॥६॥ यच्छुद्ध्यै क्रियते प्रायश्चित्तं तत्त्याज्यमादितः । प्रक्षालनीयो यस्तस्य, पङ्कस्यास्पर्शनं वरम् ॥ ७ ॥ उत्सर्गमार्गेऽशक्तस्यापवादः प्रतिपाद्यते । अपवादोऽपवादाय, शक्तस्य तु सुनिश्चितम् ॥८॥ स्याद्वादोऽपि न निर्दिष्टः, पापकृत्ये कृतात्मभिः । स्याद्वादस्यापि नैकान्तवादः स्याद्वादिनां मतं ॥ ९ ॥ मवे २ प्रियापुत्रसयोगान् लब्धपूर्व्यहम् । न तु धर्मं कश्चित्त तत्त्यजेय तत्कृते कथम् ? ॥ १० ॥ सर्वेभ्योऽपि प्रिया प्राणास्तेऽपि यान्त्वधुनाऽपि हि । न पुनः स्वीकृत

धर्मे, खण्डयाम्यल्पमप्यहम् ॥ ११ ॥ तन्नो गारुडिकश्रेष्ठ!, शक्तिः काप्यस्ति ते यदि । जीवयैतांस्तदा नो चेद्वि-
चराशु यथारुचि ॥१२॥ व्यर्था वा प्रार्थनाऽप्येषा, कर्मायत्तं हि जीवितम् । मन्त्रैस्तन्त्रैश्च यत्नैश्च, तद्विना निष्फलै-
रलम् ॥१३॥ अथो गारुडिकः क्रुद्धोऽभिदधे वसुधेश ! धिक् । कथमहमहमस्त्वन्मामप्यधममन्यसे ॥१४॥ हितम
प्यहितं यो हि, मन्यते तस्य दुर्धियः । व्याधितस्येव सद्वैद्यविद्विषः स्यात्कथं शुभम् ? ॥ १५ ॥ क्वाहमद्य विपन्नो
स्त्वत्फलमाप्नुहि सम्प्रति । व्रजामो वयमप्येते, भोगिन्! कुरु यथेप्सितम् ॥ १६ ॥ इत्युक्त्वास्थितवान् गारु-
डिकमण्डलषिः पुनः । तद्योविदाय तत्सत्त्वप्रकर्षमिव वीक्षितुम् ॥ १७ ॥ निरुद्धमुक्तपानीयपूरवद्दूरतस्तराम् ।
महावेगः क्रुधा भोगी, भोगीशस्तमथाभ्यधात् ॥ १८ ॥ निःशङ्कचित्त उन्मत्त, इव रे सकलान्यपि । तृणायसि
न वै वेत्सि, विध्यशक्तिं सुदुःसहाम् ॥ १९ ॥ मूढः सुरद्रुनिर्घातमत्यन्तास्फालनं विना । न प्रत्येतीति मोहस्य,
स्वस्य पश्याधुना फलम् ॥ २० ॥ इत्युक्त्वा सोऽस्यजत्पार्श्वं, गात्रं जीव इव क्षणात् । अवन्ध्यशीघ्र निःशूक, दन्द-
शूकवपुर्भयम् ॥२१॥ दुःखौघोग्रत्वचोषेण, तद्वषेन नरेशितुः । भोगैः कालज्वरेणेव, प्राक् सर्वाङ्गमपीड्यत ॥ २२ ॥
शाट २ स्फुट तद, त्रोटं त्रोटं च सर्वतः । कृत्यामानमिवापत्तद्वृद्धा दुष्टचेष्टितम् ॥२३॥ शतधुटत्प्रतीकैश्च चक्र-
न्दौघैस्तथा नृपः । यथा श्रुत्वाऽपि तत्कैश्चिन्मृतमन्यैश्च मूर्च्छितम् ॥ २४ ॥ पीडितः पीडितेभ्योऽपि, दुःखिते-
भ्योऽपि दुःखितः । बीभत्सेभ्योऽपि बीभत्सस्तदाऽभून्नृपतिर्भृशम् ॥ २५ ॥ सावस्था नरकावस्थां, भूपेन प्राग्भवे
क्वचित् । अनुभूतामतितमां, विस्मृतामप्यसस्मरत् ॥ २६ ॥ तदा क्षतोपरि क्षारक्षेपरूप स भूपतिः । आसीः पुत्र-

प्रियामस्तुमथाख्यत सुदुःश्रवम् ॥ २७ ॥ तथा त्वनुयमूचे या, भूधवेनातिदुःस्थिता । सा तथैवोपमेया स्यान्नोक्तुं
शक्यानुनैष वा ॥ २८ ॥ पृथ्वीनाथं तथाऽवस्थ, स यथोपेत्य मान्त्रिकः । वन्मुग्रयन् कृपार्द्रस्तमिथोपैरित्यथोचत
॥ २९ ॥ अद्यापि स्वहितं हन्त, विचारय ! विचारय । नागं नम यथा स्वास्थ्यं, सर्वेषां विदधेऽधुना ॥ ३० ॥
कम्प्रोऽपि दुःखवात्याभिर्निष्प्रकम्पः स्वकर्मतः । प्राग्वदेव नृपोऽप्यूचे, क वा वाज्यश्रपः सताम् ? ॥ ३१ ॥ पुन-
र्जगौ जाङ्गुलिक, जगतीपतिपुङ्गवः । न सर्वथैतद्विषये, वाच्य किञ्चित्त्वया मम ॥ ३२ ॥ त्वामेक किन्तु पृच्छामि,
यदि जानासि तद्वद । जीवित पीडितोऽत्यन्त, धर्तुं नाल्पमपि क्षमे ॥ ३३ ॥ एतज्जातीयदुःखाहिदष्टस्तिष्ठेत् किय
त्क्षणम् । सोऽप्याह नृप ! षण्मासीमर्वाग् नायुःक्षयोऽस्य हि ॥ ३४ ॥ इयत्कालमिलापाल !, दुःखमत्यन्तदुस्स-
हम् । सहिष्यसे कथ हन्त, सुखेनेव वयस्त्वया ॥ ३५ ॥ धर्महेतोर्हि तद्दुःख, सुखीयस्तु महर्षिवत् । नृपोऽजल्प-
क्षिर्विकल्पमनल्पसत्त्वसत्पथः ॥ ३६ ॥ षण्मासीं षड्युगीं वास्तु, दुःख दुस्सहमप्यदः । धर्महेतुतया किन्तु, गुणा
येव भविष्यति ॥ ३७ ॥ स्वपञ्जनायां तु धर्मस्यानन्तैरपि भवैरपि । दुःखान्तो भविता नैव, गुणस्तत्र न कश्चन
॥ ३८ ॥ दुःख च दुष्कृताज्जात, तस्यैव क्षयतः क्षयेत् । सुकृतात्तत्क्षयश्च स्यात्तस्मिन् सुदृढो न कः ? ॥ ३९ ॥
इत्युच्चैर्वदमानेऽस्मिन्, पञ्च दिव्यानि जज्ञिरे । चेलोत्क्षेपः १ पुष्पवर्ष २, वसुधारा च ३ दुन्दुभिः ४ ॥४०॥ अहो
सत्त्वमहो सत्त्वमिति दिव्या च वागिति ५ । महिमा कोऽप्यहो अर्हद्यावदृढधर्मणः ॥४१॥ यमलम् ॥ राजापि
जातसर्वाङ्गसौस्थ्यस्तत्क्षणमैक्षत । पुरः सुरवरं भास्वद्भासुर स्वरसन्निभा ॥४२॥ सौस्थ्येन पत्नीपुत्राणां, राज्या

स्येव तवैव च । आसीर्सद्गुपयाम्न्ते, शुभे योगः शुभस्य हि ॥४३॥ देव एवमथावादीमरदेव! चिरं जय। विश्वेऽपि
त्वत्समः कोऽस्तु, सात्त्विकैकशिरोमणिः ? ॥४४॥ धन्यानामपि धन्यस्त्वं, श्लाघ्यः श्लाघायुजामपि। मान्यानामपि
मान्यश्च, नान्यस्त्वत्तो जगत्यपि ॥ ४५ ॥ राजन्! महाविदेहेऽर्हन्न् सुरपतेः पुरः । स्थाने ज्ञानेन जानस्ते, धर्मे
दार्ढ्यमवर्णयत् ॥ ४६ ॥ अधमस्त्वहमेवेह यस्त्वमधर्षस्तव । क्षोभाय साधून् दुःशीलान्, सुशीलानप्यवीरचम्
॥ ४७ ॥ मक्षेत्रयामाम्नुषिवत्तथाऽप्यन्तः स्थिरे त्वयि । क्षिप्त प्रापय मोर्मेरेवं सर्पाशुपलक्षम् ॥ ४८ ॥ मुनेर्व्य
लीकादेकस्मादन्यैर्येविपरिणस्यते । धर्मे विपर्ययणसीस्त्वं, पुनरेतावताऽपि न ॥ ४९ ॥ प्रियापुत्रकृतेऽप्यन्ये, कुकृ-
त्यान्यपि कुर्वते । सत्यातिचारभीस्त्वं चातृणीयस्तान् समम्यहो ॥ ५० ॥ चम्राभिमायया राजन्!, मायया-
प्यनया मया । चेमाचक्रमिये सर्हि, त्वत्माक्रामतु कः परः ? ॥ ५१ ॥ दुश्चेष्टित तवेसन्मे, मर्षयामर्षवर्जितम् ।
सन्त एव यतः सर्वसहायां तद्गुणस्पृशः ॥ ५२ ॥ किञ्चिदादिश कृत्य मे, भृत्यमन्यतथा यथा । सद्यः सम्पादये
राजन्!, राजापि व्याजहार तम् ॥५३॥ यत सिद्धन्त्यभीष्टार्थाः, स चेद्धर्मसुरद्रुमः । तद्वे मम सुस्थैर्यमस्यात्
कोऽर्थः परोऽस्तु तत् ? ॥५४॥ किंतु त्वमेव मिथ्यात्व, त्यक्त्वा सम्यक्त्वमाश्रय । सुमनः! सुमनस्त्व ते, जायते येन
सार्थकम् ॥ ५५ ॥ ओमिति प्रतिपेदान , मपेक्षानः परां मुदम् । तमापृच्छ्य दिवेचाय, त्रिदिव दिविषद्वरः ॥५६॥
एव निर्व्यूढसम्यक्त्वप्रतिमा प्रीतिमाश्रितः । सुचिर भुक्तराज्यश्रीर्विजयोऽच्यायदन्यदा ॥ ५७ ॥ पङ्कोरिव चिग
यापि, चरणोद्युक्तता न मे । तां विना च परपदप्राप्तिः स्यात्कथमात्मनः ? ॥५८॥ यद्वा दर्शनशुद्धिश्चेत्, सुक

राऽपि भवेत् परा । तदा ममापि स्याज्जातु, सर्वदर्शित्वसम्भव ॥५९॥ तदङ्गाराधनैरेव, स्यात्तस्याश्च प्रकृष्टता । ध्यात्वेत्यमूत्सोऽर्हद्गुरुधर्मध्यानैकतानधीः ॥ ६० ॥ सम्यक्त्वभूषण तीर्थसेवां कर्तुं च सोऽन्यदा । राज्ये ज्येष्ठसुत न्यस्य, ययौ श्रीविमलाचलम् ॥ ६१ ॥ जिगीषोर्दुर्गवत्स्वार्थसिद्ध्यै सिद्ध्यर्थिनां हि यः । त्रैलोक्येऽपि पर तीर्थं, नित्योऽनन्तप्रभावभाग् ॥ ६२ ॥ तत्तीर्थसेवां कुर्वाणः, सर्वाङ्गीणां यथाविधि । श्रीजिनार्चाचैत्यचिन्ताद्यैः स्व जन्माकृतार्थयत् ॥६३॥ सोऽन्यदाऽर्हन्महापूजां, साधमाधाय सुस्थिरः । इत्युच्चैर्भावयामास, सम्यग्दर्शनभावनाम् ॥ ६४ ॥ सर्वज्ञैः कोऽप्यहो धर्मः, स्वाख्यातः सुखसाधनः । कृच्छ्र विनाऽपि संसारपारः प्राप्येत यद्बलात् ॥ ६५ ॥ परमात्मस्वरूपोऽर्हन्, परमाचारवान् गुरुः । धर्मश्च सर्वपरमः, काऽपि जैनमतस्थितिः ॥ ६६ ॥ ध्यानेनैवं विशुद्धेन, सिद्धेर्निःश्रेणिकामिव । क्षपकश्रेणिमारूढः, शक्तिर्जीवस्य काऽप्यहो ॥ ६७ ॥ तदा तस्य निर्वीर्येऽपि, समस्तोमविनाशकृत् । ज्ञानमानूदयो जज्ञे, कृच्छ्रप्राप्योऽप्यकृच्छ्रतः ॥ ६८ ॥ पुत्रः पित्रधिकोऽपीति, गृहिस्वेऽप्यासकेवलः । राजर्षिर्देवदत्तर्षिवेषः सोऽर्च्यत निर्जरैः ॥ ६९ ॥ निस्तार्यैः प्राग् निजज्ञातिरित्यथ सप्रियाश्रयम् । जय प्रियाश्च पुत्रांश्च प्राव्राजयदथात् ॥ ७० ॥ प्रपूर्य पूर्वलक्षायुश्चिरमुर्व्यां विहारतः । सोऽप्यास सिद्धिं सार्द्धं तैः, सद्दर्शनफलान्यहो ॥ ७१ ॥ आराधनेऽथ इत्ताधिपपे फलस्य, प्राप्तावपीति विजयस्य जयस्य चोच्चैः । श्रुत्वा सुदर्शननिदर्शनमद्भुत भो, भव्याः ! सुदर्शनविधौ विधिवद्यतध्वम् ॥ ७२ ॥

॥ इति सम्यक्त्वे जयविजयकथानकम् ॥

प्रथमं सम्यक्त्वलाभश्च गतिचतुष्केऽपि संज्ञिपर्याप्तपञ्चेन्द्रियस्य स्यात्, स चैव–कश्चिदनादिमिथ्यादृष्टिर्जन्तुर्मिथ्यात्वप्रत्ययमनन्तान् पुद्गलपरावर्त्तान् भ्रान्तपूर्वी गिरिसरिदुपलघोलनाकल्पेन कथमप्यनाभोगनिर्वर्त्तितयथाप्रवृत्तकरणेन परिणामविशेषरूपेणायुर्वर्जं सप्तापि कर्माणि पल्योपमासङ्ख्येयभागन्यूनैकसागरोपमकोटाकोटीस्थितिकानि करोति, अत्रान्तरे जन्तोर्दुर्भेदकर्मजनितो घनरागद्वेषपरिणामः कर्कशनिबिडचिरप्ररूढगुपिलवक्रग्रन्थिवद्दुर्भेदोऽभिन्नपूर्वो ग्रन्थिर्भवति, इमं च यावदभव्या अपि यथाप्रवृत्तकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति, ग्रन्थिदेशे च वर्त्तमानो भव्योऽभव्यो वा सङ्ख्येयमसङ्ख्येयं वा कालं तिष्ठति, स च तत्र स्थितो द्रव्यश्रुत भिन्नानि दश पूर्वाणि यावल्लभते जिनभक्त्यादिदर्शनात्स्वर्गसुखार्थित्वादेव दीक्षाग्रहणे तत्सम्भवात्, अत एव भिन्नदशपूर्वान्त श्रुतं मिथ्याश्रुतमपि स्यात् मिथ्यादृष्टिपरिगृहीतत्वात्, यस्य च चतुर्दश पूर्वाणि यावत्पूर्णानि दश पूर्वाणि श्रुतं स्यात् तस्मिन्नियमात्सम्यक्त्वं शेषे किञ्चिदूनदशपूर्वधरादौ सम्यक्त्वस्य भजना,यदुक्तं कल्पभाष्ये–"चउदस दस य अभिन्ने नियमा सम्मं तु सेसए भयणा।" इति, तं च ग्रन्थिं कश्चिच्छितकुठारधारयेव परिणामविशुद्ध्या भित्त्वा मिथ्यात्वस्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणविशुद्धिजनितसामर्थ्योऽन्तर्मुहूर्त्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति, करणत्रयक्रमश्च कल्पभाष्योक्तोऽयं–"जा गंठी ता पढमं गंठिं समइच्छओ भवे बीअं। अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १॥" 'समइच्छउ'त्ति समतिक्रामतो भिन्दा

नस्येति, सम्यक्त्वं पुरस्कृतं येन तस्मिन्नासन्नसम्यक्त्व इत्यर्थः, अन्तरकरणे च कृते मिथ्यात्वस्य स्थितिद्वयं स्यात्, अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्त्तप्रमाणा तस्मादेवोपरितनी द्वितीया, स्थापना ⫶, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्त्तेन पुनस्तस्यामपगतायामन्तरकरणाद्यसमय एवौपशमिकसम्यक्त्वं प्राप्नोति, मिथ्यात्वदलिकवेदनाभावात्, एष लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन शोधितस्य मदनकोद्रवकल्पस्य मिथ्यात्वस्य शुद्धार्द्धशुद्धाशुद्धरूपं पुञ्जत्रयमसौ करोत्येव, अत एवौपशमिकसम्यक्त्वाच्च्युतोऽसौ क्षायोपशमिकसम्यग्दृष्टिर्मिश्रो मिथ्यादृष्टिर्वा भवति, उक्तञ्च कर्म्मग्रन्थेषु-"धुव परमोवसमी करेइ पुंजतियं । तत्तच्चिओ पुण गच्छइ सम्मे मीसंमि मिच्छे वा ॥ १ ॥" इदं च कार्मग्रन्थिकमतं, सैद्धान्तिकमतं त्वेवं—यथाऽनादिमिथ्यादृष्टिः कोऽपि तथाविधसामग्रीसद्भावेऽपूर्वकरणेन पुञ्जत्रयं कृत्वा शुद्धपुञ्जलान् वेदयन् औपशमिकसम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति, अन्यस्तु यथाप्रवृत्तादिकरणत्रयक्रमेणान्तरकरणे औपशमिकसम्यक्त्व लभते, पुञ्जत्रयं त्वसौ न करोत्येव, ततश्चौपशमिकसम्यक्त्वाच्च्युतोऽवश्यं मिथ्यात्वमेव याति, उक्तञ्च कल्पभाष्ये-"आलंपणमलहंती जह सट्ठाणं न मुंचए इलिआ । एव अकयतिपुंजो मिच्छं चिअ उवसमी एइ ॥ १ ॥" प्रथमे च सम्यक्त्वे लभ्यमाने कश्चित्सम्यक्त्वेन समं देशविरतिं सर्वविरतिं वा प्रतिपद्यते, उक्तञ्च शतकबृहच्चूर्णौ-"उवसमसम्मदिट्ठी अंतरकरणे ठिओ कोइ देसविरइंपि लभइ

कोइ पमत्तापमत्तभावपि, सासायणो पुण न किंपि लहइ'त्ति, पुञ्जत्रयसङ्क्रमश्च कल्पभाष्ये एवमुक्तः—मिथ्यात्वदलिकात्पुद्गलानाकृष्य सम्यग्दृष्टिः प्रवर्द्धमानपरिणामः सम्यक्त्वे मिश्रे च सङ्क्रमयति, मिश्रपुद्गलांश्च सम्यग्दृष्टिः सम्यक्त्वे मिथ्यादृष्टिश्च मिथ्यात्वे, सम्यक्त्वपुद्गलांस्तु मिथ्यात्वे सङ्क्रमयति न तु मिश्रे, "मिच्छत्तमि अक्खीणे तियपुंजा सम्मदिट्ठिणो नियमा। खीणंमि उ मिच्छत्ते दुएगपुंजी व खवगो वा ॥ १ ॥" मिथ्यात्वे अक्षीणे सम्यग्दृष्टयो नियमात्त्रिपुञ्जिनः, मिथ्यात्वे क्षीणे द्विपुञ्जिनः, मिश्रे क्षीणे एकपुञ्जिनः, सम्यक्त्वे तु क्षीणे क्षपकः, सम्यक्त्वपुद्गलाश्च शोधितमदनकोद्रवस्थानीया विस्वतैलादिद्रव्यकल्पेन कुतीर्थिकसंसर्गकुशास्त्रश्रवणादिमिथ्यात्वेन मिश्रिताः सन्तस्तत्क्षणादेव मिथ्यात्वं स्युः, यदाऽपि प्रपतितसम्यक्त्वः पुनः सम्यक्त्वं लभते तदाऽप्यपूर्वकरणेन पुञ्जत्रयं कृत्वाऽनिवृत्तिकरणेन सम्यक्त्वपुञ्ज एव गमनादूच्छन्य, ननु तदाऽपूर्वकरणस्य पूर्वलब्धस्यैव लाभात्कथमपूर्वता ? इतिचेदुच्यते—अपूर्वमिवापूर्वं स्तोकवारमेव लाभादिति वृद्धाः, सैद्धान्तिकमतं चैतत्—सम्यक्त्वमासादितं देशविरतिसर्वविरत्योः प्राप्तावपि यथाप्रवृत्तापूर्वकरणे [अ] भवतो नत्वनिवृत्तिकरणम्, अपूर्वकरणाद्धासमाप्त्यनन्तरसमये एव तयोर्भावात्, देशसर्वविरत्योः प्रतिपत्तेरनन्तरमन्तर्मुहूर्तं यावदवश्यं जीवः प्रवर्द्धमानपरिणामस्तत ऊर्ध्वं त्वनियमः, कोऽपि प्रवर्द्धमानपरिणाम एव कोऽपि स्वभावस्थ कोऽपि हीनपरिणामः, ये त्वाभोग विनैव कथञ्चित्परिणामह्रासाद्देशविरतेः सर्वविरतेर्वा प्रतिपतितास्तेऽकृतकरणा एव पुनस्तां लभन्ते, ये त्वाभोगतः प्रतिपतिता आभोगेनैव च मिथ्यात्वं गतास्ते जघन्यतोऽन्तर्मु

मूर्तेनोत्कर्षतः प्रभूतकालेन यथोक्तकरणपूर्वकमेव पुनस्तां लभन्ते इत्युक्तं कर्मप्रकृतिचूर्णौ, सैद्धान्तिकमते हि विराधितसम्यक्त्वो गृहीतेनापि सम्यक्त्वेन षष्ठपृथ्वीं यावत्कोऽप्युत्पद्यते, कार्मग्रन्थिकमते तु वैमानिकेभ्यो-ऽन्यत्र नोत्पद्यते तेन गृहीतेनेत्युक्तं प्रवचनसारोद्धारवृत्तौ, अवाप्तसम्यक्त्वश्च तत्परित्यागे कार्मग्रन्थिकमते नोत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति, सैद्धान्तिकाभिप्रायतस्तु भिन्नग्रन्थेरुत्कृष्टः स्थितिबन्ध एव न स्यात् । तच्च सम्यक्त्वमौपशमिकं १ क्षायिकं २ क्षायोपशमिकं ३ वेदकं ४ सास्वादनं ५ मेवं पञ्चधा, तत्रौपशमिकं मिथ्यात्वरूपदर्शनमोहनीयोपशमनस्वरूपं ग्रन्थिभेदकर्तुरुपशमश्रेणिप्रारम्भकस्य वा स्यात् १ क्षायिकं सम्यक्त्वमिश्रमिथ्यात्वपुञ्जरूपत्रिविधदर्शनमोहनीयनिःशेषक्षयलक्षणं क्षपकश्रेणिप्रतिपन्नस्य २ क्षायोपशमिकमुदीर्णस्य मिथ्यात्वमोहनीयस्य विपाकोदयेन वेदितस्यास्क्षयेऽनुदीर्णस्य चोपशमे सति क्षयोपशमरूपम्, अस्मिंश्च शुद्धमिथ्यात्वपुञ्जपुद्गला विपाकोदयेन प्रदेशोदयेन त्वशुद्धमिथ्यात्वपुञ्जपुद्गला अपि वेद्यन्ते, औपशमिके तु सर्वथा न किमपि वेद्यते इत्यनयोर्भेदः ३, वेदकं क्षपकश्रेणिं प्रपन्नस्य चतुर्ष्वनन्तानुबन्धिषु मिथ्यात्वमिश्रपुञ्जद्वये च क्षपितेषु सत्सु क्षिप्यमाणे सम्यक्त्वपुञ्जे तत्सत्कचरमपुद्गलक्षपणोद्यतस्य तच्चरमपुद्गलवेदनरूपं ४ सास्वादनं पूर्वोक्तौपशमिकसम्यक्त्ववमनसमये तदास्वादस्वरूपं ५ । पञ्चानामप्येषां स्थितिकालमानादि चैवमाहुः—"अंतमुहुत्तुवसम ओ १ छावलि सासाण २ वेअगो समओ ३ । साहिअ तित्तीसायर खइओ ४ दुगुणो खओवसमे ५ ॥ १ ॥" उक्कोसं सासायणउवसमिआ हुंति पंचवाराओ । वेअगखइगा इक्कसि असंखवारा खओवसमो ॥ २ ॥ तिण्ह

सहस्रपुहुत्तं सयप्पुहुत्तं च होइ विरईए । एगभवे आगरिसा एवइआ हुंति नायवा ॥ ३ ॥' 'तिण्ह'न्ति श्रुतसम्यक्त्वदेशविरतीनाम् 'आगरिस'त्ति आकर्षः प्रथमतया मुक्तस्य वा ग्रहणम्, एते आकर्षा उत्कर्षतो जघन्यतस्त्वेक एव, "तिण्ह सहस्समसंखा सहस्सपुहुत्त च होइ विरईए। नाणभवे आगरिसा एवइआ हुंति नायवा ॥१॥" "बीअगुणे सासाणो तुरिआइसु अट्ठि १ गार २ चउ ३ चउसु ४ । उवसमग १ खइग २ वेअग ३ खाओव समा ४ कमा हुंति ॥ १ ॥" अस्या व्याख्या—द्वितीयगुणस्थाने सास्वादनं चतुर्थादिष्वष्टसु गुणस्थानेष्वौपशमिकं चतुर्थादिष्वेकादशसु क्षायिकं चतुर्थादिषु चतुर्षु वेदकं क्षायोपशमिकं चेत्यर्थः, "सम्मत्तंमि अ लद्धे पलिअपुहुत्तेण सावओ हुज्जा १ चरणोऽवसम ३ खयाण ४ सागर संखतरा हुंति ५ ॥ १ ॥ अप्परिवडिए सम्मे सुरमणुए इगभवे य सव्वाणि । इगसेढिवज्जिआइ सिवं च सत्तट्ठभवमज्झे ७ ॥ २ ॥" क्षायिकसम्यग्दृष्टिस्तु तृतीये चतुर्थे तस्मिन् भवे वा सिद्ध्यति, उक्तञ्च पञ्चसङ्ग्रहादौ—"तइअचउत्थे तम्मि व भवंमि सिज्झंति दंसणे खीणे । जं देवनिरयऽसंखाउचरमदेहेसु ते हुंति ॥१॥" व्याख्या—बद्धायुः क्षीणसप्तको यदि देवगतिं नरकगतिं वा याति (तदा) तत्प्रत्यान्तरितस्तृतीयभवे सिद्ध्यति, अथ तिर्यक्षु नृषु चोत्पद्यते सोऽवश्यमसङ्ख्येयवर्षायुष्केष्वेव न तु सङ्ख्येयवर्षायुष्केषु, तदनन्तरं च देवभवे ततो नृभवे सिद्ध्यतीति चतुर्थभवे मोक्षः, अबद्धायुश्च तस्मिन्नेव भवे क्षपकश्रेणिं सम्पूर्णीकृत्य सिद्ध्यतीत्यर्थः, एकजीवं नानाजीवान् वाऽपेक्ष्य सम्यक्त्वोपयोगो जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव, क्षयोपशमरूपा तल्लब्धिस्त्वेकजीवस्य जघन्याऽन्तर्मुहूर्त्तमुत्कृष्टा तु ६६ सागराणि नृभवाधिकानि, तत

ऊर्ध्वं सम्यक्त्वात्प्रच्युतः सिद्ध्यत्येव, नानाजीवानां तु सर्वकालः, यतः—"दो वारे विजयाइसु गयस्स तिन्नि ऽच्चुए अहव ताइं । अइरेगं नरभविअं नाणाजीवाण सव्वद्धा ॥ १ ॥" सम्यक्त्वस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, कस्यचित्सम्यक्त्वत्यागे सति पुनस्तदावरणक्षयोपशमादन्तर्मुहूर्त्तमात्रेणैव तत्प्रतिपत्तेः, उत्कृष्टतस्त्वाशातनाप्रचुरस्यापार्द्धपुद्गलपरावर्त्तः, उक्तञ्च—"तित्थयरपवयणसुअं आयरिअं गणहरं महड्ढीअं । आसायंतो बहुसो अणन्तसंसारिओ होइ ॥ १ ॥" नानाजीवानपेक्ष्य चान्तराभाव इत्याद्युक्तमावश्यकवृत्तौ, किं सम्यक्त्वं किं गतौ ताद्भविकं पारभविकं चेत्यादिविचारो ग्रन्थान्तरादवधार्यः, अथवा सम्यक्त्वं त्रेधा कारक१रोचक२दीपकभेदात्, तत्र सम्यगनुष्ठानप्रवृत्तिं कारयतीति कारकं विशुद्धचारित्रिणामेव १, रोचयति सम्यगनुष्ठानप्रवृत्तिं न तु कारयतीति रोचकमविरतसम्यग्दृशां कृष्णश्रेणिकादीनां २, व्यञ्जकं दीपकमित्येकः पदार्थः, एतत्तु यः स्वयं मिथ्यादृष्टिरपि परेभ्यो जीवाजीवादिपदार्थान् यथाऽवस्थितान् व्यनक्ति तस्याङ्गारमर्दकादेरिवेव, यद्वा सम्यक्त्वमनेकविधं, यदाहुः—"एगविह १ दुविह २ तिविहं ३ चउहा ४ पंचविह ५ दसविहं ६ सम्मं । दव्वाइकारयाई उवसमभेएहि वा सम्मं ॥ १ ॥ एगविहं सम्म (तत्त) रुई निसग्गहिगमेहि तं भवे दुविहं । तिविहं तं खइआई अहवावि हु कारगाईअं ॥ २ ॥" 'दव्वाइ'त्ति शुद्धपुद्गलवेदनतत्त्वरुचिरूपाभ्यां द्रव्यभावाभ्यां निसर्गाधिगमाभ्यां वा निश्चयव्यवहाराभ्यां पौद्गलिकापौद्गलिकभेदाभ्यां वा सम्यक्त्वं द्विधा—"खइआइसासणजुअं चउहा वेअगजुअं तु पंचविहं । तं मिच्छचरमपुग्गलवेअणओ दसविहं एवं ॥ ३ ॥ निस्सग्गु १ वएसरुई २ आणरुई ३ सुत्त-

४ बीअरुइमेव ५। अभिगम ६ वित्थाररुई ७ किरिआ ८ संखेव ९ धम्मरुई १० ॥ ४॥ भूअत्थेणाहिगया जीवाजीवा य पुण्णपावं च। सहसंमइआऽऽसवसंवरो अ रोएइ निसग्गो ॥ ५ ॥" 'भूअत्थ'त्ति सद्भूता अमी-अर्था इति सद्भूतार्थत्वेन 'सहसंमइअ'त्ति सहसन्मत्या जातिस्मृतिप्रतिभादिरूपया, "जो जिणदिट्ठे भावे चउव्विहे सद्दहाइ सयमेव। एमेव नन्नहत्ति अ स निसग्गरुइत्ति नायव्वो ॥ ६ ॥" 'चउव्विहे'त्ति द्रव्यादिभेदैर्नामादिभेदैर्वा, "एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणेण व उवएसरुइत्ति नायव्वो ॥ ७ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ। आणाए रोयंतो सो खलु आणारुई नाम ॥ ८ ॥" 'आणाए'त्ति आचार्यादिसम्बन्धिन्या जीवादि प्रतिपद्यमानो माषतुषादिवत्, "जो सुत्तमहिज्जंतो सुएण ओगाहई उ सम्मत्तं। अंगेण बाहिरेण व सो सुत्तरुइत्ति नायव्वो ॥ ९ ॥" 'ओगाहइ'त्ति प्राप्नोति सम्यक्त्वं रहस्यग्रहणार्थं कपटसंयतीभूतगोविन्दवाचकवत्, "एगेण अणेगाइं पयाइं जो पसरइ उ सम्मत्तं। उदए व्व तिल्लबिंदू सो बीअरुइत्ति नायव्वो ॥१०॥" 'एगेण'त्ति जीवाद्येकपदेन रुचितेन जीवाजीवाद्यनेकपदेषु रुचिमान्, "सो होइ अभिगमरुई सुअनाणं जेण अत्थओ दिट्ठं। इक्कारसमंगाइं पइण्णगं दिट्ठिवाओ अ ॥११॥" 'पइण्ण'त्ति प्रकीर्णकानि—उत्तराध्ययनादीनि, "दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा। सव्वाहि नयविहीहि अ वित्थाररुइत्ति नायव्वो ॥ १२ ॥ दंसणनाणचरित्ते तवविणए सव्वसमिइगुत्तीसु। जो किरिआभावरुई सो खलु किरिआरुई नाम ॥ १३ ॥ अणभिग्गहिअकुदिट्ठी संखेवरुइत्ति होइ नायव्वो। अविसारओ पवयणे अणभिग्गहिओ अ से

सेढ ॥ १४ ॥" 'अणभिग्गहिओ'त्ति अनाग्रही शाक्यादिप्रवचनेषु चिलातीपुत्रवत्, "जो अत्थिकायधम्मं सुअधम्मं खलु चरित्तधम्मं च। सद्दहइ जिणाभिहिअं सो धम्मरुइत्ति नायव्वो ॥१५॥" इति सम्यक्त्वस्वरूपम् ॥ अस्मिंश्च परमरहस्यभूते शङ्कादयः पञ्चातीचाराः परिहार्याः। अथ सूत्रगाथाव्याख्या–'संक'त्ति शङ्का–सन्देहः, सा च सर्वविषया देशविषया च, तत्र सर्वविषयाऽस्ति वा नास्ति वा धर्मः यद्वा जिनधर्मः सत्योऽसत्यो वेत्यादि, देशशङ्का एकैकवस्तुगोचरा यथाऽस्ति जीवः परं सर्वगतोऽसर्वगतो वा पृथ्व्यादीनां वा कथं सजीवत्वं? निगोदादयो वा कथं घटन्ते? यद्वा सम्प्रति यतिचारित्रमत्रास्ति न वा? इत्यादि, इयं द्विविधाऽप्यर्हदुक्ततत्त्वेष्वप्रत्ययरूपा सम्यक्त्वं दूषयति, यतः केचन भावा हेतुगम्या यथा वनस्पत्यादीनां सजीवत्वं, तथा च प्रयोगः–वनस्पतयः सचेतना जलाद्याहारग्रहणाग्रहणाभ्यां चयापचयदर्शनान्मनुष्यवत्, आचाराङ्गेऽप्युक्तम्–"इमंपि जाइधम्मयं एअंपि जाइधम्मयं इमंपि वुड्ढिधम्मयं एयंपि वुड्ढिधम्मयं इमंपि चित्तमंतयं एयंपि चित्तमंतयं इमंपि छिन्नं मिलाइ एयंपि छिन्नं मिलाइ इमंपि आहारगं एयंपि आहारगं इमंपि अणिच्चयं एयंपि अणिच्चयं इमंपि असासयं एयंपि असासयं इमंपि चओवचइअं एअंपि चओवचइअं इमंपि विप्परिणामयं एयंपि विप्परिणामयं"मिति, 'इमं'ति मनुष्यशरीरम् 'एअं'त्ति वनस्पतिशरीरं 'जाइधम्मयं'ति उत्पत्तिधर्मकं 'विप्परिणामयं'ति विविधपरिणामं तत्तद्रोगसम्पर्कात्, तदेव वनस्पतिसचेतनत्वादयो भावा हेतुगम्या दृष्टान्तेन दर्शयितुं शक्यत्वाद्दार्ष्टान्तिकाश्चोच्यन्ते, एवं सम्प्रत्यत्र यतिचारित्रसद्भावोऽपि, यदुक्तम्–"दुप्पसहंतं चरणं ज

भणियं भयवया इह खित्ते । आणाउन्नाणमियं न होइ अहुणत्ति वामोहो ॥ १ ॥” केचिच्च भावा निगोदा-
द्यः केवलागमगम्याः, यतः–“गोला य असंखिज्जा असंखनिग्गोअओ हवइ गोलो । इक्किक्कंमि निगोए अण
तजीवा मुणेयव्वा ॥ १ ॥ अइआ होही पुच्छा जिणाण मग्गमि उत्तरं तइआ । इक्कस्स निगोअस्स य अणंत
भागो अ सिद्धिगओ ॥२॥” न चात्र हेतुदृष्टान्ताद्यस्ति, तदुक्तम्–“आणागिज्झो अत्थो आणाए चेव सो कहे
अव्वो । दिट्ठंतिउ दिट्ठंता कहणविहि विराहणा इहरा ॥ १ ॥” श्रीजिनभद्रगणिक्षमाश्रमणोऽप्यूचे–“कत्थइ मइ
दुब्बलेण तव्विहायरिअविरहओ वावि । नेअगहणत्तणेण य नाणावरणोदएणं च ॥१॥ हेऊदाहरणासंभवे अ सइ
सुट्ठु ज न बुज्झिज्जा । सव्वण्णुमयमवितहं तहावि तं चिंतए मइमं ॥ २ ॥ अणुवकयपराणुग्गहपरायणा ज जिणा
जगप्पवरा । जिअरागदोसमोहा य नन्नहा वाइणो तेणं ॥३॥” शङ्कायां ज्ञातं यथा–पद्धाराद्धसिद्धनरेणेव षण्मासीं
निर्जं कण्ठस्था भस्य ५०० पञ्चशतदीनारमय्येस्युपस्ता द्वयोः कन्या दत्ता, एकेन शङ्कया जनह्रिया त्यक्ताऽन्येन
षण्मासीं स्पृष्टा स महर्द्धिर्जज्ञे अतः शङ्का न कार्येति प्रथमोऽतिचारः १ । क्षमादिगुणलेशदर्शनाद्विना परदर्शना-
भिलाष आकाङ्क्षा, साऽपि सर्वविषया देशविषया च, सर्वविषया सर्वपाषण्डिधर्माकाङ्क्षालक्षणा देशविषया-
काङ्क्षा तु सुगताद्यन्यतरदर्शनाभिलाषरूपा, यथा सुगतेन भिक्षूणामक्लेशको धर्म उपदिष्टः स्नानान्नपानाच्छाद-
नशयनीयादिषु सुखानुभवद्वारेणैव, यदाह–“मृद्वी शय्या प्रातरुत्थाय पेया, मध्ये भक्तं पानकं चापराह्णे ।
द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १ ॥” तथा परिव्राजकभौतब्राह्मणादयः स्नाना

दा ! निहन्तु नूनमनर्थोऽयमारब्धः ॥ १९ ॥ कामं कामान्धेनाविष्टं दौष्ट्येन यदि नृपेणेदम् । कस्मादेतदकस्मात्
स्वामिसखीपकार तदा ? ॥ २० ॥ अविमृश्यकारितायां नियतमनर्थं पुरःस्थित पश्य । शलभो लभते रभसाद्
भस्मीभाव न यदि किम् ? ॥ २१ ॥ उक्तञ्च—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि
विमृश्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः ॥ २२ ॥" दाक्षिण्यनिधे ! किमिव दाक्षिण्यमपत्रपाऽपि काऽत्र
पदं । येनान्यार्थविनाशः मोल्लासः प्रकृतिमलिनानाम् ॥ २३ ॥ अद्यापि किमपि कथमपि विचार्य किञ्चिन्मिय च
परिचार्य । पर्यवसाय्यो नृपतिर्निजार्थनाशी हि मूढतमः ॥ २४ ॥ श्रुत्वेति सात्त्विकः सोऽभिदधे मुग्धेव किमि
दमभिदधिषे । प्राणान्तेऽपि प्रतिपन्नमन्यथा कथमिवास्तु सताम् ? ॥ २५ ॥ कातर एवातुरस्त्वरसाऽपि विमुञ्चसि
प्रतिज्ञातम् । न तु साहसिकः कश्चिदपि विधुरिव विधुरेऽपि लक्ष्मसृगम् ॥ २६ ॥ उक्तञ्च—"अलसायतेणावि
सज्जणेण जे अक्खरा समुल्लविआ । ते पत्थरटंकुक्कीरिय व न हु अन्नहा हुंति ॥ २७ ॥ छिज्जउ सीसं अह होउ
बंधणं चयउ सव्वहा लच्छी । पडिवन्नपालणेसु पुरिसाण ज होइ त होउ ॥ २८ ॥" किञ्च स्वीकृतकृत्ये पुरतो
यदि कोऽप्यनर्थ आशङ्क्यः । तत्त्यागे निष्टङ्क्यः सम्भत्येषापदावस्तु ॥ २९ ॥ यास्याम्यवश्यमेतत्कार्यकृते तेन
पङ्गुचिन्त्यतया । न्याय्ये पथि पथिकानां यद्वा सममेव विषममपि ॥३०॥ मम काऽपि मामकीना नहि चिन्ता किन्तु
तावकीनोच्चैः । हरिणाधिप इव हरिणीं मा हापीर्देव नृपतिस्त्वाम् ॥ ३१ ॥ श्रुत्वा तदुरसमस्तान्यभिचरित चारु
भाषित भर्तुः । मुदितार्दिता च विरहातङ्कात्सा गद्गदमगादीत् ॥ ३२ ॥ एष यदि तत्पन्थाः प्राणेश ! शिवस्त

घास्त्वपि समस्तः । श्रेयस्वी च यशस्वी प्रसभ सद्यः समागच्छेः ॥३३॥ मचिन्तया च चितया मा धाक्षीः स्वतनु-
मतनुघृणया यत् । रक्ष्यामि शीलरक्षां दक्षाः खलु तत्र कुलललनाः ॥३४॥ विज्ञापयाम्यविज्ञाऽप्यहमेक जीवित
निज रक्षेः । अविचार्यैकार्यकरणात्स्पतत्स्मरण तु मा कार्षीः ॥ ३५ ॥ यतः—"जीवन् भद्राण्यवाप्नोति, जीवन्
पुण्य करोति च । मृतस्य देहनाशः स्याद्धर्माद्युपरमस्तथा ॥ ३६ ॥ प्रियतम ! यद्वा शिक्षा दक्षाणां का विशिष्य
पुरुषाणाम् । स्नेहग्रहिला महिलास्तदपि वदन्त्येव वसदपि ॥ ३७ ॥ स्निग्धां मुग्धां मुग्धाङ्गनागिरं तां सुधाकिर
सुचिरम् । पीत्वा प्रीतः प्रास्थित दक्षिणदिशि दक्षिण क्षणतः ॥ ३८ ॥ सत्त्वैकसखा स्वसुखाग्रजस्त्यजन्नल्पु
स विपथग्रामान् । निःसङ्ग इव पथासे समधिकवेगैककृतरङ्गः ॥३९॥ विकट तटिनीभर्तुस्तटं स्फुटन्तं तु वीचि-
निर्घोषैः । सोऽगात् क्रमतोऽक्रममिव किमिव दवीयोऽध्यवसायिनाम् ॥ ४० ॥ पारावारमपार भीष्माकारं त्वमिदं
रुत्तारम् । दर्शं दर्शं भवमिव भव्यः सोद्विजामास ॥ ४१ ॥ दध्यौ च निषिद्धोऽपि प्रियया प्राप्तोऽत्र यद्भविष्य
तया । वारिधिविहितातङ्कां कथमिव लङ्कां गमिष्यामि ॥ ४२ ॥ नैवात्र यानपात्रप्रभृतिरुपायः प्ररूप्यते तज्ज्ञैः ।
कार्यमकृत्वा च कथ कृतप्रतिज्ञो निवर्त्तेऽहम् ? ॥४३॥ प्राग् धीवरोऽप्यवाप्यै (पिष) दैवेनैवेयतीं सुख महतीम् ।
तेनैव यद्भविष्योऽभवन् भविष्यामि कथमधुना ? ॥ ४४ ॥ प्रथमेकजीवरक्षाफल मया तुच्छवित्तमिव सकलम् ।
लघु सुक्त तद्युक्त वरिव्रजन्मम सुदुःखितत्वम् ॥४५॥ तेजस्व्यपि निस्तेजास्तत्राजनि सैष यत्र तच्चित्रम् । यत्तेजो-
ऽधिपतेरपि दिशि तस्यां हीयते तेजः ॥ ४६॥ यद्वा—नृपतेः स सेवकोऽजनि निस्तेजास्तत्र यत्र तत्कार्यम् । परि

हीयते हि तेजस्त्विषि विशालतस्त्विनस्यापि ॥ ४७ ॥ अजलाशयोऽपि सोऽय जलाशयस्यैव सङ्गमधिगम्य । जडे
जलाशयस्तत्क्षणे क्षण किं विधेयविधौ ? ॥ ४८ ॥ परिधार्य धैर्यमुच्चैश्चेतसि पुनरेव चिन्तयामास । किमनुचितां
कातरतामातुर इव हा वहामि मुधा ? ॥४९॥ अपि जलधिं साहसवशाद्विशामि सहसैव भवतु यद्भवति । एकैव
गतिर्महतां स्वीकृतकरणे हि मरणं वा ॥ ५० ॥ इति निर्धार्य स धैर्याधेतोवृत्तिं विधाय धृतकम्पाम् । झम्पां
यावत्प्रददावस्यपांनिधौ भयमुज्झामवधौ ॥ ५१ ॥ उदधेर्देवस्तावत्तुष्टः प्राग्वत्सतम्बराकृष्टः । प्रादुर्भूय प्रणयाद् भण
क्षण भद्र ! किं कुर्वे ? ॥ ५२ ॥ जीवदयानियमफल किमभ्यधो ! निस्तुल यदविलम्बात् । मम विस्मृतोऽपि
निधिरिव विधुरे स्वयमेव आविरभूत् ॥ ५३ ॥ इति चिन्तयन् स तुष्टस्त प्रत्याचष्ट शिष्टधी स्पष्टम् । नय मां
लङ्कामपनय शङ्कामिह कार्यनिर्वाहे ॥ ५४ ॥ हरिरिव हरिबलममरः कालिय इव विपुलमत्स्यरूपधरः । पृष्ठे
कृत्वा प्रत्यग्रे मत्स्योऽप पथि पयसः ॥ ५५ ॥ कुल्यामिव कुल्यापतिमतुल्यमुल्लङ्घ्य स लघुपवन इव । लङ्कोप
वनमनैषीदमुं महायानपात्रमिव ॥५६॥ सर्वर्तुकपुष्पफल विद्याविधिविधिसिद्धविविधवृक्षगणम् । स वीक्ष्य वीक्षणीय
क्षणमथ विद्याधरोद्यानम् ॥ ५७ ॥ अन्तर्वेश्म पूर्णस्वर्णप्रियमाद्यखेचरो स्वमिव । बालेन्दुनिष्कलङ्का लङ्का
स विवेश पेशलमुत ॥५८॥ युग्मम् ॥ तस्याः सुषमामद्भुत रम्यां सुखमापिबत्तृषित इव सः । कौतुकतः काप्य
विघाद्विपदः शून्ये कनकसदने ॥ ५९ ॥ अघटितघाटकफुटान्मेरोः कूटानिव स्फुटांस्तत्र । ठिक्करिकाराशीनिव
सुवर्णदीनारधुराशीन् ॥ ६० ॥ निष्पीकृतांश्च मौक्तिकनिकरान् जूर्णार्णकणगणान् किन्तु । गुरुगुञ्जापुञ्जानिव

नवद्वीप्यष्टिद्रुमस्तोमान् ॥ ६१ ॥ स्फटिकान् खटिकाखण्डानिव बदराणीव पद्मरागमणीन् । आम्रतरहीरकाणां
प्रकरान् किल शर्कराशकलान् ॥६२॥ तृणमणिनिचयानिव हारिलरचूर्णान् पटुतरेन्द्रनीलमणीन् । निचयविहितानि
जम्बूफलवत् किल रिष्टरत्नानि ॥ ६३ ॥ अन्यानपि विविधमणीन् गणीकृतान् कर्करानिव प्रचुरान् । इन्धनवद्
घनचन्दनदारूणि सुगन्धदारूणि ॥६४॥ राशिकृतानिव राशिव्रजवद्रूप्याणि वेयरूप्याणि । सुस्थूलकम्बलानिव
कम्बलरत्नानि नूत्नानि ॥ ६५ ॥ उच्चैः श्रेणिकृतानां हिरण्मयीनां मणिमयानां च । भाण्डानामुच्चिपुटी पटीयसी
मृन्मयानां तु ॥ ६६ ॥ अपरमपि गृहोपस्करमासनशयनादिकं तथारूपम् । पश्यन्नुत्पश्यतया विसिष्मयामासि-
वानेपः ॥ ६७ ॥ अष्टभिः कुलकम् । ईदृक्समृद्धिरम्यं हर्म्यं शून्यं किमेतदिति विमृशन् । अधिशाखिसपवर-
कान्तः कमलान्तरलिरिव सः ॥ ६८ ॥ सौभाग्यगुणविशालां बालां नवयौवनश्रिय शालाम् । निश्चेतनां
मृतामिव स तत्र वीक्ष्येति चिन्तितवान् ॥ ६९ ॥ इह वासि किमिवमेकाऽप्यविनष्टसुपुष्टवरवपुष्मका । किं वा
मृतेव पतिता यद्वा को वेद दैवगतिम् ? ॥७०॥ ईषद्विषाद्विस्मयवान् सैषमवेक्षतामृतसुपूर्णम् । तूर्णं तुम्ब
कमेक गतमुच्चैर्जीवितमिवास्याः ॥७१॥ पानीयधिया सुधिया दयालुनाऽऽदाय तदमुना च ततः । सा सर्वाङ्गम-
सिच्यत परहितपरता हि सत्प्रकृतिः ॥ ७२ ॥ सुप्तोत्थितेव तत्क्षणमुत्तस्थौ साऽथ सुस्थिता स्थातुम् । पुरतस्त-
मेत्य दक्षेत्यपिप्रिणत् प्रणयगर्भगिरा ॥ ७३ ॥ उत्तम ! तवोत्तमस्त निर्णिन्येऽन्योपकारसारतया । तदपि वद
कोऽसि कुत्र च वससि किमर्थं तथाऽऽगाः ? ॥७४॥ सोऽप्याह मदनवेगाह्वयस्य नृपतेर्विशालपुरभर्तुः । सैषा

कृतो स्थितो धुरि हरिबलनामाऽस्मि मान्यतमः ॥७५॥ लङ्काविभोर्विभीषणनाम्नो राज्ञो निमन्त्रणार्थमिह । प्रहितः
प्राप दिव्यानुभावतो मीनपानस्थः ॥७६॥ अथ कथय यथाऽवस्थितवृत्तं त्वमपीति तेन सा प्रोक्ता । प्रोचे प्राञ्च
प्रणयादिवोद्भवत्परमरोमाञ्चा ॥ ७७ ॥ लङ्कापतेः पिता मे पुष्पानयनाय देवतायतने । पुष्पबटुकः प्रकृत्या कटुकः
कटुकर्मकर्ता च ॥ ७८ ॥ कुसुमश्रीसुकुमारा कुसुमश्रीर्नामतोऽस्मि तनुजाऽस्य । विषहारिणी विषभृतो मणिरिव
भवविषमरीतिरहो ! ॥ ७९ ॥ पित्रान्येद्युः सामुद्रिककुशलः पृष्ट इत्यभाषिष्ट । अस्याः सुलक्षणायाः पतिः
पृथिव्याः पतिर्भविता ॥ ८० ॥ यदुक्तम्–"भृङ्गारासनवाजिकुञ्जररथश्रीवत्सयूपेषुभिर्मालाचामरकुण्डलाङ्कुशयवैः
शैलैर्ध्वजैस्तोमरैः । मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः, पादे पाणितले नरा नृपतयो राज्यो
भवन्ति स्त्रियः ॥ ८१ ॥ पत्तले स्यात् त्रिशूलं सा, स्वामिन्यखिलयोषिताम् । हसन्त्याः स्वस्तिको यस्या, भाले
रूपेत साऽपि च ॥ ८२ ॥ अन्तर्मुखो ललाटे वा, मशकेन रमान्विता । राज्ञी चापि कपोले च, वामे मिष्टाशधी-
र्भवेत् ॥ ८३ ॥ इति तिलकलाञ्छने वा रक्ताभे धान्यधनसुखोपेता । राज्ञोऽस्याः पत्नी वा लोहितमशकाश्मसाम्य-
जुषः ॥८४॥ श्रुत्वेति राज्यलोभादियेष मामेष मेष इव मूर्खः । उद्वोढुं धिग् लोभान्धमुन्मार्गैकगमनपरम् ॥८५॥
'रसिंधा वीसंधा जलंधा मायमाणकोवंधा । कामंधा लोहंधा इमे कमेण विसेसंधा ॥ ८६ ॥ लोभः सर्वविनाशी
त्यनिवर्तितवक्रदुर्मतिः स ततः । मन्त्र्यात्रादिस्वजनैः सपरिजनैर्गाढमुद्विग्नैः ॥ ८७ ॥ सहसा श्मशानतरुरिव
पथिकैर्दूरेण तत्यजेऽपि निजैः । अनुचितचिन्तनमपि हा दवदहनः स्नेहवनदहने ॥ ८८ ॥ युग्मम् ॥ चाण्डालाविव

षण्मासमाहूतं निनङ्क्षुमाक्षेपात्। मां तु स पन्थघुतामिव नित्य निरुणद्धि दुर्बुद्धिः ॥ ८९ ॥ नि शूकत्मकृत्या
कृत्यायितधिया सपत्न्यपि माम्। कृत्वा मृतामिव पतिः स यास्यनार्यः स्वकार्ये च ॥ ९० ॥ गृहमागतश्च पुनर-
यमेतस्मात्पुम्सतोऽमृतं लात्वा। सिक्त्वा किल मां त्वमिव प्रोज्जीवयति स्वकृत्यकृते ॥ ९१ ॥ ईदृग्विषमनिमग्ना
कथमपि मृतिमप्यमीप्सुरहमस्मि। समुचितमनुचितकृत्याचरणात्प्राणप्रहाणमपि ॥ ९२ ॥ त्वां प्रार्थये च किञ्चित्
प्रार्थितकल्पद्रुमाद्रियस्यामेव। प्रार्थितसमर्थन खलु मूलप्रमाणाः सुगुणतायाः ॥ ९३ ॥ तदुक्तम्—“दुक्खाण एउ दु
क्खं गुरुअं गुरुआण हिययमज्झम्मि। जंपि परो पत्थिज्जइ अपि परे पत्थणाभंगो ॥ ९४ ॥” मामनुरक्तां पाणि-
ग्रहणविधेरनुगृहाण सुभगाग्र्य ! । यस्याः प्राक्तनपुण्यैराकृष्ट इवात्र समगस्थाः ॥ ९५ ॥ मम जीवितमप्येव
स्यादस्य स्वभूपा च मयिस्तम्। सम्प्रति च लग्नवेलाऽप्यतुला तदलं विलम्ब्य विभो ! ॥ ९६ ॥ स च तस्यास्तदु-
चन निशम्य सम्यग् वितर्कयाञ्चकृवान्। अहह ! महिमा महीयान् सकृत्कृतायाः अपि कृपायाः ॥ ९७ ॥
अधरीकृतामरीश्रीर्यस्स्मरीसुन्दरी परीरम्भम्। वरीवरीकरीत्यपि लघपरीहारतो मेऽपि ॥ ९८ ॥ अहह मह-
भाग्यमहो ममेति मुदितस्तवेष दैवतवत्। तां मानयन्ननैपीत् पाणीकृत्य प्रसक्तिपदम् ॥ ९९ ॥ सस्नेहमाह
साऽप्यथ हरिमिह ते जीवितेश ! शिवमिच्छोः। पापस्थानक इव वै न साम्प्रतं साम्प्रतं स्थातुम् ॥ २०० ॥ मा
जातु पुरुषपदुकः कोपाटोपादनर्थमपि कार्षीत्। ज्ञात्वेवमतः प्रस्थीयतामितः स्थानतस्त्वरितम् ॥ २०१ ॥ अल
मफलेन विभीषणनिमन्त्रणेनापि यन्मनुजकार्ये। खचरेन्द्रा इन्द्रा इव नायान्ति यथा तथा कथन ॥२०२॥ अभा-

गमननिमन्त्रणकृत्यमत्यायनाय नृपतेस्तु । सत्यप्रत्ययमस्यात्राप्तोऽभिज्ञानमानेष्ये ॥ ३ ॥ इत्यभिधाय विधाय च
कश्चिदुपाय तवैव निरपायम् । कृतचन्द्रहासधवना नृपसदनाचन्द्रहासमसिम् ॥ ४ ॥ विज्ञाऽभिज्ञानकृते सुगुप्त
मानीय साऽर्पयत्पत्ये । साधयते दुस्साधं सचरित्रवलाऽपि मध्यगता ॥ ५ ॥ युग्मम् ॥ तद्बुद्धिकर्मकौशलचमत्कृत
स्तत्कृपाणमादाय । सह सहचर्या निजगृहगृहीतसारश्रिया स तया ॥ ६ ॥ त्यक्त्वा तदमृतकुम्भं सिन्धुरसस्येव
मुग्धमखिलम्बम् । योगीन्द्र इव युतोऽद्भुतशक्त्या निरगादथ नगर्याः ॥ ७ ॥ युगलम् ॥ अनिमिषमनिमिषवपुष
स्वरूपममिवोपस्थित स्मृतेरेव । गौरीगौरीशाविव तावभ्याकलतुः सहसा ॥ ८ ॥ अथ पथि मिथः कुतूहलकलने
करसौ विशालपुरविपिने । तौ स्त्रीपुंसौ प्रकटिततपाऽऽशयौ तेन निन्याते ॥ ९ ॥ हरिबलचलनानन्तरमथनिप-
तिर्यचकार सविकारः । निजधाम्नि वसन्तश्रीग्रहणाय भणामि तदिदानीम् ॥ १० ॥ प्रीतस्ततः प्रहितवान् दा
सीर्दासीकृतः स्मरेण नृपः । नवनवसुवस्तुहस्ता हरिबलललनां प्रसादयितुम् ॥ ११ ॥ अन्तश्चिन्त किञ्चिद्विचार्य
सोवाच ताः प्रति प्रथमम् । प्रेषयति किमिति नृपतिर्नवनववस्तूनि मद्भवने ॥ १२ ॥ प्राह शिक्षिताभिराभिर्व-
भणे निपुणे ! न वेत्सि तव मर्त्या । नृपतेः प्रसादपात्रं प्रहितश्च नृपेण निजकार्ये ॥ १३ ॥ उचितां तद्गृहचिन्तां
तत्सुते नृपतिरिति वचः श्रुत्वा । वैयाघ्र सम्प्रेषणमथ चौरं माहरिककर्म ॥ १४ ॥ पपसश्चिन्तनमोतोरिदं विद
न्त्यप्युपादवे सर्वम् । सुमहान् प्रसाद इति वाक् कामान्धा वञ्चनार्हा यत् ॥ १५ ॥ युग्मम् ॥ एवं वस्तुप्रेषणकृपा
लमभाविना दिनाः कतिचित् । आशावशतो व्यञ्जनाशयेन खलु निन्यिरे राज्ञा ॥ १६ ॥ राजाऽहमुत्तमोत्तमर

मणीस्वपूर्णीय उपसमा सं च । लक्षकशम्बैर्दूत्येत्ययमाशयमकृत लक्ष्यमथ ॥ १७ ॥ अथ मन्मथव्यथावान् मुखेन
वृत्या अवाच्यमपि वाच्यम् । कृतवान् स्वाकृतमसौ सराब्धिपूरस्य धृद्धिरहो ! ॥ १८ ॥ तदभिप्रायस्तस्या वचन
प्रायः श्रुतेः यथा प्रविधान् । देह ददाह नहि यत् प्रागन्तः सहनमिह हेतुः ॥ १९ ॥ समधिकतापस्तु तथा व्य
थामथामावधे यथा नैनाम् । बुद्धिपलसलिलमहरद्दुत्सुसरअवधियस्तस्याः ॥ २० ॥ मत्याधुत्त्य च वृत्या क्षित्या
पत्युर्निवेदितेऽथ तथा । अनिषिद्धमनुमत स्यादित्यासीत् प्रमुदितास्मा सः ॥ २१ ॥ कामिजनकामधेनौ यामि
न्यामथ च चौर इव निभृतम् । स मदनवेगवशोऽस्याः सदनमगान्मदनवेगनृपः ॥ २२ ॥ काम कामार्तस्तां वि
लोक्य परमप्रमोदमयमदधात् । युक्तमयुक्त तु सती साऽप्येतद्दर्शनात्तमधात् ॥ २३ ॥ अन्तर्द्वैपविपादौ सधृत्य
विमृश्य विभ्रमं च मनाक् । आसनदानाद्युचितप्रतिपत्तिं व्यधित सा नृपतेः ॥२४॥ मय्यपि महाननुग्रह इह य
त्पादारधारण विदधे । इत्याद्युक्त्वाऽऽतिमप्यवदिदशङ्कीरहो सुदृशः ॥ २५ ॥ संवाद एव सतत तनुवचनमनस्तु
शस्यते सत्याः । तस्यास्त्वमूत् प्रशस्यो भृश विसंवाद एव तदा ॥ २६ ॥ सत्यप्यसतीचेष्टितमस्पृष्ट कष्ट स्वशील
पुष्ट्यै सा । किमशुचिसङ्गं कुरुते न केतकी सौरभसमृद्ध्यै ॥२७॥ सोऽथ कृतार्थमन्योऽभ्यधत्त धन्येऽवरोधमाने
तुम् । त्वामागतोऽस्मि न यतो भाति विना काञ्चन रत्नम् ॥२८॥ छेकोक्त्या साप्यवदधृदेव ! देवेन सत्यमुक्तमि
दम् । परमभिर्यं महाहितहेतुः श्रुतिगोचरीचक्रे ॥२९॥ भर्तरि चिन्ताकर्तरि सति किन्तु कथ नु युज्यते तदि
दम् । उदयश्रीरपि भास्वति भास्वति सति भजति न मृगाङ्कम् ॥ ३० ॥ स विहस्य रहस्यमपि प्रकाशयन्नाह–

रमणि! रमणं ते। मरणार्थमेव विषमे कार्यमिपास्सङ्कटेऽक्षेप्सम् ॥३१॥ क च तस्य जीवितव्यं वाञ्छन्नन्तर्निपततः प्रतिज्ञातः। तत्कष्टमेत् पश्चादागन्ता तर्हि हन्ताऽस्मि ॥ ३२ ॥ अयमारेभे चुम्मारम्भो रम्भोरु! यत सर्वेषार्थे। स्वीकुरु तत्तरसा मां विश्वासान्धान् स्वगोप्यमिव ॥ ३३ ॥ उक्तं हि—"कुविअस्स आउरस्स य वसणासत्तस्स रायरत्तस्स। मत्तस्स मरंतस्स य सब्भावा पायडा हुंति ॥ ३४ ॥" अद्युमस्य कालहरणं शुभकरण सा विभाव्य तदनु जगौ। केयं त्वरा नराधिप! कराग्रगे काम्यकृत्येऽस्मिन् ॥ ३५ ॥ तच्छुद्धिनिर्णयावधि विधाय धैर्यं प्रभो! प्रतीक्षध्वम्। अत्यौत्सुक्य श्रेयः प्राप्तमपि भ्रासयत्यचिरात् ॥ ३६ ॥ उर्वीशोऽप्यविमृशन्मद्रूपैयमपि तु पति मृत्योः। निर्णयमपेक्षते तत्र कुर्वे कपटकृत्याऽपि ॥ ३७ ॥ तदुपायमायतिहितं सपदि विधास्यामिदं इति व्याह्या। वचनमनुमत्य तस्याः पुण्यैः प्रहितोऽनुगृहमगमत् ॥ ३८ ॥ साऽपि स्वबुद्धिकौशलपालितशीला व्यलोकतानुफलम्। आगमनं निजभर्तुस्तोपशुभप्रातकीवोत्का ॥ ३९ ॥ अथ हरियलः स्वकगृहस्वरूपविनिरूपणाय निपुणात्मा। कुसुमभियमुद्याने विमुच्य कुसुमप्रियः स्थाने ॥ ४० ॥ स्पश इव सुनिभृतवृत्त्या समेत्य निजम घनसंनिधौ क्वचन। गुप्तस्थितिरश्रौषीत् सखीमभि स्वप्रियां ब्रुवतीम् ॥ ४१ ॥ युग्मम् ॥ चिरयन्प्रेयानायात्यद्यापि नृपस्तु कपटतः स्फुटयन्। तदमङ्गलगिरमत्रागन्ता चेत्का गतिस्तन्मे? ॥ ४२ ॥ आचास्ये किमतः परमुत्तरमिह शीलमाः कथ धास्ये?। प्राणप्रहाणमेव हि शरणीकरणीयमितूमर्थे ॥४३॥ श्रुत्वा स इति सखीत्वाख्यमिषरिते निश्चये प्रियाचरिते। अतितुष्ट प्रकटोऽभूज्झटिति यदिष्ट शुभमिवास्याः ॥ ४४ ॥ सुविपुलपुलकोत्कलिकाक-

लिततनुयष्टिरिष्टगीस्तस्मै । स्वागतपृच्छापूर्वं सर्वं सा माह नृपवृत्तम् ॥ ४५ ॥ सोऽपि च निजवृत्तान्तं प्रस्तावधि
घेर्गृहगमभान्तम् । कथयामास यथास्य प्रेमस्थाने हि किं गोप्यम् ? ॥ ४६ ॥ रसवचसः सहसोक्त्या कुसुम
भीसीकृतिं कृती सोऽस्याः । आशङ्क्य मनसि चिकूर्तिं स्वस्याकृत चिकूर्तिं यावत् ॥ ४७ ॥ तावद्यावीवेपा
नि शेपानन्वकन्यस्तिवेशा । सा सुभगा मद्भगिनी चनीस्थिता किमिह नानीता ? ॥४८॥ उत्कण्ठुला मिमेलिपुर-
हमस्यापामि संमुखमिदानीम् । विपरीतलक्षणेय किमुताविपरीतमेयेवम् ॥ ४९ ॥ स्वब्रवीति सदिहाने पत्यौ
सत्योचितीकृते साऽवक । त्यज निजमिह सन्देह स्नेह सम्यग् हृदि चहेऽहम् ॥५०॥ हुचन्ति मुधा मृषा मिथः फलं
स्वस्वकर्मवशामिह यत् । उक्त्वेत्यनुपतिमगमत् सा सुमुखी संमुखममुष्याः ॥५१॥ तामायान्तीं दृष्ट्वा हृष्ट्वा पर्युल्ल
लास सहसा सा । विकसितिरुचिता कुसुमश्रियो वसन्तश्रियो योगे ॥ ५२ ॥ ते पद्पतनालिङ्गनकुशलप्रभावि
मिर्मिथश्च तथा । सप्रेम समगसातां यथाऽमुतां सत्यभगिनीत्वम् ॥ ५३ ॥ न सपत्नी स्वसपत्नीमपि सोढ्यौम
जर्यतः क्लिष्येत् । ते तु विजातीये अप्यतिस्नेहावहत पतिभाग्यम् ॥ ५४ ॥ ताभ्यां सहितः स्वहितं किमपि
विसृज्य प्रकाश्य किञ्चिद्सौ । कश्चित् पुरुष प्रेषीत् स्वागमनज्ञप्तये राज्ञः ॥ ५५ ॥ गत्वा सोऽपि चमापे चिमी
पण नृप ! निमज्य तत्पुत्रीम् । परिणीयोपवनमिह प्रापद्हो ! हरिबलः कुशली ॥ ५६ ॥ वाक्येन कर्णजाहावगा
हिनाऽनेन निहत इव हतधीः । तूष्णीं बराघवोऽन्यक्षूपात जात तु चिगिहान्पत् ॥ ५७ ॥ कथमयमगमल्लङ्काम-
लमत लङ्कापतेः सुतां च कथम् ? । सत्यमसत्यमुतेवं सम्प्रति कर्ताऽस्मि हा ! किमहम् ? ॥५८॥ शिशुपाल इव

स लोलः क्ष्मापालसुक्षुमे पवम्यपिकम् । सहसैव हरिमलस्यागमने तत् किमपि महि म(न)स्यम् ॥५९॥ पार्श्व
मवष्टम्य पुनः कुतो मय मेऽकुतोमयस्य ततः । चतुमानध्यानपूर्व हरिं निरीक्षे परीक्षेऽपि ॥ ६० ॥ ध्यायन्निति
गुरुकृत्य कृतमेतेनेति स युत प्रियया । प्राधीपितावृषिपतिरसुच्छमहिमोत्सवैः सपुरम् ॥ ६१ ॥ प्रापय्य सोऽपि
जायाद्वय ससीवं च सोधरसतुम्पम् । चपसममागत्य नृप तवैव वैषतमिधानतवान् ॥ ६२ ॥ चतु सत्कृत्य स
राज्ञा पृष्टोऽभापिष्ट शिष्टधीः स्पष्टम् । कष्टात्ममो ! मकृष्टास्कृतपूर्वी कृत्यमत्रागाम् ॥ ६३ ॥ तयाहि—चलितोऽ-
हमितः कतिचिद् दिवसैः समिचिमपांनिधेः प्रापम् । न दुस्तर सरीतु स्वशाक्नुवान् पारमुद्विविजे ॥ ६४ ॥ ताव
द्राक्षौ राक्षसमभिमुखमायान्तमेकमद्राक्षम् । नास्माक्ष भयमथ त लङ्कास्यौपयिकममाक्षम् ॥ ६५ ॥ सोऽप्या
ख्यधः पुरुपः पौरुषतः काष्ठमक्षण कुर्यात् । तस्यैव हि लङ्कायां भवेत्मवेशाश्च मानश्च ॥ ६६ ॥ विनिशम्येति
व्यमृर्श निश्चयिक निधनमच सांशयिकम् । लङ्कागमन तु तदप्यचदपकृत्यं प्रभोः कृत्यम् ॥ ६७ ॥ धिक् सेवक-
मुष तं यः प्रभुकृत्ये बिमेति बत मृतितः । कार्याशयाऽपि मरणं श्लाघाकरणं हि सुभटानाम् ॥ ६८ ॥ इत्युरसि-
कृत्य सत्प्रतिपत्तिरहं विचिन्त्य मृत्युचिताम् । महतीं चितां नितान्तं हुताशमुद्दीपयामास ॥ ६९ ॥ इह सहसा
साहसतः प्राविशमचिराच भस्मसाद्भवम् । कः स्यात्कालविलम्बः प्रज्वलने जाज्वलज्ज्वलने ॥ ७० ॥ तद्गुरुम
विस्मयास्पदमुपदेशाद्वाय पूरुषमभिधाय । व्यक्त मुक्त नक्तचरेण खचरेशितुः पुरतः ॥७१॥ सात्त्विकपुंस्याद्भुततया
तयाऽतितुष्टः सचारिकतः स नृपः । स्मरमिव भस्मीभूत मृतपतिर्मामुदजिजीवत् ॥ ७२ ॥ तत्समयमुपस्थिते मयि

नृपेन्द्र! तद्रूप एव देव इव। स भृशं प्रवासनपरः परमाप्रहतः सुतां प्राह्वात् ॥ ७३ ॥ तेनैव तेन महता महेन
वीवाह आवयोर्नवयोः। प्रददे च दिव्यवृत्त्याभरणप्रविणादि पञ्च मघम् ॥ ७४ ॥ करमोचने च तस्याः समाव-
देऽश्वीयहास्तिकादि न तु। अपि दीयमानमत्रागमनप्रतिबन्धहेतुत्वात् ॥ ७५ ॥ अत्रैव निवस साधय विद्यां
विद्याधरीमथाभिनवान्। भुङ्क्ष्व च भोगानपि नववल्लभयाऽभिनवमवनेषु ॥ ७६ ॥ इति खेचरेश्वरे चमणाति
भणामि स्म निजसुतविवाहे। त्वां देव! निमन्त्रयितुं प्रहितोऽस्मि विशालपुरपतिना ॥ ७७ ॥ शिथिलीकृत्य
ततस्तत्कृत्यमहं कथमिवेह तिष्ठेयम्?। निष्ठेय खलु महतां परकृत्यकृते स्वकृत्यहृति ॥ ७८ ॥ सद्यः प्रसद्य तद्वः
पावय पादावधारणेन पुरम्। सोऽप्याह याहि तर्हि स्वयमेष्यामोऽद्य वैवाहे ॥ ७९ ॥ एतद्विषये राज्ञाऽभिज्ञान
मदस्त्वमर्पयेरितिवाक्। स चन्द्रहासखड्गं ममार्पयामास दिव्यमसौ ॥ ८० ॥ तेनैव दैवशक्त्या संप्रेषि सपि
पोऽप्यहमिहाशु। हरिरित्युक्त्वा प्रददे नृपाय निपुणः कृपाणं तम् ॥ ८१ ॥ तादृक्कन्यारत्नाभिज्ञानात्सत्सु
क्तियुक्त्या च। मेनेऽखिलमपि नृपतिस्तत्तस्यासत्यमपि सत्यम् ॥ ८२ ॥ सत्याधारमसत्यं सत्यं प्रत्येति सत्यमेव
जनः। कर्पूरपूरमिलितं कर्पूरतयैव रेणुगणम् ॥ ८३ ॥ काणः काक इवैको धूर्तो मन्त्री न तद्वचो मेने। मनसा
वचसा तु न सोऽप्यपाचकार च्छलालाभात् ॥ ८४ ॥ नृपसर्पपिशुनचौरप्रसुरश्वापदारिशाकिन्यः। क्रुद्धा
अपि किं कुर्युश्छलं विना निष्फलारम्भाः ॥ ८५ ॥ पट्टकपटावटतिविकटे क्षिप्तोऽसौ सङ्कटे मया कुधिया। मद्व-
चनकृते भस्मीभूतस्वयशस्तमस्त्वमहो!। ॥ ८६ ॥ सन्मान्यतमस्तत्र च विचिन्तयन्नेवमवनिपः सभ्यान्। प्रत्याह

साहसमहो ! अहो ! प्रतिज्ञातनिर्वाहः ॥ ८७ ॥ सौभाग्यभाग्यसम्पत्तिरहो ! अहो ! अस्पृहा ! निजार्थेऽस्य ।
स्वस्वामिकृत्यकौशलमहो ! अहो ! मे सुहृत्परमः ॥ ८८ ॥ श्लाघामनर्घां घोषन् क्षितिपतिरिति सत्कार सार-
तरैः । स पुण्यभूषणाद्यैः प्रतिपाद्य गृहं स वस्तुमहम् ॥ ८९ ॥ तात्त्विकवृत्तिर्धर्मे सात्त्विकवृत्तिश्च विषमका-
र्येषु । किं वा कामगवीवत्कामितममितं तनोति नहि ॥ ९० ॥ तस्येत्यसमसमृद्धिं दृष्ट्वा दृष्ट्वा स्पृहावहां वसुधाः ।
तत्कृतकृत्याकरणात्सदा निनिन्दुः सदस्याः स्वम् ॥ ९१ ॥ अपि कातरः प्रवीरावदातमवदातरूपवत् पश्यन् ।
लभतेऽम्बिकाखिलोककवन्तोदकसङ्ख्यापितताम् ॥ ९२ ॥ तत्प्रभृतिनृपतिपरमप्रसादपात्रस्य तस्य किमपि यशः ।
तदनूपकृरिगुतो पुरमखिल मुखरमुखमासीत् ॥ ९३ ॥ कोपो भयेन लोभो दयेन मानः सुखेन दुःखमिव ।
स्नेहः कलहेन महेन शुग् विषादश्च हर्षेण ॥ ९४ ॥ कामग्रहोऽतितीव्रोऽन्तरितस्तद्भूतविस्मयरसेन । अवनिपतेर
जनि ततः शनैः शनैर्मन्दमन्दतरः ॥ ९५ ॥ युग्मम् ॥ सङ्कल्पयोनिजन्मनि मूलं सङ्कल्प एव न त्वन्यत् ।
सङ्कल्पस्य विकल्पान्तरेण नाशो नु सोऽस्तु कुतः ? ॥ ९६ ॥ यदुक्तम्—"काम ! जानामि ते रूपं, सङ्कल्पात् किल
जायसे । न त्वां सङ्कल्पयिष्यामि, न च मे त्वं भविष्यसि ॥ ९७ ॥ स रतिप्रीतिरताभ्यां ताभ्यां द्वाभ्यां द्विधा
प्रियतमाभ्याम् । सरतिप्रीतिः स्मर इव हरिरशुभवल्लक्ष्यचरितोऽसौ ॥९८॥ असहिष्णुरिव हरिबलमहिमानमभान
मत्सरः सविषः । दौत्याय भूमिसुभक्त्यै युक्त्यैन प्रेरयत्तितराम् ॥९९॥ वसुबहुमानावर्जितमना मनाङ्मुग्धधीः कदा
चिदथ । अपि चारित प्रियाभ्यां प्रपञ्च्य स समप्रसाममीम् ॥१००॥ अथिमाध्य माध्यनर्थं सुखस्यार्थं पार्थिव सप

रियारम्। भक्ष्याद्यैरपि सम निमन्त्रयामास सोल्लासः॥१॥युग्मम् ॥ भुक्तिसमये च ताभ्यां नवनवभेदान् विधाय
सविशेषान्। परिवेषणादि विदधे सकौशलं दर्शयितुमतुलम् ॥ २ ॥ प्रेतमहच्छलादतिदौःस्थ्याद्व्याधिः कुप
थ्यतो व्याधिः। कुनयात्कुयशः कोप कटूक्तितः शोक इष्टमृतेः ॥ ३ ॥ जलदनिनदादलर्कव्यालविषमनिलाच
वह्निरिव राज्ञः। तद्दर्शनान्मनोभूः प्रादुरभूद्व्यसनं प्रायः ॥ ४ ॥ युग्मम् ॥ इयतीः सुदतीः कौतस्कुतीः कृती
प्रासवान् प्रतीते तु। ये एव इन्त्यमु येद्रिमास्तदानीं महायस्ता' ॥ ५ ॥ इति तर्कात् कर्कशक्लृप्तोऽक्षौ सत्कृतः
ससम्भ्रमतः। भाव विभाव्य जगदे दुर्मतिसचिवेन सचिवेन ॥ ६ ॥ कृतरतिपोषे योषे इमे उमे एव देव!
जानीयाः। अनुरक्ते मर्कि तव नवनववेषैस्स्वपूपुषताम् ॥ ७ ॥ तच्छ्रवणाद्धरणिधवो द्विगुणरणरणकव्रणपथ
गुणात्। मन्त्रिन्! मन्त्रय हरिसूत्स्यूपायमापतिविह तर्हि ॥ ८ ॥ खल इव लब्धावसरः सचिवः प्रोवाच देव!
हरिचन्दनम्। चन्दनपरं नृणां यत् क जीवन मधिशातो ज्वलनम्? ॥ ९ ॥ यमराजाह्वानमिषायक्षेपात् क्षिप्यते
तद्भो सः। अपक्षीण क्षोणीरमणोऽप्यनुमणितपास्तविदम् ॥ १० ॥ धिग् धिग् धृष्टान् दुष्टान् पापिष्ठानधम
तान्यमवकथान्। ये दुर्धियः परेभ्योऽप्याश्रया दुर्धिय ददते ॥ ११ ॥ हरिमाहूय नरेन्द्रोऽन्यदाऽवदद् युज्य
ते न ते सुरवः। आकेन्दु सदपि वदाम्यनन्यसाध्य हि नः साध्यम् ॥ १२ ॥ निमिमप्रयिपोऽस्मि यम सम सुरैः
किङ्करैरिहोद्वाहे। वह्निप्रवेशसाध्य सिद्ध्यति तत्किन्तु भवतैव ॥ १३ ॥ सिंहस्य साहसजुषः सुजनस्य घनाघ
नस्य शशिनश्च। भानोश्च कृशानोरनन्यसाधारणी शक्तिः ॥ १४ ॥ सात्त्विकमुकुट! प्रागिव तत्साधय साध्य-

मिति विमोचयेन्नम्। सचिवमपमरचनं निश्चित्य स भिन्नापांचकृवान् ॥ १५ ॥ मान्वस्तुष्ट न्यविशत्क्ष्मापः पाप-
स्य धीसखस्य गिरा। धिग् मुक्तिमत्कृतिफल यच्छ्रा युक्त कृपात्रेऽस्त्रः ॥ १६ ॥ यदुक्तम्—"उपकृतिरेव खलानां
दोषस्य महीयसो भवति हेतुः। अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम् ॥१७॥ मागुरुकथा वितथा मा
भूदित्यभ्युपेत्य भूपोत्कम्। कामिच्छिचिन्त्य च धिय न्यवेदयच्चयितपोः स ततः ॥ १८ ॥ मत्प्रवारणास्तु साम्प्रा
किमप्युपालभ्य सम्यगभ्युदितम्। आधास्यामः स्वधिया साधुतर स चिर जीव ॥ १९ ॥ अथ पार्थिवः पुराद्ब
हिरन्तीकरणाकमिश्चितां निश्चिताम्। प्रज्वलितां ज्वालयितुं यशःशरीर स्वमिव सर्वम् ॥ २० ॥ वसुमान वर्धा
यितु प्रत्यापयितु परांश्च सपरिकरो। अप त संप्रेषयितु समीयतुः क्षितिपमश्चिपती ॥ २१ ॥ किमिव विदम्भ
मथवा सदम्भमतिसम्भ्रमेण सममिलत। तत्र च विचित्रचपलाः पौरजनाः प्रेक्षितु कुतुकम् ॥ २२ ॥ तारक
इव नयपथस पूरे दूरेण पश्यतां तेषाम्। किञ्चिरमयिचिन्त्य चितावह्नावह्नाच स विवेश ॥ २३ ॥ तैः स्पष्टमेव
दृष्टं प्रविष्टमात्रश्च भस्मसाद्भूतः। हाहारवाश्रुपातैः शुचा मुदा स्वचिपसचिवाभ्याम् ॥ २४ ॥ हरिहरिवरिबल
नामा हरिशर्मा धीरवीरकोटीर। कपटेनानेन मुधा वसुधाधीशेन दग्धः किम्? ॥ २५ ॥ आ ज्ञातमस्य लक्ष्मी-
लवनालुब्धो नृप व्यधाद्विधिं। दुर्धीसखधीसख्यावीक्ष्य धिगधमच्छितयीम् ॥ २६ ॥ इत्यादि मवेन तपोनि-
न्दामूत जनेऽनिष्ट यतः। प्रसरीसरीति दुर्गन्धवद्दुष्टं साईमपि पापम् ॥ २७ ॥ हरिरथ संस्मृतजलनिधिसुरस
चिविती मनागपि न दग्धः। प्रत्युतजात्योत्सहम्यर्णमिवौषधीसिरभत ॥ २८ ॥ अञ्जनसिद्ध इवासनि जनेरह-

इयञ्च तत्क्षणे स ततः । स्थित्वा काप्यपदोपमदोष एव समग्रमागात् ॥ २९ ॥ मुदिताभ्यां दयिताभ्यां सुविस्मि
ताभ्यां कृतस्मिताभ्यां च । सिक्तोऽमृतुम्यगतामृतेन सुरवच दिव्यतनुः ॥ ३० ॥ अन्यकृते कष्टकृतां विपदपि
सम्पद्यते सपदि सम्पत् । अगुरोर्न किं गरीयान् दहनाद्गन्धप्रपन्चविधिः ॥ ३१ ॥ यावत्प्रेमालापं तनोति ताभ्यां
स तावदावसथे । तत्राजगाम काम प्रकामममत्तः क्षणात्क्ष्मापः ॥ ३२ ॥ सोभ्यामभ्यायान्त भूपमवगत्य पत्यु
रित्यूचे । गूढं स्थित्वा किञ्चित्कौशलमवलोकय प्रिय ! नौ ॥ ३३ ॥ विहिते तथैव हरिणा हरिणाक्ष्यौ क्षोणिपस्य
साक्षेपम् । प्रतिपत्तिमासनाद्यां दक्षे न्यक्षामसूक्षाताम् ॥ ३४ ॥ पप्रच्छतुश्च सम्प्रति किमागमो देव ! देवपा-
दानाम् । सोऽप्याह ग्रथिल इव स्वप हसश्चुक्षसंश्च भृशम् ॥ ३५ ॥ कामिन्यौ मानिन्यौ नो जानाथे कथं पृथुत्क
ण्ठः । आनेतुमागतोऽहं युवां युवामिह निजावासे ॥ ३६ ॥ ते प्राहतुस्ततस्त नेतस्तव नेति युज्यते वक्तुम् । सेव
कजनस्य जनकः पोपकृते पत्प्रभुः प्रथितः ॥३७॥ पररमणी सुररमणीरमणीयाऽप्याशु सुपरिहरणीया । सेवक
रमणी तु नृणां जुपेव दूराद्विशेषेण ॥ ३८ ॥ राजा भवेत्प्रजानां दण्डविधानादकृत्यविनिवारी । यदि सोऽप्यकृ
त्यकारी विनिवारी तर्हि कस्तासाम् ? ॥ ३९ ॥ यामिकसत्त्रासकथं वादीपातश्च रक्षकनरेभ्यः । पानीयतः प्रदीपन
मिद समाप्रसरण तरणेः ॥ ४० ॥ तव कोऽयमसद्ग्रह इह मामेते यद्गुल कामयिष्येते । प्राणान्तेऽपि हि नार्यो
शीलं कलुषीकरिष्यावः ॥ ४१ ॥ यतः—"वरं शृङ्गोत्सुङ्गाद्गुरुशिखरिणः क्वापि विषमे, पतित्वाऽयं कायः कठि
नदृषदन्तर्विदलितः । वर न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने, वर वह्नौ पातस्तदपि न कृतः शीलविलयः

॥४२॥" तद्विरम विरम विरसात् पररमणीरमणपापतः परमात् । यदनीतिरीतिरीतिप्रतान इव म्लापितानयकृत्
॥ ४३ ॥ यदुक्तम्—"सत्यपि सुकृते कर्मणि दुर्नीतिरेकान्तरे श्रियं हरति । तैलेऽनुपयुक्तेऽपि हि दीपशिखां हरति
वातालो ॥ ४४ ॥ श्रेयस्कामेन ततः प्रवर्त्तितव्यं नये न पुनरनये । नय एव सर्वसम्पन्मूलमलङ्कारकश्च नृणाम्
॥ ४५ ॥ यतः—"द्रुमेषु सलिलं सर्पिर्नरेषु भवने मनः । विद्यास्वभ्यसनं न्यायः, श्रियामायुः प्रकीर्त्तितम् ॥ ४६ ॥
श्रुतेन बुद्धिः सुकृतेन विज्ञता, मदेन नारी सलिलेन निम्नगा । निशा शशाङ्केन धृतिः समाधिना, नयेन चाल
ङ्क्रियते नरेन्द्रता ॥ ४७ ॥" इत्यादि नयनबोधस्या नयनवयुक्त्याऽप्यबोधि नैव नृपः । अभिनवमहाज्वरार्तो सदौ
षधमपि मुधा भवति ॥ ४८ ॥ प्रद्युम्नमथ दुर्ध्येयया कथयामासाथ पार्थिवः कथमाः । प्रार्थनपरे नरेन्द्रे मय्य
प्ययि नानुरज्यसे ॥ ४९ ॥ मा पतिशङ्कां कुरुतां तदर्थमेवास्य भस्मसात्करणात् । युवयोर्नवयोस्तस्माद् गतिर
हमेवेह रतिहेतुः ॥ ५० ॥ अबले बलादपि युवामबले अवलेपवान् गृहीताऽहम् । तस्करसेनागच्छतमतुच्छ एवं
मिथः स्नेहः ॥ ५१ ॥ श्रुत्वेति जगदतुस्ते धिग् धृष्टध्वाङ्क्ष इव निषिद्धोऽपि । कटु रटसि कपटपटुधीर्निकटतटस्थ
कथङ्कारम् ॥ ५२ ॥ अपसर दूरे नो चेल्लप्स्यसे रभसेन पापफलमतुलम् । सेत्युक्तोऽहङ्कारात्करोति यावद् बलात्का
रम् ॥ ५३ ॥ कुसुमभिया स तावत् सद्यो विद्याबलेन हृदयन्वैः । तस्करयन्त्रं यद्वाऽपास्यत पेतुर्यथा वृन्ताः
॥ ५४ ॥ विशदा वयं सदाऽन्योपकारिणश्चैव सकलुषोऽन्येषाम् । अपकारीति किमेतत्त्यक्त्वा वृन्ता गता दूरे
॥ ५५ ॥ दुर्निग्रहोऽप्यनङ्गग्रहः सहाहंकृतिग्रहः सहसा । अतिभीत इव द्विजवरसार्योऽनश्यत्तदा तस्य ॥ ५६ ॥

हठपाशमन्धबन्धनदशनप्रणोत्थया महाव्यथया । अथ दुःस्थितः स गाढं मन्दं शुचामन्दमाक्रन्दत् ॥ ५७ ॥
शालाक्रन्दरवच्युतिभूपालाश्रीकसादिनाऽप तदा । स युवाऽपि वार्द्धकं हा लाभेच्छोर्मूलमपि नष्टम् ॥५८॥ उत्कण्ठ-
"कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः । विदधति तथाऽपराधं जन्मैव यथा वृथा भवति ॥५९॥
परदाररिरंसायामपि ही निषिद्ध विडम्ब्यते जन्तुः । दृष्टिविपदुष्टविषधरदष्टावपि या न किं मृत्युः ? ॥ ६० ॥
सक्रन्दनं क्षितेरथ वीक्ष्य कृताक्रन्दन विगतरदनम् । अतिदीनदीनवदन कृपया साऽवक् कृपासदनम् ॥ ६१ ॥
तसत्परपापपरोऽप्यपारकृपयाऽर्ऽग्रया मया त्वरया । अपि मोक्ष्यसेऽत्र न पुनः परत्र दैवेन नरकादौ ॥ ६२ ॥
मा पुनरेव कार्षीरित्याद्युपदिश्य बन्धनान्यस्य । विनिरस्य तस्य तरसा दुष्कर्माणीव मूर्त्तानि ॥ ६३ ॥ झटिति
ततः सुस्वाङ्गः स्वस्थीभूतः स भूतलस्थोऽपि । यद्वा हरिप्रियायाः प्रसादतः किं सुदुष्प्रापम् ? ॥ ६४ ॥ स पशु
शोषशुचैरमदमन्दाक्षमन्दमन्दगतिः । अनुतप्तः सविगुप्तः सुगुप्तमासस्ततः स्वगृहम् ॥ ६५ ॥ अतिवाह्य वाह्य
सुखदैरौपयिकैस्तां निशां विशां नेता । किञ्चिन्निपपिहितसुखः प्रगे त्रियाऽऽस्थानमास्थितवान् ॥ ६६ ॥ भक्त्यास-
तया विदितासद्वृत्ताद्विदितस्तस्य इव भवतः । भयविस्मयकरुणरसैर्युगपद्वियापत्रिरूपत्वम् ॥ ६७ ॥ अथ हरि-
वलोऽवलोकितसकलफलत्रातिचित्रतरचरितः । नृपतौ गृहागते सति प्रति प्रिये तत्प्रिय प्राह ॥ ६८ ॥ अनुचित-
कर्त्तुर्नृपतेः समुचितमेवेदमावयो द्वारम्याम् । आस्फालनविप्लवमृते प्रत्येति न जातु यन्मूर्खः ॥ ६९ ॥ मध्वी त्वस्य
धरित्रीधवस्य दुर्बुद्धिदानतो वल्मी । कुपथे प्रस्थापयिता रथस्य दुःसारथिर्वद्भूत् ॥७०॥ नृपतिर्नरश्च नारी तुरगस्त-

त्री च नाळभय शाळम्। चारुत्वाचारुत्वे स्यातामेषां परायत्ते॥७१॥ उक्तं हि—"वल्ली नरिंदचित्तं वक्खाणं पाणिअं च महिलाओ। तत्थ य वच्चंति सया जत्थ य धुत्तेहिं निज्जंति॥७२॥" दुर्मन्त्रिणैव नृपतिर्ज्वर इव विषमेण संनिपातेन। दुष्प्रतिकारस्तस्माद् युक्तस्तस्य प्रतीकारः॥७३॥ दुष्टाशयश्च जीवन्नहिरिव हि आशु दूषयति प्रकृतिम्। तद् ध्रुवमनर्थमूलं समूलमुन्मूलनीयोऽयम्॥७४॥ काऽस्तु च कृपा क्ष्मापालोरपि घात्ये दुर्नयावमास्येऽस्मिन्। ननु दमनं दुष्टानां शिष्टानां पालनं न्याय्यम्॥७५॥ दम्भमयश्च यथोपायस्तन्निग्रहाय निरपायः। तत्कृतदम्भानुसृतेर्दम्भी दम्भेन यत्साध्यः॥७६॥ कथयोऽप्याहुः—"व्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिनः। प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः॥७७॥" मन्त्रविदां किल मन्त्रः सर्वत्र श्लाघ्यते षट्कर्णः। षट्कर्णोऽप्यस्य पुनः श्लाघ्योऽमून्मन्त्रसिद्धिफलः॥७८॥ षट्कर्णं मन्त्रमसाविति कृतपूर्वी स्मृताग्विसुरसख्यात्। दृष्याभरणैर्दिव्यैर्दिव्यं नव्यं व्यधाद्वेषम्॥७९॥ सह रौद्ररूपयमराड्वेषप्रतिरूपदिव्यपुरुषेण। प्रातर्गतश्च नृपतेः पर्षदि दर्पोद्धतं सीत्तम्॥८०॥ हरिमिव दिवोऽवतीर्णं हरिपलमवलोक्य सकललोकयुतः। तारशवेषवपुष्यं व्यसेव्ययीत् क्ष्मापतिः सोऽन्तः॥८१॥ धिग्मन्त्रिवधोऽवद्यं निरवद्य किन्तु कृत्यमेतस्य। साक्षाद्यक्षपुरीभूतोऽप्ययमायातो यदिह॥८२॥ इति निर्णयता क्षोणीभुजा महासाहसिक्य! सहसाऽगाः। कथमिह कोऽयं च पुमानिति पृष्टः सोऽप्यभाषिष्ट॥८३॥ देवे दहनेनाह याचितः पितृपते पुरस्तावत्। तत्किङ्करैरनायिपि तोयात्तेनोदजीविषि च॥८४॥ तस्य प्रमाणभूमेः प्रभावतोऽभूवमत्र

ताम्रश्रीः। सात्त्विककक्ष्यस्तुष्टे सुरे किमिह न शिष्टनाम्?॥ ८५॥ वाङ्मनसयोरविषयः कोऽपि मयाऽवर्धि तस्य ऋद्धिश्च। का का कथ कथमिति क्षितिपाक्षिप्तः स पुनराख्यत् ॥८६॥ तस्य पुरी संयमनी शक्रपुरीश्रीविधर्षिनस यमनी। राजा स धर्मराजः प्रजाः पुनस्तत्र पुण्यजनाः ॥ ८७॥ ख्याताऽस्य तैजसीति च सभा शुभा ताम्र चूडमथ वृन्दम्। लेखनिकां पुस्तकमपि हस्तेषु चतुर्षु स च धत्ते ॥ ८८॥ शक्राद्योऽपि देवाः सेवाहेवाकमा वहन्त्यस्य। विष्णुब्रह्ममहेशा अपि तत्तुष्ट्यै कृतक्लेशाः ॥ ८९॥ योगीन्द्रा अपि योगाभ्यास भीत्या भजन्ति तस्यैव। किं बहुना त्रिभुवनमपि वनमिव सेकुर्वंशो तस्य ॥ ९०। तस्य च सचिता सविता दुस्तमसां प्रसविता प्रणाशमिह। सञ्ज्ञासञ्ज्ञा सञ्ज्ञापतीषु मुख्या पुनर्जननी ॥ ९१॥ भ्राता च तस्य शस्यः शनिरशनिरिवाति दुःसहो जगति। मलिनाऽपि विदितविष्टपपवना यमुना पुनर्जामिः ॥ ९२॥ धूमोर्णा धूम्रमुखी ध्रुष्याणां तस्य पट्टदेवी च। यान पुनः प्रधान धीरस्कन्धेषु धौरेयः ॥ ९३॥ त्रिजगत्कृतसत्कारस्तस्याथ वैध्यतः प्रतीहारः। चण्डमहाचण्डाविति नाम्ना धाम्ना च द्वास्थरौ ॥९४॥ लिपिकृच्च चित्रगुप्तस्त्रिजगत्सदसच्चरित्रलिपिकर्ता। ऋद्धिः सर्वाङ्गीणाऽप्यनन्यसाधारणाऽस्यैवम् ॥९५॥ तुष्टः स च कल्पतरू रुष्टस्तु कृतान्त एव सत्याह्वः। विश्वमसुमाल क्षकमक्षूण लक्षण चेतत् ॥९६॥ लोकेऽप्युक्तम्—“यस्मिन् रुष्टे भयं नास्ति, तुष्टे नास्ति धनागमः। निग्रहानुग्रहौ न स्तः, स जातः किं करिष्यति?॥९७॥” तां तादृशीं समृद्धिं पश्यन् त्वद्धोरमंसि सफलत्वम्। लोकोऽपि वक्ति भव्य बहुजीवनतो हि बहुदृष्टम् ॥ ९८॥ नाथ! मयाऽथ स युक्त्या निमन्त्रितः प्रीतिपूरितः प्रोचे। अस्यावरस्य

करणात् युक्तं वयमागमिष्यामः ॥९९॥ किन्तु सकृत्तव नेता नेता नः सौहृदं यदि समेयात् । मङ्गल्याख्यस्विलव
लाभस्तदुचितमर्कि किमपि कुर्मः ॥४००॥ अत्रार्थेऽस्यर्थं मयि मुहुर्मुहुः प्रार्थनामिव स कृत्वा । दत्त्वा दिव्याल
कृतिवस्त्राद्यमुवाद सादरकृत् ॥ १ ॥ बह्व्योऽपि दिव्यरूपा धन्याः कन्या इमा हि मम मान्याः । तदिमामेकां
परिणय पराणय प्रमदपदमस्मात् ॥ २ ॥ राजन्! राजाऽमात्यादीनां कन्या यथोचित देयाः । इयतैव हि मे तुष्टि
र्मर्तूफल मूल्यकृत्य यत् ॥ ३ ॥ द्विपां च घे वधे युद्धे, दुर्गप्रावे गृहे मठे । क्लिश्यन्ते सेवकाः किन्तु, नेतुरेवाखिल
फलम् ॥४॥ इत्यूचिवानह मोस्तदा नृपाध्यास्तया रथात्प्रेष्याः । नृपाग्रकस्त्वेति विसृष्टः प्रकृष्टबहुमानतस्तेन ॥५॥
आकारणार्थमथ पथदर्शनबहुमानदर्शनार्थं च । प्रजिघाय चैष्यताह्वयमिमं स चात्ममतीहारम् ॥ ६ ॥ द्रुतमसुनैव
तु दैवतदास्या निन्येऽहमिह महीश! ततः । पादावधार्यतां तत्पुरि सन्तो वर्षितार्पकृत ॥ ७ ॥ तत्संवादि
तदामीमवादि तेनापि चेत्रिणाऽभ्यधिकम् । दिव्यनरे वदति यतः कुतस्तमां स्यादिसंवादः? ॥८॥ अपि चीसख:
स पूर्त्तः कुधीसखस्तद्विवेद वेदमिव । मत्र हि सुप्रयुक्त चेत्तुं प्रभाऽपि जिह्मास्मा ॥ ९ ॥ उभयोरपि संवादा
दिति प्रभावात्कृताशयोन्मादात् । नृपसचिवाद्याः सर्वे गन्तुं तत्रौत्सुकायन्त ॥१०॥ यमनाम्नाऽपि नृणां मीस्तदा
तु कुतुकं विवक्षवोऽभूवन् । यमगृहमहमहमिकया नृपादयोऽप्यहह लोममहः ॥ ११ ॥ प्रागजातवन्तपातव्यथा
प्रथाऽप्यस्य मद्दिग्दृक्चगदात् । प्रथमाऽप्यत्सुमा कापि समग्राऽपि दूरमगात् ॥ १२ ॥ सज्जीचमूव भूमानथ भूपा
स्पूर्वमेव सचिवश्च । सामाजिका अपि मिथस्तथैव वैषमहतमतयः ॥ १३ ॥ दिव्यकनीदिव्यबहुप्रव्यविभूषादि

लोभतः कतिचित् । कौतुकितयाऽपि कतिचिद्विवेकरथ ते वह्निः पुरतः ॥१४॥ पौरजनोऽपि परिस्नुतमनोविनोदै-
कहेतुतवृत्तान्तात् । गद्गुरुपैतस्सार्थे ही ही लोभस्य साम्राज्यम् ॥ १५ ॥ अतिमहती काऽपि चिता रचिता ज्वलि-
ताऽप्ययो नृपादेशात् । अतिभीषणाऽपि तेषामतितोषकरी भवस्थितियत् ॥१६॥ भस्मीभवन निश्चितमनिश्चित
दूरतश्च कश्चावि । तदपि तवेकाग्रस्त्वस्तथाऽभवस्ते भवास्याऽहो ! ॥ १७ ॥ अत एवोक्तम्–"जा दवे होइ मई
अहवा तरुणीसु रूववंतीसु । सा जइ जिणवरधम्मे करयलमज्झट्ठिआ सिद्धी ॥ १८ ॥" पीतासवा इव भवाभि
नन्दनास्ते तदाऽतिगार्ध्यवशात् । नवनवघोषैर्जय्युपुजेह्युजेहसुम्म नद्दुम्म ॥१९॥ यावद्धपर्षिकया सर्वे कुर्वन्ति
वह्निसात्च ते । स्वपुत्रापत्कृपया स हरि परिचिन्तयामास ॥ २० ॥ कुधिया मया मुधिकया महाननर्थः
क एष आरब्धः । नरकेऽपि पापिनो मे क स्थान निरपराधवधात् ! ॥२१॥ शिक्षाऽपि सापराधस्यैव बुधानां हि सम्नु
चिता नो चेत् । भव्याभव्यविभागानभिज्ञत्वायाम्रितुलनैव ॥ २२ ॥ कोऽत्र ततः सदुपायः स ध्यायति यावदेतेसि
तावदयक । कृत्रिमकृतान्तवेश्री जनताभिश्रीयमाणोऽमुम् ॥२३॥ औत्सुक्यं मा कार्षुर्मा हार्पुर्दर्पेकृत्स्फल भासम् ।
यदि वः फलाभिलापस्तदा मदाक्यातमातनुत ॥ २४ ॥ विषमोऽस्मार्कं स्वामी रीत्यैव हि तत्र युज्यते गन्तुम् ।
राज्ञः कोऽप्यस्ति मान्यः सम मया यातु तत्प्रथमम् ॥ २५ ॥ राजा ततस्ततश्च प्रजाप्रजा अप च वीसस्वोऽप्या
सीत् । आद्यौ गमने नूनं भावि ममेष्ट फलमनूनम् ॥ २६ ॥ पुरतः सम्पत्प्रासौ विपदः प्रासौ पुनर्भवेत् पश्चात् ।
धूर्तः कोऽपि हि धीमान् धिया पुमर्थ समर्थयति ॥ २७ ॥ दाने पाने शयने व्याख्याने भोजने सभास्थाने ।

क्रयविक्रयेऽतिथित्वे राजकुले पूर्णफल आप्यः ॥ २८ ॥ शून्येऽरण्ये भवने ग्रामे तोये भये च संग्रामे । आरोहे-
प्यवरोहे पुरस्सरेश्च पथि रात्रौ च ॥ २९ ॥ व्याघ्रस्त्वेवमवादीद्यामि स्वामिन्! सहास्तुना पुरतः । अपि राज्ञाऽनु-
ज्ञातः कृतार्थमानीव मुमुदेऽसौ ॥ ३० ॥ अथ विप्रनरः प्रसरज्ज्वाले ज्वलने चकार विकराले । झम्पापात पृष्ठे
गुर्वीः सचिवश्च सह कैश्चित् ॥ ३१ ॥ निपतन्नेव स भस्मावशेषतां प्राप पापधीः सह तैः । स्वमनोरथैः कथञ्चि-
द्यमधाम जगाम यन्नाऽप्यम् ॥ ३२ ॥ राजाऽपि रत्नकलितः पतन्नुल्लसित तनोस्ति तज्ज्वलने । यावत्तावदग्रे हरिणा
कम्पापुजा भुजयोः ॥३३॥ आः किन्तु विप्रनिभ मामिह कुरुषे रुषेति परुषगिरम् । हरिराह नृप किमन सुस्थः
शृणु नाथ! वच्मि यथा ॥ ३४ ॥ असमीक्षितकृत्यकृतां नितान्तमप्राप्यमुत्र चानर्थः । कार्यं कार्यं साक्षात्समीक्ष्य
सुपरीक्ष्य तदक्षे ॥ ३५ ॥ मा खेद देव! देवैरपि यत्रीक्ष्येत कञ्चनापि मृतः । किन्तु पटु कपटनाटकमिव मया
प्रकटित सर्वम् ॥ ३६ ॥ दुर्मन्त्रिणैव मन्त्रितकुमन्त्रकूटप्रपञ्चरचनातः । प्राणान्तसङ्कटे त्वन्मुखेन बहुधोऽस्मि
निक्षिप्तः ॥ ३७ ॥ प्रक्षिप्यते स्म वृन्तप्रपातपीडाविनियतिकष्टभरे । प्रसभ प्रभो! भवानपि हहा! महापापिना
तेन ॥ ३८ ॥ मा जीवन् यस्त्वासीमवन् परस्मै ददाति दुर्बुद्धिम् । यश्च परद्रोहपरः परधनललनारतिर्यश्च ॥ ३९ ॥
नृप! आर्यः किं कुर्याद् यत्र कुमन्त्री कुमन्त्रमन्त्रणाकृत् । दुष्टोऽपि स किं कुर्याद् यत्र सुमन्त्री सुमन्त्रपरः ॥४०॥
अत एव देव! छद्मप्रपञ्चतः सचिवमभिसादकृपि । व्याधिविपद्धमवुष्ठा यथा कपञ्जिकपृष्ठेयाः ॥४१॥ स्वामिन्!
स्वामी त्व मे तनुपेक्षे त्वां कथं हुताशान्तः? । प्रविशन्तु हन्त यतः स्वामिद्रोहो महापापम् ॥४२॥ अन्येषामपि नियतं

द्रोह स्यादस्तु स्वसन्द्रोहः । मित्रस्वामिगुरूणां स पुनः को वेद किं फलिता? ॥ ४३ ॥ शृण्वन्निति भृशाशङ्कि-
तचेता नेता क्षितेर्विचिन्तितवान् । हा वेत्ति दुष्टचेष्टितमयं मदीय समग्रमपि ॥ ४४ ॥ इत्युग्रवचघनाघनिविड-
पीडाऽतिपीडया तस्थौ । न्यग्वक्त्रः शून्यमना विनाऽपि मूर्च्छां स मूर्च्छितवान् ॥ ४५ ॥ युग्मम् ॥ तैस्तैर्वचोभि
रुचितैरभिरुचितैस्तस्य तद्व्यथामथ सः । अगदैरिव सद्वैद्यः शमयामास प्रकृतिसुजनः ॥ ४६ ॥ दृष्ट्वाऽथ विविध
दैवतसान्निध्याद्भुतैस्तदुरुचरितैः । अतिविस्मितः स्वकशिरः स कम्पयञ्चिन्तयाञ्चकृवान् ॥ ४७॥ एवंविधेऽपरा
धेऽप्येवंविधशक्तिमानयं यन्माम् । न ददाह न जग्राह च राज्यं परमोपकारी तत् ॥ ४८ ॥ स्वयमक्षमः समग्रं
क्षमते क्षमया न लाति चान्यर्द्धिम् । न नव तत्क्षमतायामिद तु लोकोत्तरं चरितम् ॥ ४९ ॥ अस्योत्तमस्य
परमोपकृतः प्राणात्किलोत्तमर्णस्य । अधमाधमोऽधमर्णः कथमनृणीभावमासाऽस्मि? ॥ ५० ॥ इत्यादितत्प्रशासा
स्वकनिन्दासादरश्चिरेण ययौ । भवनिर्विण्ण इव स कथमपि भवनं विभुः स भुवः ॥ ५१ ॥ अस्तोका अपि
लोकाः प्रत्याशाऽप्यर्थसामथितशोकाः । विस्मयमयतद्वृत्तोपबृंहिणः स्वान् गृहान् जग्मुः ॥ ५२ ॥ तस्मादेवाक-
स्मिकनिमित्ततश्चित्तमस्य भूपस्य । वैराग्यरङ्गसङ्गममगमन्महतां हि रीतिरियम् ॥५३॥ प्रत्युपचिकीरिव ततस्तस्मै
विसेरयोधनां स्वकनीम् । स्वां कीर्तिमिव स दत्त्वा व्यवाहयत् समहमह्नि शुभे ॥ ५४ ॥ करमोचनपर्वणि च
प्रददे प्रमदेन राज्यमपि सर्वम् । चिरसञ्चितमिव सोऽप्रतापमुचितज्ञताऽस्याहो ॥ ५५ ॥ प्राकृतदुष्कृतवितति
प्रतिक्रियां सत्क्रियां गुरोः कृत्वा । कक्षीकृत्य स दीक्षां दक्षः कृतवांश्च शिवदीक्षाम् ॥ ५६ ॥ अथ काञ्चनपुर

नृपतिः सुताप्रवृत्तिं विभावयन्नमितः । पथिकोक्त्या तत्सादृग् हरिबलवृत्तान्तमश्रौषीत् ॥ ५७ ॥ यतः—"वार्त्ता च कौतुकवती विशदा च विद्या, लोकोत्तरः परिमलश्च कुरङ्गनाभेः । तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रयं प्रसरतीति किमत्र चित्रम्? ॥ ५८ ॥" संभाव्य तं च जामातरमतिमुदितः प्रधानपुरुषप्रमुखात् । निश्चित्य कृत्य विदसुमानाययामास पुत्रमिव ॥५९॥ सोऽप्युच्चैस्तनुपर्णाधिप इव सर्वर्द्धिपूर्वमागतवान् । सह कान्ताभिस्तिसृभिस्तत्र सुचिसमयमुदयमकृत ॥ ६० ॥ वत्से! स्वेच्छावृत्त्याऽप्यनर्घ्या कोऽप्यचापि विश्वार्थः । पतिरिति परमाग्याऽसीत्यस्याधि सुतापि विश्वार्थैः ॥६१॥ प्रेम्णा पदे भवेय निजपदमेवेति राज्यमपि तस्मै । श्वशुरः प्रदाय दीक्षामादाय च सद्यपितः सिद्धः ॥ ६२ ॥ अथ हरिबलः परबलप्रसर्पिबलदर्प्पसर्पसर्पारिपुः । भाग्याभ्युदयात्प्राप्ते प्राज्ये राज्ये स्म पालयति ॥ ६३ ॥ प्रेयस्यस्तस्य ततस्तासंस्तिस्रोऽपि पट्टदेव्यस्ताः । अन्या अपि नृपकन्याः पाणिगृहीतीर्विहितवान् सः ॥ ६४ ॥ जिनवानाद्यैः पुण्यात्फलमतुलं तत्रयेऽपि नाद्भुतकृत् । हरिनियमादल्पादपि फलमीदृशमद्भुतं तु महत् ॥ ६५ ॥ अमृत कन्यासूत्र चर्मेष्वत्रादि चक्रिरत्नानि । वटबीज बालेन्दुर्बालहरिस्तन्तुजन्तुश्च ॥६६॥ जात्यमणिः सिद्धरसो रसाङ्गमेकाक्षरा महाविद्या । उपमा इमा हरिकृते सुकृतेऽल्पेऽनल्पतरफलदे ॥६७॥ सन्धानितकम् ॥ क नु कैवर्त्तकुकृत्य? क्वेप परमा समा (पि भूप) विपत्परमा । कदरे कोटिगुणाधिकफलमवाप्याऽऽपि जीवदया ॥६८॥ इत्यादिना स्वनुदिनं निजनियमाराधनं नृपस्तेऽपि । लब्धधन तद्वन इव विभावयन् व्यस्मरभापम् ॥ ६९ ॥ विस्मरति जातु नान्योऽप्यनुभवविपचीमचलस्थफलस्य । सुकृतस्य किं पुनरयं तन्त्र-

पसिद्धिर्निधिः सुधियाम् ॥ ७० ॥ अथ सोऽन्यदा निजहृदाऽध्यासीद् यदेशनाऽमृतावासीत् । वासीव दिव्य
मद्धिर्ममेयमायाति स गुरुश्चेत् ॥७१॥ स्यां तत्कृतार्थ इति तद्ध्यानाकृष्ट इवाशु समवसृताः । ते तत्र श्रीगुरवः
सूर्य्य महतां विलम्ब्योऽर्थो॥७२॥ युग्मम्। धनपालश्रुततदागमः क्षमापालवल्लभस्तस्य सः। आडम्बरेण गुरुणा जगाम
सुगुरुस्थ विननाम ॥ ७३ ॥ व्यज्ञपयच्च संविज्ञः पुण्यनिधे! त्वत्प्रसादतः प्रापम् । इयतीं समृद्धिमिद्धामधिक
निन्योऽपि सयोऽहम् ॥ ७४ ॥ अवधेहि धेहि करुणां कारुण्यनिधे! निधेहि सिद्धौ माम्। हृदि संनिधेहि मद्धि
तमभिधेहि विधेहि मयि तुष्टिम् ॥ ७५ ॥ अथ स प्रणतं नृपतिं सुकृतैकरतं विचिन्त्य सत्यगिरा । गुरुरगुणाढ्य-
न्यस्य धर्मे धीर्यस्य ते सुधियः ॥ ७६ ॥ उक्तञ्च–"केचिद्भोजनभक्तिनिर्भरधियः केचित् पुरन्ध्रीपराः, केचिन्मा
ल्यविलेपनैकरसिकाः केचिच्च गीतोत्सुकाः । केचिद् द्यूतकथामृगव्यमदिरानृत्यादिसद्भावराः, केचिद्वाजिगजोक्ष
यानरसिका धन्यास्तु धर्मे रताः ॥ ७७ ॥" धर्मो द्वेधेऽपि पुनर्यतिधर्मश्राद्धधर्मभेदाभ्याम्। मूलं किल जीवदयाऽ-
शेषस्तस्यास्तु विस्तारः ॥७८॥ तामेव च निर्वोढुं कृतिनः कुर्वन्ति सर्वविरतिरतिम्। तामन्तरेण तस्या न स्यादा
राधन सम्यग् ॥ ७९ ॥ यो यतिधर्मे नालकर्म्मीणः स प्रवीण! गृहिधर्मम् । सम्यक्त्वपूर्वमङ्गी सरङ्गमङ्गीचरीकर्त्ति
॥ ८० ॥ सोऽपि द्वादशरूपः प्ररूपितः प्राणिरक्षणायैव। लोका अपि लक्ष्म्यै किं विदधति विविधांश्च सदुपायान्?
॥ ८१ ॥ धर्म्माः सर्वेऽपि कृपां विना विनश्यन्त्यधद्ध्यमचिरेण। छेदे हि नागवल्ल्या दूरेऽपि दलानि शुष्यन्ति
॥ ८२ ॥ किं बहुना यमनियमप्रमुखमशेषं दयां विना विफलम्। मधुफलमल्पमपीदं तयेति तस्यैव यतितव्यम्

॥ ८३ ॥ इत्यादिदेशनामृततुष्टः स विशिष्टभावतः सम्यक् । सम्यक्त्वदर्शनपूर्वं समाददेऽणुव्रत पूर्वम् ॥ ८४ ॥
शेषव्रतान्यपि स यथाशक्ति समादाय सप्रियः सपक्षम् । प्राप मुदं च तदाप्तेः सुरद्रुमाप्तेरिव दरिद्रः ॥८५॥ स ततः
प्रयतः स्वस्मिन् देशे कृतधर्मकर्मविनिवेशे । पटहोद्घोषणपूर्वं न्यवारयन्मारिनामाऽपि ॥ ८६ ॥ व्यसनानि च
सप्त जगत्स्वसत्व्यसनानि सप्तनरकाणाम् । सत्यद्वारानिव स स्वोर्व्यां निर्वासयामास ॥८७॥ अमृतेन च सत्तुल्यक
गतेन तेन प्रतेनिरे नृणाम् । अपकारसारमतिना पशुप्रकाराः सदुपकाराः ॥८८॥ यतः—"मेहाण जल चन्दाण चन्दिणं
तरुवराण फलनियहो । सप्पुरिसाण विढत्त सामन्न सयललोआण ॥८९॥" इत्याद्यगण्यपुण्यैर्नयनैपुण्यैश्च धर्म्यं
साम्राज्यम् । निजसाम्राज्य चैकातपत्रतां प्राप्यतानेन ॥९०॥ किं जात्या किं कुलैः किं सङ्ख्याऽथ किं कुलस्थित्या ? ।
यदि सोऽपि हरिपलोऽभूद्भूपालश्चेरणाश्राशु ॥ ९१ ॥ तदुक्तम्—"कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वाऽपि गोलोमतः,
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् । काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना, प्राकाश्यं स्वगु
णोदयेन गुणिनो गच्छन्ति किं जन्मना ? ॥९२॥" ऐश्वर्यशौर्यपुरुषोत्तमतासुमहस्विताविभिः स हरिः । सत्या-
ह्रोऽभूपापलपद्मासत्यादिभिर्न पुनः ॥ ९३ ॥ पद्मा तद्भावर्णनममर्हमेवार्हणीयचरितानाम् । साम्राज्यासावपि
यस्तत्याज न जातु धीवरताम् ॥ ९४॥ सुरवरसमयेऽस्य मधुतमसमये यातेऽथ समय इव समयम् । ज्ञात्वा सम-
यविदस्ते समया पुरमागमन् गुरवः ॥९५॥ श्रुत्वा तेषां पादारविन्दार्णं सावधार्णं विविधत् । गत्वा नत्वा तस्मि-
न्नृपे निविष्टे जगुर्गुरवः ॥ ९६ ॥ यो यो यस्माद्रूपापकसमृद्धिमाप्नोति तेन सुतरां सः । आराध्यः स यथाऽर्थी तां

पुनरधिकाधिकां वृत्ते ॥ ९७ ॥ जीवदयातः सुकृतादियतीं प्राप्तोऽसि भोः ! परां भूतिम् । तस्यामेवाराधय साधय सिद्धिं च दुस्साधाम् ॥ ९८ ॥ आराधन च भूधव! तस्याः सम्यग् यतित्व एव स्यात् । श्राद्धे सपादविंशोपक एव यतः सप्तमेऽपि दया ॥ ९९ ॥ यदुक्तम्—"थूला- सुहुमा जीवा० ॥ ५०० ॥" गाथेयं प्राग्विवृता । तत्संप्रति यतिधर्मं गृहाण निगृहाण दुर्भेदं मोहम् । राज्यप्राज्यधनाढ्य विद्युद्द्योतमिव चिन्त्याः ॥ ५०१ ॥ इत्युपदेशप्रसर-वैराग्यरसोर्मिधर्मितः क्षान्तः । स्वपदे प्रजाप्रभुवेऽसौ संस्थाप्य ज्येष्ठमात्मसुतम् ॥ ५०२ ॥ सह सिद्धिभिर्देवीभिः प्रव्रज्य सर्वोपयुज्य यतनायाम् । दुस्तपतपांसि तस्या शाश्वतमुक्तिं ययौ मुक्तिम् ॥ ५०३ ॥ युग्मम् ॥ हरियल-चरित्रमिति भोः ! विभाव्य भव्या इहापि पूर्णफलम् । सुकृतप्राप्तिप्रथायां जीवदयायां कुरुत यत्नम् ॥ ५०४ ॥

॥ इति प्रथमाणुव्रते हरिबलधीवरकथा ॥

उक्तं प्रथममणुव्रतं साम्प्रतं द्वितीयमाह—

बीए अणुव्वयमी परिथूलगअलियवयणविरईओ। आयरिअमप्पसत्थे इत्थ पमायप्पसंगेण ॥११॥

'बीए अणु' इति, मृषावादः क्रोधमानमायालोभत्रिविधरागद्वेषहास्यभयभीडाक्रीडारस्यरतिदाक्षिण्यमौखर्यविकथादिभिः संभवति, पीडाहेतुश्च सत्यवादोऽपि मृषावादः, यतः—"अलिअं न भासिअव्वं अत्थि हु सच्चंपि जं न वत्तव्वं । सच्चंपि तं न सच्चं जं परपीडाकरं वयणं ॥१॥" स च द्विविधः—स्थूलः सूक्ष्मश्च, तत्रातिदु-

प्रविषयासमुत्थः स्थूलस्तद्विपरीतः सूक्ष्मः, आह च–"दुविहो अ मुसावाओ सुहुमो थूलो अ तत्थ इह सुहुमो । परिहासाइप्पभवो थूलो पुण तिव्वसंकेसा ॥१॥" श्रावकस्य सूक्ष्मे मृषावादे यतना, स्थूलस्तु परिहार्य एव, यदा सप्तककृर्णिकृत्–"जेण भासिएण अप्पणो परस्स वा अतीव वाघातो अतिसंकिलेसो अ जायते तं आढाए अण द्वाए वा ण वएज्ज"त्ति । अथ सूत्रगाथाव्याख्या–द्वितीयेऽणुव्रते 'परिस्थूरकम्' अतिबादर लोकेऽप्यकीर्त्यादि हेतुरलीकवचन तच्च कन्यालीक १ गवालीक २ भूम्यलीक ३ न्यासापहार ४ कूटसाक्षित्व ५ भेदात् पञ्चप्रकार, तत्र द्वेषादिभिरविषकन्यां विषकन्यां विषकन्यां वाऽविषकन्यां सुशीलां वा दुःशीलां दुःशीलां वा सुशीलामि त्यादि वदतः कन्यालीकम् १ । एवमल्पक्षीरां गां बहुक्षीरां बहुक्षीरां वाऽल्पक्षीरामित्यादि वदतो गवालीकम् २ । परसत्कां भूमिमात्मादिसत्कामात्मादिसत्कां वा परसत्काम् ऊपरं वा क्षेत्रमनूपरमनूपरं वोपरमित्यादि वदतो भूम्यलीकम् ३ । उपलक्षणानि चैतानि तेन कन्यागोभूम्यलीकवत्सर्वद्विपदचतुष्पदापदालीकान्यपि वर्ज्यतया ज्ञेयानि, आहुरपि–"कन्नागहणं दुपयाण सूअगं चउपयाण गोवयणं । अपयाण दव्वाणं सव्वाणं भूमिवयणं तु ॥१॥" पश्चैवं तर्हि द्विपदचतुष्पदापदग्रहणमेव सर्वसंग्राहकं किमिति न कृतं ?, सत्यं, किन्तु कन्याद्यलीकानां लोकेऽति गर्हितत्वाद्विशेषेण वर्जनार्थमुपादानम्, कन्याऽलीकादौ च भोगान्तरायद्वेषवृद्ध्यादयो दोषाः स्फुटा एव, तथा न्यासस्य धनधान्यादिस्थापनिकाया अपहारः–अपलापो न्यासापहारो महापातकहेतुः, न्यासकर्त्ता हि परमास्तो ऽयं ममेति साक्षिण विनाऽपि स्वधनं न्यासीकुरुते, स च महालोभाभिभूतो विश्वासघातमपि कृत्वा तदपलपति,

न्यासापहारस्य चावसावादत्वे सत्यपि वचनस्यैव प्राधान्यविवक्षणान्मृषावादत्वम् ४ तथा लञ्चादेयविषये साक्षीकृतस्य लञ्चामत्सरादिना कूटसाक्ष्यप्रदानात्कूटसाक्षित्वमत्र परत्र भवेऽप्यनर्थहेतुर्वसुराजस्येवाजशब्दार्थ साक्ष्ये लोकेऽप्युच्यते—"भूमि साक्ष्य यथार्थ, लम्बन्ते पितरस्तथ। स्वदीयवचनस्यान्ते, पतन्ति न पतन्ति च ॥ १ ॥" न्यासापहारकूटसाक्षित्वयोश्च भूपवादयलीकान्तर्भावेऽपि लोकेऽप्यतिनिन्द्यत्वात्पृथगुपादान, तथा च लौकिकवचन—"कूटसाक्षी सुहृद्द्रोही, कृतघ्नो दीर्घरोषणः। चत्वारः कर्मचाण्डाला, पञ्चमो जातिसम्भवः ॥१॥" तथा—"हस्ते नरकपाल ते, मदिरामांसभक्षिणि !। मातुः पृच्छति मातङ्गि !, किं तोय दक्षिणे करे? ॥ २ ॥ चाण्डाली प्राह—"मित्रद्रोही कृतघ्नश्च, स्तेयी विश्वासघातकः। कदाचिच्चलितो मार्गे, तेनेय क्षिप्यते छटा ॥२॥ कूटसाक्षी मृषावादी, पक्षपाती प्रगशुके। कदाचिच्चलितो मार्गे, तेनेय क्षिप्यते छटा ॥ ३॥" एतस्य पञ्चविधाली कस्य यद्भूचन—भाषण तस्य विरतेः, 'आयरिअ'मित्यादि प्राग्वकविस्येकादशगाथार्थः ॥ ११ ॥ अस्यातीचारान् प्रतिक्रामति—

सहसा रहस्सदारे मोसुवएसे अ कूडलेहे अ। बीअ वयस्स अइयारे पडिक्कमे० ॥ १२ ॥

'सहसे'ति ॥ 'सूत्रं सूचनकृ'दिति वचनात्सहसाशब्देन सहसाऽभ्याख्यानम् रहःशब्देन रहोऽभ्याख्यान स्वदारशब्देन च स्वदारमन्त्रभेदः उच्यते, तत्र सहसा—अनालोच्याभ्याख्यान—चौरोऽयं पारदारिकोऽयमित्याद्य-

सदोषाध्यारोपणं सहसाऽभ्याख्यानं १, रहसि-एकान्ते कैश्चिन्मन्त्रे क्रियमाणे आकारेङ्गिताद्भिर्ज्ञात्वेदमिदं राजविरुद्धादिकमेते मन्त्रयन्ते इत्याद्यभिधानं रहोऽभ्याख्यानं, पैशुन्यं वा रहोऽभ्याख्यानं, यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यति २ स्वदाराणां विश्वासभाषितस्यान्यस्मै कथनं स्वदारमन्त्रभेदस्तत्र सहसाविपदन्नपस्य द्वन्द्वस्मिन् ३, एवमन्यत्रापि, ननु स्वदारमन्त्रभेदे रहोऽभ्याख्याने च सत्यस्यैव कथनात्कथमतिचारता ?, उच्यते, स्वमन्त्रप्रकाशनजनितलज्जादितः कलत्रादेर्मरणाद्यनर्थस्यापि सम्भवात् परमार्थतोऽस्यासत्यत्वमेव, यदाहुः—"न सत्यमपि भाषेत, परपीडाकरं वचः । लोकेऽपि श्रूयते यस्मात्कौशिको नरकं गतः ॥ १ ॥" स्वदारग्रहणस्य चोपलक्षणत्वान्मित्रादिमन्त्रभेदः स्त्रियं प्रति स्वपत्यादिमन्त्रभेदश्चातिचारतया ज्ञेयः ३, तथा द्वयोर्विवादेऽन्यतरपक्षेणोपायशिक्षणं सम्यगज्ञातमन्त्रौषध्याद्युपदेशनं निकृतिप्रधानशास्त्राध्यापनादि वा मृषोपदेशस्तस्मिन् ४, अन्यमुद्राक्षरादिना कूटस्यार्थस्य लेखनं कूटलेखः ५, तस्मिंश्च, शेषव्याख्या प्राग्वत्, अथ कूटलेखस्य स्थूलासत्यत्वात्कथं न तत्करणे व्रतभङ्गः ? इति चेत्, सत्यं, परमसत्यस्योक्तिर्मया प्रत्याख्याता इदं तु लेखनं न तूक्तिरित्यभिप्रायेण मुग्धबुद्धेर्व्रतसापेक्षस्यातिचार एव, यद्वाऽनाभोगादिनाऽतिचारता, यदाह—"सहसाऽभक्खाणाई जाणंतो जइ करिज्ज तो भंगो । जइ पुणऽणाभोगाईहिंतो तो होइ अइयारो ॥१॥" एतद्व्रतफलं विश्वासयशःस्वार्थसिद्धिप्रियादेयाऽमोघमधुरवचनतादि, तथा च प्रोचुः—"सच्चा उ मंतजोगा सिज्झन्ती मम्मअत्थकामा य । सच्चेण परिग्गहिआ रोगा सोगा य नस्संति ॥ १ ॥ सच्चं जसस्स मूलं सच्चं

विस्सासकारणं परमं। सच्च सग्गद्दारं सच्च सिद्धिइ सोपाणं ॥ २॥" लोकेऽपि—"सत्येन धार्यते पृथ्वी, सत्येन तपते रविः। सत्येन वायवो वान्ति, सर्वं सत्ये प्रतिष्ठितम् ॥३॥" दृश्यते हि सम्प्रत्यपि सत्यवादिनां दिव्यादौ विशुद्धता राजप्रजापूजाश्लाघादि, एतस्याग्रहणेऽतिचरणे वा वैपरीत्येन फलं, भण्यते च—"जं जं वयइ जाइं अप्पिअयाइं तहिं २ होइ। न य सुणइ सुहे सद्दे सुणइ असोअव्वए सद्दे ॥ १॥ दुग्गंधो पूइमुहो अणिट्ठवयणो अ फरुसवयणो अ। जलएलमूअमम्मण अलिअवयणजंपणे दोसा ॥ २॥ इहलोइच्चिअ जीहा छेअं वह च बंध वा। अयसं धणनासं वा पावंति य अलिअवयणाओ ॥ ३॥" असत्यवादी हि विनीतताप्रशान्ततादिपटुगुणोपेतोऽपि सर्वत्राविश्वास्यतया न लौकिकव्यवहारे नापि धर्मेऽधिकारितामर्हति, यतः—"लावअपीमं इक्क नासइ भार गुडस्स जह सहसा। तह गुणगण असेसं असच्चवयण विणासेइ ॥ १॥ वायसपयमिक्कपि हु साहुविअलक्खणाण लक्खपि। अपमाणं कुणइ जहा तह अलिअ गुणगणं सयल ॥ २॥ तालपुड गरलाणं जह पडुयारीण खित्तिओ धाही। दोसाणमसेसाणं तह अविगिच्छो मुसावोसो ॥ ३॥" श्रूयते हि कस्यापि श्रमणोपासकस्य सूनुर्निर्द्धर्मो पित्रा प्रसभ गुरुपार्श्वे नीतो धूर्ततया गुरूक्तान् सर्वानपि यावन्मतनियमान् प्रतिबुद्ध इव सादरं प्रतिपद्य नियमग्राह्यार्थं श्राद्धादिभिः प्रशस्यमानः प्राह—एतेष्वेको द्वितीयव्रतनियमो मम मुत्कलो दुष्पालत्वात्तस्य, एतावता सर्वमिदमसत्यमेव मयोक्तमिति तस्याशयः, ततश्चायोग्योऽयमित्युपेक्षितो गुरुपित्रादिभिः, यतो हैमं वचः—"पारदारिकदस्यूनामस्ति काचित्प्रतिक्रिया। असत्यवादिनः पुंसः प्रतीकारो न विद्यते ॥ १॥ एकत्रासत्यज पापं,

पाप निःशेषमन्यतः। द्वयोस्तुल्यविभुतयोरायमेवातिरिच्यते ॥ २ ॥” इति श्रावकगाथार्थः ॥ १२ ॥ अत्रिआ मते कमलश्रेष्ठिकथा, तथाहि—

विजयंमि पुरे पत्तविजयंमि जयतरे। अत्थि दुत्थजणाधारो, नयसारो नरेसरो॥१॥ अमाई सच्चवाई अ, विअक्खाओ सावओ तहिं। सिट्ठी नामेण कमलो, कमलो व सुकोमलो॥२॥ अप्पलोहो अप्पमोहो, परवोहपरम्मुहो। उचिअन्नू कयन्नू अ, सच्चसंघो सधम्मिओ ॥३॥ वल्लहा तस्स सीलेण, विमला कमलासिरी। तप्पुत्तो विमलो नाम, समलो पुण कम्मुणा ॥४॥ पुत्तो हि पिउणो तुल्लो, एअं लोअप्पसिद्धिअं। विवरीअं अकासी सो, सणीव रविनंदणो ॥५॥ उक्तञ्च केनचित्—“न म्लापितान्यखिलधामवतां मुखानि, नास्तं तमो न च कृता भुवनोपकाराः। सूर्यात्मजोऽहमिति केन गुणेन लोकान्, प्रत्याययिष्यसि शने! शपथैर्विना त्वम्? ॥ ६ ॥” नासइ धम्मनामेण, धणनामेण धावइ। मन्नइ पंडिअं अप्प, वसइ चरिअ निअं ॥७॥ पिच्छिउं तं तहारूवं, अन्नया जपए पिआ। धणज्झणेण किं वच्छ!, कुण जत्तं गुणज्जणे ॥८॥ यतः—“आत्मायत्ते गुणाधाने, नैर्गुण्यं वचनीयता। दैवायत्ते पुनर्वित्ते, पुंसः का नाम वाच्यता? ॥ ९ ॥” गुणाणं अज्जणे चेव, सम्म होइ धणज्जणं। अन्नहा गिहि उज्जोउ, एसो खलु पलीवणा ॥१०॥ तदुक्तम्—“गुणेष्वेवादरः कार्यः, किमाटोपैः प्रयोजनम्?। विक्रियन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥११॥” एवं विविहजुत्तीहिं, पिउणा सो पबोहिओ। लज्जाए पडिवज्जेइ, वयसा मणसा उ न ॥१२॥ तत्तो धुत्तोव तप्पुत्तो, धुत्तत्तेण घणं घणं। अज्जिउ अज्जिउं तस्स, वंसए भासए तहा ॥१३॥ ताय! अज्जिअए एवं, धुत्तत्तेणुज्जमेण य। सुमहुपि

घणं तम्हा, गुणवम्मअणेण किं? ॥१४॥ यतः–“जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतां, शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं, येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥१५॥” एव किमवि स चित्तवित्तीइ सुगयिरं। जंपेइ जणओ जाय!, सव्व एवं भवे घणं ॥ १६ ॥ किंतु अन्नायकारीणं, परिणामोऽतिदारुणो । इहेव संभवे इत्थ, सुण एगं कहाणगं ॥१७॥ तथाहि–

आजम्म धुसिमासत्तो, धुत्तो कोवि महामई । भमतो इब्भवेसेणं, संपत्तो सोरियं पुरं ॥ १८ ॥ इक्कस्स वणिणो हट्टे, सालिदालियाइणा । उप्पाडिऊण दो टंके, धुत्तो भणइ वाणिअं ॥१९॥ पुत्त पेसेसु भो जेण, सत्ति दावेमि लब्भय । पासट्ठिअं निअं पुत्त, लहुअ सोवि पेसई ॥ २० ॥ तो स गिण्हिउ सो धुत्तो, गंतुं दोसिअअट्टए । सुप्पसत्थाणि वत्थाणि, गिण्हई तं च साहई ॥ २१ ॥ मह पुत्तो इमो तुम्ह, पासे चिट्ठइ जाव उ । तुज्झं आणिउ अप्पेमि, सुवन्न अम्ह वणिज्जय ॥२२॥ तो सो नाविअसालाए, नइच्छेआइ कारिउ । दप्पणाय तम्मज्जं, गिण्हिउ निग्गओ तओ ॥२३॥ गओ तयोलिअस्सट्टे, धुत्तु वाहिं तमित्थिअं। तंबोलप्पमुह चिसु, वत्थुं तप्पइ जपइ ॥२४॥ दप्पणायस्स इमा, इत्थ चिट्ठउ मे पिया । इत्थि तु जंपए एस, अप्पिही तुज्झ लब्भयं ॥२५॥ तत्तो गिण्हिउ सो सव्व, येरीए गिहमागओ । जपेइ तुज्झ पुत्तोऽहं, अंब! गिण्ह इम सव्व ॥ २६ ॥ तव्वप्पणेण सा तुट्ठा, त पुत्तमिव मन्नए । दप्पणेण को नाम, संपयो नेव सिज्झई? ॥२७॥ निच निच्चिंतचित्तो सो, चिट्ठई सो सुही तहिं । इत्तो सो वणिओ पुत्तं, अलहंतो गवेसए ॥२८॥ वहु दोसिअहट्टे तं, दोसियं सो पयपए । किं मज्झ पुत्तं रक्खेसि?, सोवि

इच्छा हु आगाससमा अणन्तिआ ॥ १ ॥" इयांस्तु विशेषः—अन्येषामिच्छावृद्धिरप्रतिहतप्रसरा इच्छापरिमाणकर्तुस्तु स्वीकृतपरिमाण यावदेव, अधिकेच्छायास्तेन निषिद्धत्वात्, यथा २ चेच्छाया आधिक्यं तथा २ दुःखस्यापि, दुःखस्येच्छामूलत्वात्, उक्तञ्च—"भव्य! दुःखमयः सोऽयं, किमाभाति भवस्तव?। यत्रेच्छानुलिप्तं दुःखं, न पुनर्लभ्यते सुधा ॥ १ ॥" इच्छावन्तो हि गृहे सुखेन निर्वाहेऽप्यधिकाधिकधनार्जनाशयाऽनेकक्लेशाननिरन्तरमनुभवन्तः, यतः—"ये दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं, गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते। सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥ नीचस्यापि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं, शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्तनम्। निर्वेदं न विदन्ति किञ्चिदकृतज्ञस्यापि सेवाकृते, कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः? ॥२॥" एवमभिलषितधनत्वेऽपि तद्रक्षाप्रतिष्ठाप्राप्त्यभीष्टस्त्रीसंयोगकामितकामभोगाद्याशया तत्प्राप्तावपि सिद्धराजजयसिंहनृपादिवत् पुत्राद्यपत्याशया तदुत्पत्तावपि तज्जीवनसद्गुणाध्यारोपणप्रतिष्ठाप्रापणसुकन्यापाणिग्रहणतत्पुत्रसन्तत्याद्याशया तत्प्राप्तेऽप्यधिकाधिकाधिपत्याद्याशया प्राकृतसुकृतेरभिमतसर्वाङ्गीणसंयोगसुखेऽपि लब्धे तद्वियोगरोगजरामरणाद्यभावाशयाऽऽर्त्ताः सर्वदापि दुःखिन एव, अत्र संप्रदश्लोकः—"ईप्सितधनाप्तिरक्षाप्रतिष्ठितिस्त्रीसुताधिपत्याशक्तः। स्वस्य सुतादेश्चेप्सुः सुखनिर्वाहेऽपि नैव सुखी ॥ १ ॥" परिग्रहस्य च भूयस्त्वेऽपि स्वल्पतरमेव धनिकस्योपकारि, शेषं तु परोपभोग्यमेव, केवलं तस्य चिन्ताद्याकुलत्वात्तृष्णामूर्च्छाविनाशाभ्यामपि दुःखहेतुः, यतः—

“गोशतादपि गोः क्षीरं, मानं मूढशतादपि । मन्दिरे मञ्चकस्थानं, शेषः परपरिग्रहः ॥ १ ॥ द्वे वाससी प्रवरयो-षित्पायशुद्धा, शय्यासनं करिवरस्तुरगो रथो वा । काले भिषप्रियमिताशनपानमात्रा, राज्ञः पराक्यमिव सर्व मवेहि दोषम् ॥ २ ॥” परिग्रहस्य स्वल्पत्वे च स्वल्पचिन्तानिर्भयत्वादयो गुणाः, यतः–“जह २ अप्पो लोहो जह २ अप्पो परिग्गहारंभो । तह २ सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ १ ॥” तस्मादिच्छाप्रसरं निरुध्य सन्तोषपोषायैव यतितव्यं, सुखस्य सन्तोषमूलत्वात्, भणितं च–“आरोग्गसारिअं माणुसत्तणं सच्चसारिओ धम्मो । विज्जा निच्छयसारा सुहाइं संतोससाराइं ॥ १ ॥ यदि यत्रैव तत्रैव, यथैव च तथैव च । रतिं त्वं चित्त ! बध्नासि, नासि दुःखस्य भाजनम् ॥ २ ॥” ततः सन्तोषसेतुबन्धेन लोभमहाम्भोधिमुद्वेलतया प्रसरन्तं विनिवार्य स्वीकार्यमेतद्व्रतं यथाशक्ति सम्यक् प्रतिपाल्यं च, प्रत्यहं पुनः पुनः स्वनियमस्मरणं यथाऽवसरसम्भवं तत्संक्षेपणादिना, अथ स्वीकृतपरिमाणादधिकधनधान्यादिसमृद्धिसम्भवे किं विधेयं श्राद्धेन ?, उच्यते, स्वीकृत परिमाणादधिकं धनादि यद्युत्पद्यते तत्सर्वं धर्मव्यये एव नियोज्यं, न तु व्यवसायभोगादौ, एवं च न कश्चिदेतद्व्रतस्यातिचारः, दानादिसुकृताराधनेन चञ्चलायाः कमलाया नियन्त्रणं कृतं स्यात्, यदुक्तं नैषधेऽपि–“पूर्वं पुण्यविभवव्ययबद्धाः, सम्पदो विपद एव विमृष्टाः । पात्रपाणिकमलार्पणमासां, तासु शान्तिकविधिर्विधिदिष्टः ॥ १ ॥” तदेवमेतद्व्रतस्यात्रापि सन्तोषसौख्यलक्ष्मीस्थैर्यजनप्रशंसादि फलं परत्र तु नरामरसमृद्धिसिद्ध्यादि, अतिलोभाभिभूततया चैतद्व्रतस्यास्वीकृतौ विराधनायां वा दारिद्र्यदास्यदौर्भाग्यदुर्गत्यादीत्यष्टादशगाथार्थः ॥१८॥

अत्र मते धनश्रेष्ठिदृष्टान्तोऽयम्—

श्रीकाञ्चनपुरे प्राग्रस्काञ्चनश्रीर्मुतेऽभवत् । प्रकृत्या सुन्दरः श्रेष्ठी, सुन्दरः सुन्दरीपतिः ॥ १ ॥ सज्जनान-
न्दनः श्रीमान्, धनः श्रेष्ठस्य नन्दनः । धनश्रीश्च वधूस्तस्य, धनसाराद्यः सुताः ॥ २ ॥ पितर्युपरते चिन्ता,
धनस्याभूद्धनार्जने । धुरी सत्येव निश्चिन्ताः, शिष्या भृत्याः सुताः स्नुषाः ॥ ३ ॥ सोऽन्येद्युर्निजवित्तस्याशेषस्ये
क्लिष्ट लेख्यकम् । यावता नवनवतिष्टकलक्षाणि जज्ञिरे ॥ ४ ॥ तत्रापि पञ्चपञ्चाशत्प्रमिताः पूर्वजार्जिताः ।
चत्वारिंशच्चतुर्युक्ता, लक्षाः पित्राऽर्जिताः पुनः ॥ ५ ॥ स ततस्तर्कयामास, लक्षमेकं मयेयदि । स्वसौधे निदधे
कोटीध्वज कोटीशवत्तदा ॥ ६ ॥ ततोऽस्वर्थं तदर्थं स, व्यवसायाननेकधा । चकार वत्सरस्यान्ते, पुनर्लेख्यकमे-
क्षत ॥ ७ ॥ यावत्तावद्वेदैक्ष्य, वृध्यावृध्यामलुब्धधीः । व्ययो भूयान् मुधमेतत्त किञ्चिद्ववृधे धनम् ॥८॥ व्यय
ततोऽप संक्षिप्य, निर्दध निजधाम्न्यपि । महाकृपणवत्तस्थौ, जीर्णवासाः कदन्नभुग् ॥ ९ ॥ चिर दरिद्रवद्दुःस्थ,
सकुटुम्बोऽपि सोऽस्थान् । धन न स्वधिकीभूत, कीलित नु कुकर्मणा ॥ १० ॥ भूयोऽप्यायव्ययं भूरि, भक्षयन्ति
ध्रुवं धनम् । वणिक्पुत्रादयश्चौरास्तत्कुर्वे क्षयमुपपमम् ॥ ११ ॥ ततोऽधमस्य सोऽत्यन्तमवासक्तेपावेशासम् । स्वय
ययौ वणिज्यार्थमप्रमाणक्रयाणयुक् ॥ १२ ॥ धनलक्षार्जन काङ्क्षन्, लब्धलक्षः क्रमेण सः । तर्षोत्कर्षाद् व्यव
हार्षीद्दूरदूरतरं व्रजन् ॥ १३ ॥ प्रभूतार्जितवित्तश्च, तुष्टचित्तः स्ववेश्मनि । प्रासः शुश्राव दुश्चौरोपद्रवं दुःश्रव
जवात् ॥ १४ ॥ ततः कलत्रपुत्राद्यैः, सकलैः कलहायितः । सर्वेषामप्यनिष्टोऽभून्मूरिलोभात्र किं भवेत्? ॥१५॥

यदुक्तम्–"अतिलोभो न कर्त्तव्यो, लोभं नैव परित्यजेत् । अतिलोभाभिभूतस्य, चक्रं भ्रमति मस्तके ॥ १६ ॥"
लेख्यके च कृते चित्तं, स्वातपूरितनीतितः । साधवेवामवक्राग्यायस्त चित्त यतः स्मृतम् ॥ १७ ॥ ततोऽप्यासी
वसौ दुर्धीर्धीरिम्यन्तनिधानवत् । निधाय स्वधनं भूयो, धनं भूयोऽर्जिताऽस्म्यथो ॥१८॥ यथा न किञ्चिच्चौरादिगो
चरे संचरेत् कश्चित् । विचिन्त्येत्यन्यदा श्रेष्ठी, क्षणवार्द्धं पुराद्बहिः ॥१९॥ पुत्राद्वेरप्यविज्ञात, चरान्तर्न्यस्य यत्नतः।
सारं सारं निजं सारं, प्रागयं प्रस्थितवान् श्रिये ॥२०॥ युग्मम् ॥ तच्च धूर्त्तेन केनापि, ज्ञातं खातं च भूतलम् ।
आत्तं च जात्यरत्नादि, कर्करक्षेपपूर्वकम् ॥ २१ ॥ प्रभूततरलाभेन, प्रभूततरवस्त्रयुग् । प्रभूतहर्षः सोऽप्यागात्,
प्रभूतसमयाद्गृहम् ॥२२॥ यावद्रात्रौ तत्र गत्वा, खनित्वा च तदैक्षत । तावत्कर्करकास्तत्र, वीक्ष्य वैलक्ष्यमीयिवान्
॥ २३ ॥ वस्तूनां विक्रये लक्षा, नवतिस्तु नवाधिकाः । आसन् पलाशे पत्राणि, त्रीण्येवेति स्थितिर्यतः ॥ २४ ॥
कस्याप्यविश्वसन् सर्वं, स नीत्वा सह सोऽन्यदा । प्राप्तो विदेशे क्रमशः, श्रियमार्जयदीप्सिताम् ॥२५॥ कृतार्थं
मानी स महासार्थे सार्थशालीलया । प्रत्यागच्छंस्तु लुण्टाकैरलुण्ठि चरटैर्भटैः ॥ २६ ॥ सार्थोऽपि लुण्ठ्यमानाश्च,
नष्ट्वा धैर्यवशंवदम् । कथञ्चित्सिरगाद्व्याधकरादिव कुरङ्गकः ॥ २७ ॥ शून्येऽरण्येऽप्यविश्राम, ग्रामं ग्रामं क्रमाच्च
सः । कृतपार्श्वस्थसत्रसयत्रः स्वगृहमागमत् ॥ २८ ॥ तेषां स्वप्रवररत्नानां, विक्रयान्यक्रयादिना । साधवेवाभव
द्रव्य, तस्य हर्षविषादकृत् ॥ २९ ॥ एष लोभाभिभूतोऽसौ स्वकोटीपूरणेच्छया । क्रियासमभिहारेण, व्यवहारेऽ
भवत् परः ॥ ३० ॥ कथञ्चिदपि नाशात्तु, नैवावर्द्धत तद्धनम् । न चोद्वेगमगाद्वेपोऽप्यहो ! तृष्णाग्रहो महान्

॥ ३१ ॥ व्यचारयच्चिर्विचार:, सोऽन्यथा सि पुयात्रया । मम चिन्तितपूर्त्तिः स्याचिन्तापूर्त्तिश्च कर्हिचित् ॥३२॥
स्थानान्तरविशेषेण, यन्नाग्याणि फलन्त्यपि । बीजस्यापि हि निश्चयसौ, दृष्टं भूरि मुधोऽन्तरम् ॥ ३३ ॥ किञ्च रत्नाकरः
सेव्यमानो रत्नान्यनेकधा: । यत्नाग्निनाऽपि दत्ते प्राक, सुस्वरध्याणि तानि च ॥ ३४ ॥ एव विमाऽप सर्वस्वमाधा-
पोतविधियात्रया । सांयात्रिक द्रवाभावैर्यानपात्रैश्चचाल सः ॥३५॥ रत्नद्वीप समासाद्य, स क्रमाद्‌क्रमादिव । प्राज्ये
पयाऽर्हवाणिज्ये, नैककोटीः समा[मार्जिजत]र्जयत् ॥३६॥ मर्माविस्मयकपुष्कर्मचकितश्च व्यचिन्तयत् । पोतानां
जातुचित्राशे, मूलस्यापि संशयः ॥ ३७ ॥ रत्नमेकं कोटिमूल्य, क्षमध्ये क्षिपामि तत् । यथा प्राप्तेऽपि विधुरे,
स्थे कोटिध्वजं गृहे ॥ ३८ ॥ एवं विचार्य स्मामूरू, स्वप धैर्योद्धितार्य सः । रत्न सयत्न सङ्गोप्य, चचले स्वाचले
पथान् ॥ ३९ ॥ मा भूत् प्रक्रमनक्रोऽत्रेतीव दुर्वातघाततः । भग्नाः सर्वेऽपि पोतास्ते, पर्पटा इव मुष्टिना: ॥ ४० ॥
तृष्णाविद्धमनानीव, प्रभु फलकमाप्य सः । दशाविन्पाऽऽसवांस्तीर, सहमानो महाव्यथाम् ॥ ४१ ॥ मूर्च्छितः
पतितस्तत्र, तीरे नीरेचिसुः स्वयम् । उज्जिजीव क्रमेणैव, दृढायुषि मृतिः कुतः ? ॥४२॥ मानसीमथ शारीरीं, स
शान्ति दुःसहां वहन् । सोऽभ्रमभीतरण्यानीं, पुलिन्द इव मन्दधीः ॥ ४३ ॥ तत्रबलमजीवच्च, जीवन् भैक्ष्येण
रङ्कवत् । भूयसा रंहसाऽभ्यागात्, भूयसाऽनेहसा गृहम् ॥ ४४ ॥ प्रध्वनाशाविधुरत्वानां, सङ्करेऽपि सङ्कुचित ।
ऊर्वन्तर्गोपिताप्रमाणकोटीशो भविताऽस्म्यहम् ॥४५॥ विचिन्त्येति स तत्रत्न, सचमः कृष्ट्वाऽतिकष्टनः । दृष्ट-
दर्शयामास, मूल्यायातुल्यमीक्षयाम् ॥ ४६ ॥ युग्मम् ॥ सर्वैरपि तदा तज्ज्ञैस्तत्कर्म्मप्रेरितैरिव । लक्षाणां

मधनवतिरेव तन्मूल्यमौच्यत ॥ ४७ ॥ यत्तस्य कोटिमूल्यस्याप्युष्णोर्वन्तर्निवासतः । तेजोऽह्रीयत मूल्यं च, मूल्य हि महसा मणे ॥ ४८ ॥ कोट्याशाकुद्दनाचेव, खेदमेदखितामधात् । दध्यौ च चिरि यत्क्लेशाचेवास्कोट्यपि नाजनि ॥ ४९ ॥ यद्वा मम वणिज्यायामिज्यायामिव हिंसया । प्रत्युतानर्थ एवा भूवार्थः कोऽपि तु सिद्धवान् ॥५०॥ तदुपायान्तर पश्यामीति चिन्तातुरं चिरम् । ज्ञात्वा धूर्तो धातुवादी, कोऽप्यवादीत्समन्यदा ॥ ५१ ॥ चिद्यासि मुधा चिन्तां, मुधा खेद वृथासि च । श्रेष्ठिंस्तवेष्टमाधास्ये, धातुर्वादमसावतः ॥ ५२ ॥ आसोक्तमिव तत्तस्य, मन्यमानस्तदुक्तितः । समग्रां धातुसामग्रीमन्यग्रीभूतदद्यधात् ॥५३॥ स ततः कृत्रिम हेम, कियत्स्मिीय मायया । परावर्त्यार्पयत्तस्मै, परीक्षार्थमकृत्रिमम् ॥ ५४ ॥ चतुष्परीक्षावीक्षातस्तुष्ट श्रेष्ठ्यप्यमन्यत । समासमेव सोऽप्याशु, तादृक् स्वर्णं बहु व्यधात् ॥ ५५ ॥ रूपत्स्वर्णखानिवास्वर्णान्, स्वर्णखण्डानखण्डमुत् । राशीचक्रे रहः श्रेष्ठी, मत्यक्त भूगृहान्तरे ॥५६॥ कोऽपि द्रव्यार्जनोपाय , कायक्लेश विनाऽप्यहो । दृष्टवसिति स धूर्ताय, महामक्तिमतन्तनीत् ॥ ५७ ॥ सारः परोपकारोऽश्रेयादिवादी स धार्मिकः । विदधत्स्वं दम्भ, चिरम्भ तमनीनयत् ॥५८॥ यतः—"मतदम्भः सुतदम्भः स्नातकदम्भः समाधिदम्भश्च । निःस्पृहदम्भस्य तुलां भजन्ति नैते शतांशेन ॥५९॥" तद्वेश्मसार रत्नादि, मुषित्वा परिमोषिवत् । सोऽन्यदा कुद्धधीर्नष्टः, श्रेष्ठ्यभूत् कष्टकष्टितः ॥६०॥ शङ्काकुलः काञ्चनं तत्, पर्यैक्षिष्ट च यावता । तावता कृत्रिम ताम्रमयमेव विषेद सः ॥ ६१ ॥ मुषितो मुषितोऽस्मीति, पूत्कुर्वन् पूर्जनैर्न कैः । उरःशिरःप्रकुट्टाकः, सोऽजनिलोभावदस्यत ?

॥ ६२ ॥ मौलर्द्धि चतुलक्षोनां, वीक्ष्य दुःख महद्वहन् । वैयाभवीतटे मौलनिधिं प्राप्य च पिप्रिये ॥ ६३ ॥ गृहे रहस्समानीय, तन्निस्तपश्चिमयोः । मौलनाशनचतिलक्षीमक्षीणमाप सः ॥६४॥ पुत्रस्ततोऽयमध्यायसिधिमेकं लभेय चेत् । कृतकृत्यीभवेयं तत्सदुपायश्च को न्विह ? ॥६५॥ ततोऽसौ निधिकल्पज्ञान्, पप्रच्छातुच्छभक्तिभाक् । तेऽप्यधुर्मोग्यप्रयोगेन, निधानानि पदे पदे ॥ ६६ ॥ यतः–"अमन्त्रमक्षरं नास्ति, नास्ति मूलमनौषधम् । निर्द्धना पृथिवी नास्ति, आम्नायाः खलु दुर्लभाः ॥ ६७ ॥" विशिष्य शिष्यते किञ्चित्, तदभिज्ञानमप्यहो ? । मार्जा चेऽश्वखरादीनां, चतुर्भिश्चरणैः समैः ॥६८॥ चतुष्पक्षिपदे चाऽर्कचारे खञ्जनविट्पदे । छगणान्तर्गतैरण्डबीजाङ्कुरपदे ऽपि च ॥६९॥ खञ्जरीटादिकानां च, मैथुनस्थानके निधिः । प्ररोहे मधुनाटादेश्चापि बिल्वपलाशयोः ॥७०॥ त्रिभि र्विशोपकम् ॥ प्ररोहस्य च कार्श्येऽल्पः, स्थौल्येऽनल्पः पुनर्निधिः । तन्नतक्षीरवर्णानुसारि सार निधौ सया ॥७१॥ श्रुत्वैवं शोधयन्नुर्व्यां, पलाशं तादृशं क्वचित् । स निरीक्ष्य परीक्ष्य प्राग्, बलिक्षेपविधिं व्यधात् ॥ ७२ ॥ ओं नमो धरणेन्द्राय, ओंनमो धनदाय च । इत्यादिमन्त्रमन्त्रेण, पूर्वमुर्वी चखान च ॥७३॥ साक्षादिव महामाल्य, साक्षा द्वासीन्महानिधिः । तत्र स्वर्णकोटिपूर्णं, तूर्णमुच्चैः प्रमोदकृत् ॥ ७४ ॥ रथमारोप्य सङ्गोप्य, त निधिं सचसन्नि धिम् । सोऽगाद् यावद्गृहे तावत्प्रदीपनमुदैक्षत ॥ ७५ ॥ तस्य पश्यत एवाशु, भस्मीभूतेऽखिले गृहे । मूर्च्छां गच्छन् क्षणं मूर्च्छान्ते चक्रन्द मन्दधी ॥ ७६ ॥ हा दैव ! नैव ते किञ्चिदपराद्धं मया क्वचित् । दुःसपत्नी चवीष्यांसि, मयं दुनसि किं मुधा ? ॥ ७७ ॥ सैव विलापी पापीयोद्विग्नः कृष्णनिमग्नहृत् । क्रमात् कथञ्चित्स

सौधं, निधिग्रव्यामधापयत् ॥ ७८ ॥ शेष निधिघन लक्षा, नयतिं तु नयाधिकाम। वीक्ष्यैपं विसमयानन्दखेदो द्वेगैरपेचिन्तयत् ॥ ७९ ॥ कायक्लेश मुधिकया, सेहेऽह दुस्सहं पशुम्। निर्भाग्यस्य कथ सिद्धेयत्, कोटीश्वरम नोरथः ? ॥ ८० ॥ यतः–"घनकुसुम कृपणश्रीः कूपच्छाया सुरङ्गधूली च। तत्रैव यान्ति विलय मनोरथा मा ग्यहीनानाम् ॥ ८१ ॥" इत्यादिचिन्ताधान्त स, तस्थौ श्रान्त इवाधिकम्। कियत्कालमथो कोटीश्वरान् लक्षे श्वरे कचित् ॥ ८२ ॥ अभ्युत्थानासनाद्याभिः, सन्मान्यान् प्रतिपत्तिभिः। दृष्ट्वा कोट्यर्त्तिमृत्प्रोचैः, कश्चिद्यो गीन्द्रमैक्षत ॥ ८३ ॥ युग्मम् ॥ सम्पोष्य पश्चु सन्तोष्य, तमप्राक्षीच वक्ष ! हे। समाख्याहि समीक्ष्याद्य, भावी कोटीश्वरो न वा ? ॥ ८४ ॥ सोऽपि ध्यान नाटयित्वा, स्पष्टमाचष्ट विद्ध ! ते। भूयस्यो धनवृत्येव, भाविन्यो धनकोटयः ॥८५॥ कथं कथमिति प्रोक्ते, श्रेष्ठिना लोलुपात्मना। योगी जगौ जगत्यामप्युपायोऽत्रैक एव हि ॥८६॥ अन्योप्यनर्थं ते पद्मास्यप तु विपमोऽप्यहो ?। तव प्राचीनदुष्कर्मक्षयतः सिद्धिमेष्यति ॥ ८७ ॥ प्रसद्य सद्यः स्वामिन् ! मे, तमेवोपायमाविश। इत्युचैः सादरे तस्मिन्, सोपरोधं जजल्प सः ॥ ८८ ॥ मध्येऽद्रि रसकूपीस्थरसस्यैकेन बिन्दुना। लोहभारसहस्राणि, सुवर्णीस्युः क्षणादपि ॥ ८९ ॥ स च सिद्धरस प्रापो, देवाना मपि दुर्लभः। कष्टप्राप्यः पर क्वापि, श्रेष्ठ्यथाचष्ट दृष्टहृत् ॥ ९० ॥ निष्फलान्यपि कष्टानि, सद्यन्ते स्म मया भृशम्। सुसह सफल कष्ट, कायः कष्टसहश्च मे ॥ ९१ ॥ सुमहन्महिषीपुच्छ, श्रेष्ठिनाऽऽनाय्य योगिराट्। पण्मासावधि तैलान्त, प्रक्षिप्यास्थापयत्ततः ॥ ९२ ॥ रसेन्द्रकूपिकाकल्पपुस्तिकां साम्प्रदायिकीम्। लात्वा

पुष्ट च स तत्र , भतस्ये श्रेष्ठिना समम् ॥ ९३ ॥ नीत्वा च दीर्घरज्जू द्वे, तुम्बके द्वे च भक्षिकाम् । गत्वाथ
तुल्यसामग्र्या, प्राप्तौ तौ विवरं गिरेः ॥ ९४ ॥ द्वारस्थं यक्षमर्चित्वा, पुस्तिकोक्तानुसारतः । विवरान्तः प्रविष्टौ
तौ, नरकान्तरिवोत्सुकौ ॥ ९५ ॥ उत्तिष्ठत्प्रेतमूर्तावेर्पक्षिक्षेपेण तर्पणात् । अतुच्छपुच्छदीपस्योद्द्योतेन द्रुतया
यिनौ ॥ ९६ ॥ त्रियोजनीमतिक्रान्तौ, प्रीतौ वदशात्तुम तौ । चतुरस्रं चतुर्हस्तविस्तारं रसकूपकम् ॥ ९७ ॥
युग्मम् ॥ सार्थं तुम्बवरत्राभ्यां, तत्राहस्यतलेऽथ तम् । रसं ग्राहयितुं योगी, मुमुचे मञ्चिकास्थितम् ॥ ९८ ॥
सोऽपि प्राप्य रसं क्षिप्रं, रसं नव्यं चहन् हृदि । तेन तुम्बयुगं भृत्वा, सन्नो रज्जू अपीचलत् ॥ ९९ ॥ आ
कृष्य योगिना रज्जुयुग्मं कूपोपकण्ठगः । मुग्धधीर्मार्गितः सोऽर्पयामास तत्तुम्बकद्वयम् ॥ १०० ॥ योगी मो
गीव दुष्टात्मा, नयधर्मौ विधाय ते । छित्त्वेव रज्जू युगपत्, सोऽपतत् परितस्तटात् ॥ १ ॥ कूप्यलग्नः पतन् दैवा
द्वत्सात् कण्ठे रसस्य सः । दध्यौ च धिग् मतो लोभात्, वाग्मिकस्य विजृम्भितम् ॥ २ ॥ हा दैव ! किं करि
ष्यामि, मरिष्यामि हृदैव हा । धिग् धिग् लोभान्धरक पूर्वं, नैव किञ्चिद्विचारयम् ॥ ३ ॥ इत्यार्तिक्षुत्तृषाक्षुम
दुःस्थी तस्थौ कियद्दिनीम् । निशान्धकारे कारायामिव लोभस्य तत्र सः ॥ ४ ॥ तत्राप्यागान्महागोधा, तद्रो-
धापेव शब्दकृत् । रसं पीत्वा स निर्यान्त्यास्तस्याः पुच्छमवर्धरीत् ॥ ५ ॥ भवितव्यतयेवातस्तयाऽऽकृष्टः स
कष्टयुक् । निगोदादिव निर्गम्य, भ्राम्यन् सार्थेऽमिलत् क्वचित् ॥ ६ ॥ लुण्टाकैर्लुण्टिते सार्थे, श्रेष्ठी नश्यति
नस्ततः । बन्दीमाह गृहीतस्तैर्विक्रीतश्च क्वचित्पुरे ॥ ७ ॥ क्रीतः स सार्थपतिना, कूले बर्बरमार्गे च । चनलो

जेन विक्रीतः, सेहे दुःसहवेदनाः ॥ ८ ॥ यतः-"पोसिंसु माणुसाइं सयंगं तच्छिऊण गालंति । तद्देहाओ
रुहिरं कुंडा उ भरेंति तो रुद्दा ॥९॥ तं च रुहिरं जवसी जायंमि पडंति तत्थ अह किमिणो । परिकम्मिएसु तेसुं
किमिरागो जायए रंगो ॥ १० ॥ तंमि अ रयंति वत्थे बहुरागो होइ जेण सो अहिअं । डज्झमिवि वत्थमी जायइ
छारोवि से रत्तो ॥ ११ ॥ पोसंति माणुसाइं पुणोवि गालंति ताण पुण रुहिरं । एवं निद्दयचित्ता कुणंति
किमिरायपलोभेण ॥१२॥" एवं नारकदुःखं, सेहे द्वादशवत्सरीम् । स चान्यदाऽभ्राडि भक्ष्यभ्रमाद्भारण्डपक्षिणा
॥१३॥ व्योम्नि च व्रजतस्तस्य, भारण्डोऽन्यापपौ परः । भक्ष्यार्थमुभयोर्युद्धे, पपातोर्वीतले वणिक् ॥१४॥ दुर्भरत्वा
न्मृतो नैव, वेपतस्तु भ्रमन् भ्रमन् । क्रमतो भव्यवल्लेभे, कथञ्चिन्नगरं निजम् ॥१५॥ दुःखाकृष्टसमुत्थाऽसिदुःखलीनः
स दीनगीः । पृच्छन् श्रेय श्रियां प्रोचे, सज्जना न्यायसाधुना ॥१६॥ तात ! वित्तं वैभवं, व्ययेऽपि स्वेच्छया
मया । न्यूनं नाजनि याप्यस्मत्तत्किं खिद्यते मुधा ? ॥१७॥ अलं कृत्वाऽधिकं लोभं, कृतक्षोभं सतामपि । एत
द्धनं सद्धनतां, हित्वा व्ययय सर्वतः ॥ १८ ॥ इत्यादियुक्त्या स भृशं, दुःखमुक्त्या च चेतितः । सर्वत्राव्य
ययद्रूपं, न तु न्यूनममून्मनाग् ॥ १९ ॥ पृष्टोऽन्यदाऽमुना ज्ञानी, प्राग्भवं प्राह तद्यथा । अमुत्रचन्द्रपुरे चन्द्रवणिग्
निःस्वशिरोमणिः ॥२०॥ सोऽर्हद्गृहं गतोऽन्याह्नि, कपर्दशतवेतनैः । उद्धारकेऽर्धकानीतैरानर्च कुसुमैर्जिनम् ॥२१॥
तेनार्प्यन्ते कपर्दाश्च, नयतिः सनवा जवात् । को दाताऽस्मीति सैकस्तु, चैत्यग्राह्रिस्मृतः स्थितः ॥२२॥ अचि-
राद्धिरावच, शूलेन स विपन्नवान् । स्वममून्यव्यमाषेन, जिनपूजाप्रभावतः ॥ २३ ॥ स्युर्वत्तकपर्दसङ्ख्या, लक्षा

चित्तस्य ते स्थिराः । कपर्दमात्राद्द्रव्यानर्पणात्साधिक धनम् ॥२४॥ यत्तस्यान्यर्पणे ते चीरासीत्तदनु जायते । न तु
तिष्ठति तस्योर्म्यामिवाम्भोऽप्यधिक धनम् ॥२५॥ तत्सन्तोष कुरुष्वेति, श्रुत्वाऽऽलोच्य सर्वं च तत् । वृत्ते स वेर्ष
वेधस्य, स सहस्रगुणाधिकम् ॥ २६ ॥ न्यर्यंसीभवनवतिलक्षटङ्कांश्च दक्षधीः । गवादीन्यष्ट पण्यानि, भारान
ष्ट हयादिकम् ॥ २७ ॥ गाश्चिरष्टौ किंकरानप्यष्टौ स्नेहचतुर्पलीम् । विशेषतोपाधिक्यात्तु, धान्य प्रायेण मूढकी
॥ २८ ॥ युग्मम् ॥ शेष सत्याज निश्शेष, नियोगवपतायपि । इत्युपात्तपञ्चमाणुव्रतं सम्यस्यपालयत् ॥ २९ ॥
ततः श्रीलीलयाऽप्यस्यावर्द्धतोच्चैः स्थिराऽप्यभूत् । श्रीप्राप्तिवृद्धिस्थैर्यादि, धर्मादेव हि देहिनाम् ॥ ३० ॥
न्यधत्त स च तां धर्मेऽभिगृहीताधिकाधिकाम् । मुख्यं फलमिव लक्ष्म्याः, शेष स्वल्पानुपश्चिकम् ॥ ३१ ॥ नेदि-
ष्ठनद्या अन्येद्युस्तीरे स्वर्णमणीनिधी । परीक्षित तु त साक्षाद्भूतं साक्षाच्चकार सः ॥ ३२ ॥ तमेककोटीर्नोदात्तु
मप्येष्ठस्त दक्षतः । गृहिणोऽपि स्वसारोधे, धन लेयुर्मुनेरिव ॥३३॥ स्वरूपज्ञातये पत्याः, पुरस्तेनोदितं निधि ।
निधिस्थानादि शुश्राव, चौरश्चौर्यार्थमागतः ॥ ३४ ॥ दृष्टश्च खातु तत्रैव, प्रासः प्रैक्षत त भूतम् । प्रोच्छलद्
श्चिकाशरैर्युर्वैधानां स्थितिर्यसी ॥ ३५ ॥ वञ्चितोऽस्म्यमुनेत्युच्चै, रुष्टोऽसौ लेयुकैस्ततः । आक्रम्य वृश्चिकान्मूर्धो
द्धृत्य त सद्मुवेऽभ्यगात् ॥ ३६ ॥ वृश्चिकैः सकुडुम्बोऽसौ, भक्ष्यतामितिधीः क्रुधा । सवक्षिकोपरिष्ठात्समन्त
स्तवेश्म सोऽक्षिपत् ॥ ३७ ॥ श्रेष्ठिमाग्यात्तु ते सर्वे, सौवर्णमणयोऽङ्गणे । खटत्खटत्कृतः पेतुर्दिव्यपृष्टाविव
स्फुटम् ॥ ३८ ॥ सन्तोषसुकृताकृष्ट, स तद्धनमतद्धनः । न्ययुङ्क्त युक्त चैत्यादावस्तुच्चैः पवसस्रहः ॥ ३९ ॥

ज्ञानिवद्धिशवैषक्षशकुनश्रसवेचती । अन्यदाऽपादि सवादियादिभिर्नृपपर्षदि ॥ ४० ॥ देव ! भाव्यत्र दुर्भिक्षं,
ध्रुव द्वादशवार्षिकम् । येन कल्पान्तकल्पेनाल्पे जीविष्यन्ति जन्तवः ॥ ४१ ॥ ततः समग्रा अप्यग्राः, समग्रही
पुरन्यहम् । अगण्यधान्यस्तेदावि, वारिवारिधिमज्जनाः ॥ ४२ ॥ स्वपरैः प्रेरितोऽप्युच्चैर्घनो धान्यादि नाधिकम् ।
समग्रहीविहीनात्मा, साभिग्रहदशाग्रही ॥ ४३ ॥ क्रमेण जातेऽप्यवमेऽन्यान्यधान्यक्रयेण सः । साभिग्रह
कुटुम्ब च, सस्ययाभिरयाहयत् ॥ ४४ ॥ स्तोकादपि स्तोकतरं, दद्यादिति तदाऽप्यदात् । दीनादिभ्यः सदाऽ
सावि, स दानादिस्फुरन्मतिः ॥ ४५ ॥ दिने २ धान्यमूल्ये, घटत्यम्बुधिपूरवत् । दवासपस्यानुशयस्तस्य नासी
द्विजाग्रसे ॥ ४६ ॥ रैलक्षमूल्या सामान्यधान्यस्याल्यप्यभूत्क्रमात् । महार्घता हि दुष्प्रापतया वस्तुतया न तु
॥ ४७ ॥ ततो महार्घमप्यत्र, यदि सस्य न लप्स्यते । तदा किं कृत्यमित्याधात्, स सचेताः सचिन्तताम् ॥४८॥
तदैव तदैयवशात्पक्षिणः कस्यचिन्मुखात् । देवदसेव तस्याग्रे, कृष्णचित्रलताऽपतत् ॥ ४९ ॥ उपलक्ष्य लब्ध
लक्षस्तामादाय मुदाऽक्षिपत् । खण्डानि तस्याः सस्यादौ, बीजानीवाक्षयश्रियः ॥ ५० ॥ अभवत्तत्प्रभावेण,
सस्यादेरक्षयास्मता । व्यापारणेऽप्यहोरात्रमुच्चैश्चक्रिनिधिसवत् ॥ ५१ ॥ सव्यङ्करैः पुण्यकीर्त्यो, सत्रागारे
सातस्वसी । भूम्ना भीष्मेऽपि दुर्भिक्षे, कलौ कल्पद्रुवद् व्यभात् ॥५२॥ सन्तोषव्रतपोषस्य, महाफलमिदाप्यदो ।।
स्वनिर्वाहेऽपि सन्देही, सर्वाभिर्वाहयत्ययम् ॥ ५३ ॥ निःस्वत्स्वादिनाऽन्येद्युस्तुष्टस्तं शिष्टवाङ्नृपः । विश्वास्योऽ
सीत्युच्यसे भो, मम श्रीगृहिको मम ॥ ५४ ॥ स व्याजहार व्यापारस्वीकारनियमोऽस्ति मे । तदनेन प्रसादे-

नाप्यल समतलोपिना ॥ ५५ ॥ सुभोज्येनापि किं तेन, सुभोग्येनापि तेन किम् ?। भोक्तुर्मुक्तेन येन स्यादस-
माधानसम्भवः ? ॥५६॥ तदेव । देवनिर्माल्यमिव नैवाहमाद्रिये । कोशाध्यक्षस्त्वमध्यक्षं, कोशमाहसमहते॥५७॥
राज्ञामाज्ञाप्रधानत्वादथान्तः कोपभूभुपः । अवादीदनवद्येऽस्मिन्, कोपः सत्कर्मणीव कः ? ॥ ५८ ॥ विश्वाधारस्य
भाण्डागारस्य परिरक्षणे । पुण्य प्रत्युत तत्तस्मिन्, को नाम नियमः सताम् ? ॥ ५९ ॥ गृहाण श्रीगृहिकतां,
तद्विहाय कदाग्रहम् । प्रसह्यापि भवाताऽस्मि, तद्विमर्शो वृथाऽत्र कः ? ॥ ६० ॥ श्रुत्वेति तात्त्विकोत्तंस , सोऽ
न्तश्चित्तमचिन्तयत् । धिक् पराधीनतादुग्धान्, मुग्धान् संसारवासिनः ॥ ६१ ॥ प्रव्रजामि पुरा चेत्तस्कु
तस्येप विडम्बना । मुनीन्द्रा धनीन्द्रावेर्न विम्बस्याभियोगतः ॥ ६२ ॥ किं करोम्यथ सद्योऽप्याप्युषित चिन्त
येऽथवा । इत्यालोच्य च लोच च, स चक्रे पाञ्चमीष्टिकम् ॥ ६३ ॥ देवतादत्तवेषश्च, दीक्षामादत्त सत्तमः ।
राज्ञोऽत्र एव नियमस्याहो निर्वाहसाहसम् ॥ ६४ ॥ प्रणम्याथ क्षमेशेन, क्षमीशः क्षमितः क्रमात् । चिरमा
राध्यमाराध्य, सिद्धः प्राक् सिद्धकेवलः ॥ ६५ ॥ पञ्चमव्रतविधौ धनाह्वयश्रेष्ठिनश्चरितमित्यवेत्य भोः ! । भोग
कृत् त्रिजगतोऽपि विस्फुरन्, लोभवारिनिधिरार्य ! वार्यताम् ॥ ६६ ॥

॥ इति पञ्चमाणुव्रते धनश्रेष्ठिकथा ॥

॥ इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणि-
विरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तावणुव्रतपञ्चकाधिकारो द्वितीय ॥ ग्रन्थाग्रम् ॥ ३५९१ ॥

उक्तानि पञ्चाणुव्रतानि, तानि च श्राद्धधर्मद्रुमस्य मूलकल्पत्वान्मूलगुणा उच्यन्ते, तदुपचयकारीणि दिग्व्रतादीनि तु सप्तापि शाखाप्रशाखाकल्पत्वादुत्तरगुणा, तत्र त्रयाणां गुणव्रतानामाद्यस्य मूलतस्तु षष्ठस्य दिग्विरतिव्रतस्यातीचारनिन्दनार्थमाह—

गमणस्स य परिमाणे दिसासु उड्ढं अहे अ तिरिए य। वुड्ढी सइअन्तरद्धा पढमम्मि गुणव्वए निंदे॥१९॥

'गमणे'ति॥ 'गमनस्य परिमाणे' गतेरियत्ताकरणे षडभ्याद्यवधिनान्त, क विषये ?–दिक्षु, एतदेव विशेषत प्राह–'उड्ढं'ति ऊर्ध्वं गिरिशृङ्गादेर्योजनद्वयादिना गृहीतप्रमाणस्यानाभोगादिनाऽधिकगमनमूर्ध्वदिक्प्रमाणातिक्रमणरूपः प्रथमोऽतिचारः १, एवमधस्तिर्यग्दिशोरप्यतिचारद्वय वाच्यम्, अत्रावश्यकचूर्ण्युक्तो विधिरयम्–'उड्ढं' स्वीकृतप्रमाणादुपरि वृक्षे गिरिशिखरे वा वानरविहङ्गमादिर्वस्त्राभरणादि गृहीत्वा याति तत्र न कल्पते गन्तुं, यदि तत्तस्मात्पतितमन्येनानीत वा तदा कल्पते ग्रहीतुम्, एतच्चाष्टापदसमेताद्युज्जयन्तचित्रकूटाञ्जनमन्दरादौ संभवति, एवमधोदिशि भूमिगृहरसकूपविवरादौ तिर्यग्दिशि च पूर्वादिचतुर्दिग्रूपायां वाच्य''मिति, यो विवक्षितक्षेत्रावधिकगमन न करोमि न च कारयामीति नियमवान् स विवक्षितक्षेत्रात्परत स्वय गमनतः परेण नयनानयनाभ्यां च दिक्प्रमाणातिक्रम परिहरति, तदन्यस्य तु तथाविधप्रत्याख्यानाभावात्परेण नयनानयनयोर्न दोष इत्युक्त योगशास्त्रवृत्तौ २, 'वुड्ढि'त्ति क्षेत्रवृद्धि', अत्रापि च

सूत्रत्वात्सप्तमीलोपः, अयं चार्थः—सर्वासु दिक्षु योजनशतादिना नियमितप्रमाणासु सतीष्वेकस्यां दिशि योजनशतादेः परतः कार्योत्पत्तौ लोभादन्यदिक्सम्बन्धिनि कतिचिद् योजनानि जिगमिषितायां दिशि वर्द्धयेत्, एष च जिगमिषितां दिशमाश्रित्याङ्गीकृतप्रमाणस्यातिक्रमादिग्द्वयमीलनमाश्रित्य पुनरनतिक्रमात्क्षेत्रवृद्धिलक्षण क्षेत्रवृद्धिरूपस्तुर्योऽतीचारः ४, 'सइअंतरद्ध'त्ति स्मृत्यन्तर्द्धा—स्मृतेर्विध्वंस इत्यर्थः, तथाहि—पूर्वस्यां दिशि कृतयोजनशतप्रमाणस्य गमनावसरे व्याक्षेपव्याकुलत्वप्रमादमत्यपाटवादिना किं शतं पञ्चाशद्वा प्रमाणं कृतमिति सन्देहे स्पष्टतया योजनमानमस्मरतः पञ्चाशदुपरिगमने पञ्चमोऽतीचारः, शतात्परतो गमने तु भङ्ग एव, अयं चातिचारः सर्वव्रतसाधारणोऽपि पञ्चसङ्ख्यापूरणार्थमत्रोपात्तः, तस्मात्पुनः २ स्मर्त्तव्यमेव स्वीकृतं व्रतं, स्मृतिमूलं हि सर्वमनुष्ठानं, स्मृतिभ्रंशे च तद्भ्रंशापत्तेः, अनाभोगाच्च क्षेत्रपरिमाणातिक्रमे यद्यल्पलाभद्रव्यादि तत्सर्वं परिहर्त्तव्यं, यत्र च स्मृतिर्जाता तत एव निवर्त्तितव्यं न स्वमतोऽपि गन्तव्यं, कृतक्षेत्रप्रमाणात्परतश्चान्योऽपि न प्रेष्यः, कदाचिदन्योऽप्रेषितोऽपि गतस्तदा तेन तत्र यल्लाभादि द्रव्यं लब्धं तत्परिहार्यं, तीर्थयात्रादिधर्मनिमित्तं तु नियमितक्षेत्रात्परतोऽपि गमनप्रेषणादौ न दोषो, धनार्जनाद्यैहिकफलार्थमेवाधिकगमनस्य नियमनात् ५। तदेव प्रथमे नियमितयोजनशतादिप्रमाणकतिपयभूभाग मुक्त्वाऽपरचतुर्दशरज्जुप्रमाणलोकगतत्रसजीवानां विमर्दनातो रक्षणरूपाय गुणाय यद्व्रतं तस्मिन् दिग्विरतिनाम्नि यदतिचरितं तन्निन्दामीत्युपलक्षणत्वाद्गर्हे चेत्यर्थः, एतत्स्वीकर्त्तुश्च त्रसस्थावरजीवाभयदानलोभाम्भोधिनियन्त्रणादिर्महालाभः, यतः—"तत्तायगोल-

लिंगमासुरअयगोलयसन्निहो इमो निच्चं । अविरयपावो जीवो हवइ समत्ता समत्थ जिए ॥ १ ॥ जइवि अ न जाइ सव्वत्थ कोइ देहेण माणवो एत्थ । अविरइअवयबंधो तहावि निच्चो भवे तस्स ॥ २ ॥" इत्येकोनविंशति गाथार्थः ॥ १९ ॥ अत्रैव महानन्दकुमारोदाहरणम्—

समस्ति समस्तवस्तुविस्तारैरमरावतीमपि परामवन्ती श्रीमदवन्ती नाम नगरी—सवर्ण्यवर्णसुषमा इव या पद्मालिशालिता भान्तः । विविधार्थसार्थपूर्णा या पूर्भव्यूरिव विरेजे ॥ १ ॥ तत्र त्रिजगन्नेत्रविक्रमो विक्रमो नाम नृपः,—यस्य सत्यमुदारत्वमुपकारित्वमुत्सवैः । भूर्भुवः सत्त्रयीसारमिवोद्धृत्य विधिर्व्यधात् ॥ १ ॥ तस्यां च कोटिवित्तो धनदत्तो नाम जैनः श्रेष्ठी, तस्योदार्यपद्मपद्मायमानपाणिपद्मा पद्मावती नाम प्रिया, तयोर्निष्पुत्रतया भृशार्तयोः कृतकुलदेवताद्युपयाचितशतपोर्वृणावेकः पुत्रोऽजायत जयकुमाराह्वयः सौभाग्यश्रिया सातिशयः, तस्य गर्भाधानजन्मरक्षाविधानचन्द्रार्कप्रेक्षणषष्ठीजागरणनामस्थापनदेवगुरुवन्दनाभ्याखादनस्तुण्डमदन्तोद्गमनकटीसूत्रन्यसनरिङ्खणमापणचङ्क्रमणचूडाकरणवस्त्राभरणपरिधानसर्पग्रन्थिवन्धनकलाग्रहणश्राद्धविधिशिक्षणमहेभ्यसुकन्याविवाहनवाणिज्यविधापनप्रभृत्यवोपकृत्यमहोत्सवेषु महोत्साहेन पित्रा महीयानेव धनव्ययो व्यधायि—रागपदे प्रेमपदे लोभपदेऽद्भुतेः पदे स्वपदे । प्रीतिपदे कीर्त्तिपदे नहि कैर्व्यव्ययः क्रियते ? ॥ १ ॥ पुत्रस्तु सुमतिवेदमस्तुसाङ्गत्यसुशिक्षावियोगाद्वालः सन् बालेन्दुरिव निष्कलङ्कोऽपि यौवन कलासमृद्धिमान् कलावानिव कलङ्क्यते स्म द्यूतव्यसनकलङ्केन 'निन्द्य मधावैरप्यन्त्यजवर्ज्यं गुणापहतिहेतुम् ।

द्विविधवोर्गस्यवृत पूत व्यसनार्णव विन्याः ॥ १९ ॥" इत्यादिपित्रादिभिर्बहूपदिष्टोऽपि प्राग्दुर्दैवाविष्टो न कथञ्चिन्मुमोच दुर्मोचतया स तद्व्यसनं तद्वन इव स्वपन, क्रमाद्विटादिकुसङ्गतोजायते स्म वेश्याव्यसन्यपि, अहह प्रपतयालुता समन्तोर्जन्तोः–विस्तृताद्युतिपूर्त्या व्यसनकृशानुः प्रवर्द्धते चाधिकम् । वारिप्रवारियोगाद् उपशाम्यति तत्क्षणेन पुनः ॥१॥ इति जानन्नपि जनको मा भूत्तनयस्य वैमनस्यमिति । प्रावात्त वित्तमीप्सितमह निशं मोहमोव्यमहो ? ॥ २ ॥ एष व्यसनासक्तेन सुतेन ग्रीष्मादित्येन सरोनीरवत्कोटिधन निःशेषमपि शोष्यते स्म सम्पैरेव दिवसैः, यतः–"सेवा सुखानां व्यसन धनानां, याञ्चा गुणानां कुनृपः प्रजानाम् । प्रनष्टशीलश्च सुतः कुलानां, मूलावपाती कठिनः कुठारः ॥ १ ॥" ततोऽसौ स्वगृहे धनाप्राप्त्या दुर्दैवाविष्टः प्रविष्टश्चौर्याय कस्यचिन्महेभ्यस्य गृहे दृष्टश्च दुष्टफणीन्द्रेण तथा यथा तत्क्षणमहीणैरिव प्राणैस्तत्रैव त्यज्यते स्म,–धूतादिव्य सनवशाच्चौर्यं चौर्याच्च जीवनाशोऽपि । स्यादत्र परत्र पुनर्दुर्गतिदुःखाद्यनन्तमपि ॥ १ ॥ मातङ्गोतश्च सर्वैः श्रेष्ठिपुत्रोऽयमिति तज्ज्ञात्वा राज्ञा महाऽपराधीव ध्रियते स्म धनदत्तश्रेष्ठी निगडितश्च सर्वाङ्गनिगडैरतिनिबिडैः अहह मनोरथसहस्रैः संभावितस्य सुतस्य दुर्विलसितं स्वपरयोरप्यहित, यथा–"पुत्रमित्रवणिक्पुत्रमातृजा मातृसेवकाः । पत्नीसपत्नीयानारिस्नुषाशिष्याश्च मागुणात् ॥१॥ अथ कथमपि नृपतेः सम्यक्पुत्रादिस्वरूपं विज्ञप्य मोच्यते स्म महाजनेन धनदत्तश्रेष्ठी, ततःप्रभृति मोक्षूतवोःख्यापमानाद्यापत्तिसारकपुत्रपुत्रमरित्रचित्रसतचित्त स्वेनानिष्टतरापत्त्योत्पत्तिः प्राक्तनपुण्यवाणिज्यनैपुण्यादिना प्राग्वत्पुनरुपार्जितसम्पत्तिः सञ्जाततत्सहचरजन

महस्वप्नमसरसिः स पुनर्नवजीवितं स मन्यते स्म, तत्पत्न्याः पुन पुत्रो नाजनिष्ट तस्यानिष्टतरस्वाविष, तत्र सपत्नीपुत्रोऽप्येतद्धनधनिकतया ममाप्याधारः स्यादिति भृशं पुत्रास्योत्कान्तया कान्तया हितजननैः स्वजनैश्चान्यकन्यापरिणयार्थं सोऽत्यर्थं प्रेरितोऽपि कुपुत्रोत्पत्त्याशङ्कया न चकार निर्विकार इव सर्वथा तत्र मनोऽपि, यतः—"दुर्जनदूषितमनसां पुंसां स्वजनेऽपि नास्ति विश्वासः। बालः पयसा दग्धो दध्यपि फूत्कृत्य खलु पिबति ॥ १ ॥" सोऽन्यदाऽनुरूपापरवरस्याप्राप्त्या स्वपुत्रीकन्यास्वीकारायेश्वरदत्तश्रेष्ठिना प्रशान्तात्मना प्रज्ञाप्यते स्मेत्थं—श्रेष्ठिन्! किमेवं विश्वस्पृहणीयभाग्यपुण्यप्रापणीयपुत्ररत्नोत्पत्तेरुत्पातोत्पत्तेरिव वृथा बिभेषि, नहि जाताः सर्वे कुजाता एव न विटपिनः सर्वे कण्टकिन एव नहि जलाश्रयाः सर्वे पङ्किलताश्रया एव, न च सकृदजीर्णमात्रेण भोजनं सकृन्मार्गे धाटीपातेन गमनं वा सर्वथा कश्चिज्जह्यात्, तस्माद्दुर्निर्भेद्यमेनमाग्रहमपहाय स्वीकुरुष्व सल्लक्षणवतीं कुमुद्वतीं नाम मे कन्यां, कुमुद्वत्याश्च पतिस्त्वं तवेन्दोरिव महान् कश्चित्सुतः सम्भवतीति तल्लक्षणैर्निर्णिन्ये मयेति मा विमर्शोऽपि कार्यस्त्वेतद्विषये, अथामूदृग्दृढचित्तो धनदत्तोऽप्याख्यत्—आयुष्मन्! युष्मदाक्षिण्याद्देवदत्तोऽपि क्रियते यदि स्वपत्न्यवासीमपि सा न विदध्यात्, दैवाज्जातेऽप्यपत्ये निन्दुरिव सर्वथा निर्मोहतामेव च दध्यादिति, तद्गुणावर्जितेन तेन तु तथाऽपि सा प्रतिपाद्य प्रत्यपाद्यत तस्मै गिरीन्द्रेण गिरीशायेव गौरी,—मार्ग्यमाणाऽपि सोत्कण्ठं, कन्याऽन्यैः प्राप्यतेऽपि न। तस्यैवमपि दीयेत, नाल्पपुण्यफलं यतः ॥ १ ॥ तेनाप्युदूढा प्रौढोत्सवेन सा, क्रमाज्जात च स्त्रीणां प्रीतिनिधानं तस्या आधानं श्रेष्ठिनोऽनिष्टमपि, दृष्टश्च तयाऽभी-

दृष्टं कांस्यकचोलमुक्तपक्वबदरीफलं सकांस्यकचोलं केनाप्यात्तमिति स्वप्नं, ज्ञापितश्च पत्युः, पत्याऽपि स्वप्नस्या भावसारसुतोत्पत्तिक्रियाव्यान्वितपरगृहस्थित्याद्यनुमीयते स्म, चीयते स्म चित्ते-अहं तथा विधास्ये यथा स मदीयं किञ्चिन्नावास्यत इति, क्रमाज्जातः सुरूपः सुतो, गृहीतश्च जातमात्र एव श्रेष्ठिना प्राग्वचनबलात्, मुक्तश्च गत्वा जीर्णोद्याने निर्जीव इव श्मशानस्थाने, अहो निर्मोहता कुपुत्रकदर्थनोद्वेगिनः श्रेष्ठिनः, यावच्च मुक्त्वा मुदितः पश्चाद्वलते तावदकालिकाम्बुदगर्जिरिवाविर्भूय दिव्यवाग् वियन्मण्डले-हे श्रेष्ठिन् ! दातव्यं दत्त्वा व्रजेति, श्रेष्ठ्यप्याभाषिष्ट भयविस्मयाविष्टः-कियन्मयाऽस्मै देय ?, सा प्राह-द्रम्मसहस्रमेकं, ततस्तेन भूरिभयो-द्भ्रान्तेन सत्वरमानीय मुक्तं तत्कालमेव बालकान्तिके द्रम्मसहस्रपदे दीनारसहस्रम्, इयताऽप्येतद्रक्षकर्पो महाविषं छुट्यते तदा साध्विति विमृश्य, गृहं गतश्च श्रेष्ठी, जातमात्रपुत्रविरहमहार्दिताऽपि दयिता श्रेष्ठिप्रता पापप्रसवसत्यार्त्तामपि पुंश्चलीवत् प्रकाशयामास, सद्रव्यं तं च बालकं मालाकारः प्रातर्दृष्ट्वा हृष्टात्मा निष्पुत्रः पुत्रतया स्वप्रियायै समर्पयामास, साऽपि तं स्वपुत्रवत् पालयामास, 'यल्लेख्यते मनुष्यैस्तस्मात् प्राप्यते मनु रमचिरात् । यल्लिख्यते तदीयत्र कश्चिदपि वैपरीत्यमहो ! ॥ १ ॥" इत्यचिरात्कुसुमवत्याः प्राग्वदिष्टदृष्टं काञ्चन-कचोलन्यस्तं सरक्तनारङ्गफलं तद्युतं केनाप्यात्तमिति स्वप्नसूचितो रूपाद्यैरद्वितीयो द्वितीयोऽपि तनयोऽजनि, सोऽपि श्रेष्ठिना तथैव मुक्तः स्थानपरावर्तधिया द्वितीयारामे, तत्र गगनगिरा द्रम्मद्विसहस्री मुक्ता, सोऽपि महेभ्यदेवपतिना तथैवात्तः पाल्यते स्म, अथ तथैव पुनः पुनः पुत्रप्रसवादिक्लेशोद्वेगवत्याः कुसुमवत्या अपि

प्रकृष्टमनिर्द्व, स्पष्टदृष्टमप्रजातिश्चेतद्नन्तिसवेश्मप्रवेशस्वप्नेन तु किञ्चित्कृतानन्दसन्दर्भः पुनर्यमूव गर्भः प्रसूतश्च प्रभूतप्रहोच्चतादिशुभमये निशीथसमये समग्रगुणैः सातिशयस्तनयः सुखभाविना, भृश मायेया वार्य-माणोऽप्यविश्रब्धः श्रेष्ठी मुक्तवासमपि तृतीयोद्याने, भो ! लब्धमलाभ्वा किमेन त्यजसि ? इति शुश्राव च प्रभासुधाकिर नभोगिरं, इष्ट पृष्टवांश्च कियन्मयाऽस्माल्लभ्य ?, तयोक्त–दीनारकोटाकोटीः, ततः प्रोच्चैः प्रीतः सन् पश्चादानीय चिन्तारत्नमिवार्पयामास जन्मापूर्वंकसुस्थे कुसुमृत्ये, स्थापयामास च महाजन्ममहादिपूर्वं महा-नन्दकृत्त्वेन तस्य महानन्द इति नाम, यस्तदानीमवन्तोऽपि, सर्वतो गुणवृद्धिभाक् । सदन्तोऽपि क्रमात् स्यातोऽनन्त एव श्रियाद्भुतम् ॥ १ ॥ स एवं वर्द्धमानः क्रमात्कुरुते स्म कलावानिव कलाग्रहण स्वीकुरुते स्म च सद्गुरुसकाशे शैशवेऽपि सम्यक्त्वमूलस्थितिं देशविरतिं, तस्यां च षष्ठव्रते नियम्यते स्म तेन चासस्थाना त्सर्वतस्तिर्यग्योजनशत, स्वीकार्यते स्म च यौवने जनकेन यज्ञदत्तेभ्यनन्दनीं सान्वयनाम्नीं कलावतीं नाम कनीं, तस्य चोत्पत्तेरारभ्य धनदत्तमहेभ्यगृहे सर्वतः प्रवर्द्धते स्म धनं प्रावृड्धुनीप्रवाह इव, प्रतिदिनं स्वयं वाणिज्यार्थं प्रथितप्रोत्साहे तु तनूरुहेण कल्पवृक्षेणेव वितीर्णा स्वल्पदिनैरेव दीनारकोटीकोट्यप्यजनिष्ट श्रेष्ठिगृहे, स्वनिर्वाहेऽप्यनुत्साहा जन्मनाऽपि धनार्जनात् । केचित् केचित् पुनर्द्रव्यमेवमप्यर्जयन्त्यहो ! ॥ १ ॥ दातव्यलभ्य सम्बन्धो, पञ्चपन्थोपमो ध्रुवम् । धनश्रेष्ठीह दृष्टान्तस्त्रिकुपुत्रसुपुत्रयुग् ॥ २ ॥ ततस्तत्पुत्रवचनाभिभिन्नतद्धतु-र्मुसादिचैत्यहिरण्यमयाद्यर्चाविधापनादिना सप्तक्षेत्रीसप्तस्वर्णकोटीव्ययप्रिसन्न्यजिनार्चादिसम्यक्श्राद्धक्रियाप

रोपक्रियादिभिः सर्वेभ्योऽपि श्रेष्ठी श्रेष्ठीभावमावहत्, अहो सुपुत्रप्राप्तिफल तत्क्षणेऽपि निस्तुलम्, अन्येद्यु-र्विद्यासाधकेन केनचित्सुप्रकृतिना कृतषण्मास्यवधिपूर्वसेवाविधिविना नभोगामिनीविद्यासिद्धिदिनेऽनुत्तरमा ग्यपवनरतयोत्तरसाधकत्वार्थमभ्यर्थितः प्रतिपन्नवान् बहुक्लेशमपि दाक्षिण्यपरोपकारसारस्तद्वचन महानन्द-कुमारः, यतः—"क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा । दन्ताग्रतृण प्राणान्नरेण किं निरुपकारेण ? ॥ १ ॥" ततः कृष्णचतुर्दशीनिशीथिन्यां स्थितोऽसावुत्तरसाधकतया, सोऽपि भाग्यनिश्चितस्तन्निधिबलाद्यथा-विधि सर्वपाऽप्यमापायया साधयामास कैलास इव निष्प्रकम्पस्तां विद्यां, सिद्धिसमये साक्षाद्रूपाभ्यद्धियाधि-देवी—अहो महोत्साहतया साधिताऽहं त्वया सिद्धाऽस्मि पर परकार्यसाधकायास्मै उत्तरसाधकाय तदेहि देहि नामाधाराय मां कुमारीमिवास्मै कुमाराय, इयतैव च त्वं कृतार्थं मन्येथाः, नहि कर्मणोऽधिकं विद्याश्चाऽपि विधातु शक्यं, यतः—"नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगाः, विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः । फलं कर्मायत्तं यदि किममरैः किञ्च विधिना, नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥१॥" इत्युक्त्वा सद्यः सा विद्युत्तिरोऽभवत्, सोऽपि निपुणात्मा कुमाराय तां विद्यां तथैव दैवतोक्तिपूर्वं दत्त्वा तत्त्वार्थवित्तन्निमित्तमेव विरक्तचित्तस्तपस्यामावृत्त, कुमारश्च जातस्तया विद्यया विद्याधर इव वियद्गामी, अहो ! भाग्याभ्यधिकत्व, यतः—"व्यवसाय करोत्यन्यः, फलमन्येन भुज्यते । पर्याप्तं व्यवसायेन, प्रमाण विधिरेव नः ॥ १ ॥" स च जगाद विहरत्तीर्थङ्करसाम्प्रततीर्थनमस्क्रियापरोपक्रियादि तत्क्रियाफलं सर्वकालम्—उच्छृङ्खलाः

खला इव विद्यायतिशायिशक्तयः प्रायः। स्युर्दुर्नयप्रवृत्ताः प्रोच्चैः पेढालपुत्र इव ॥१॥ तस्य तु तादृग्विद्यालाभेऽपि सुसंवृतस्य संयतवत् अब्धेरिव नैवासीन्मर्यादातिक्रमः क्वापि, क्रमाज्जातस्तस्य पुरुषोत्तमस्य प्रद्युम्न इव पित्रनु-यायी पुत्रः सौभाग्याद्यतिशायी, अन्यस्मिन् दिने तस्मिन् नन्दने दुर्दैवाविष्टेन दुष्टेन फणिना दष्टे सर्वथा च तच्चैतन्ये नष्टे वैद्यादियत्नानां कृपणरत्नानामिव वैफल्ये च दृष्टे जाते च पित्रादीनां प्रकृष्ट दुःखार्त्तिकष्टे मन्युत्पन्नम-तिना धनदत्तश्रेष्ठिना चतुरशीतिचतुष्पथेषु पटहेनोद्घोषयामासे—य एनं विषमूर्च्छापारवश्यादचेतनं स्तनन्धय-मोज्जीवयति तस्मै श्रेष्ठी स्वर्णकोटीमपि प्रदत्ते इति, तदाकर्ण्य वैदेशिकद्विज एकः सविवेकमभाषिष्ट श्रेष्ठिपुरः प्राप्तः—श्रेष्ठिन्! इतो दशोत्तरयोजनशत्यां मम निवासस्थानं श्रीनिधानं नाम नगरं, तत्र मम गृहे गृहिणी ज्ञाता देवतादेशप्राप्ता विषौषधी चक्षुषः स्पष्टदृष्टप्रत्ययाऽस्ति, मार्गे गमनभिया सा सह नानीता मया, यदि तां दिनोदयादर्वाक् कोऽपि कथमप्यानयति तदा तया नियतमयममृतेनेव जीवयस्येवेति, अथाचष्ट हृष्टः श्रेष्ठी—साधु रम्यो भूदेव! यदेवमावेदितवान् भवान् अय मे नन्दनः सक्रन्दन इवाचिन्त्यशक्तिः खगामिविद्ययाऽति-त्वरयाऽप्यानेष्यति तां, तदेहि स्वगृहिण्या हस्ताक्षराणि येन सा तामर्पयत्यस्मै, ततो विस्मितमुदितो वाच-द्विजः सञ्जीवस्यास्य लेखलेखनाय तावदुवाच महानन्दः सुकृतैककन्दः—तात! शतयोजनमात्रदिग्गतोऽहं श्रितोऽपि पुत्रमोहं कथं नाम तामानयामि ततः स्थानात्?, स्वीकृतनिर्वाहपूर्वमेव सर्वं साधितं साधिष्ठतां दधाती-त्युपायान्तरं किञ्चिद्विचिन्तयत तातपादाः, तातोऽप्यूचे—वत्स! वियद्गमने जीवविराधनाप्रभावात् का हन्त! शत-

योजन्याद्विनियतिः ?, क्षितिगतिमेवाभित्य हिंसा क्रियते, किञ्च-चियति भद्गुतरगतिसम्भवेन शतयोजन्य-पीयता न पूर्णा भविष्यी, चारित्रीचलने हि मार्गाणां चक्रत्वाद्विना भूर्भूयस्येवाभिवर्द्धते, श्रूयते चैवमेव सर्वत्रा विप्रतिपत्त्या, ईदृग्षाङमोऽपीवन च परमो धर्मः, धर्मकार्ये च तीर्थयात्राद्विवत् सहस्रयोजनीगमनेऽपि गृहिणो न कश्चिद्दोषः प्रत्युतागण्यपुण्यपोषः, तद्वत्स ! बालवत्सलतामालम्बस्व मा विलम्ब स्वल्पमपि तदीयपथ्यानय नविधौ, विषौतकस्मपा महर्षयोऽपि जीवद्यार्थमेव यतन्ते, तदत्र मुधा मौग्ध्यपरामर्शः को नाम विमर्शः ?, पुत्रेणाप्युक्त-साख्यातमवस्तातपादैः केवल न केवलाऽत्र धर्मधीः किन्त्वतिमात्रस्वपुत्रमोहधीरेव मुख्यवृत्त्या, तेनैतत्कृते सम्रतक्षितिः कथं न स्यात् ?, नियमश्च यथा गृहीतस्तथैव प्रमाणयितव्य ,-तेन यावद्गमनेन भूमौ शतयोजनी स्यात्ततोऽधिकगमने नियमभङ्ग एव, नहि नभोगमनमपेक्ष्य प्राग्मया नियमः स्वीचक्रे, ततः कुपितेन पित्रोक्तम्—अहो कैषमस्यामे सूक्ष्मेक्षिका ?, स्वपुत्रकृते हि जातु कश्चिदतिचारः स्यात्तदा पश्चात्माय श्चित्तेन सोऽपि शोध्यते, नहि सर्वथा निरतीचारता चारित्रिणामपि भवेत्, सर्वत्र हि लाभालाभादि विलोक्य, पठन्त्यपि-"एगंतेण निसेहो जोगेसु न देसिओ विही वावि । दलिअं पप्प निसेहो हुज्ज विही वा जहा रोगे ॥ १ ॥" न हि कदाग्रहग्रहान्तर्गत धर्मरहस्य, अहो कठोरहृदयता अहो बालहत्यायामपि निरपेक्षता अहो ! लोकापवादेऽप्यभीरुकता अहो निर्दयात्मकता, इत्यादि पित्रादिभिस्तत्स्वरूपमवगत्यागतैर्नृपमन्त्र्यादिभिश्च सर्वशक्त्योक्तोऽपि स यावन्न जहाति निजाग्रहं तावद्वावीदुपत्कोपकरालः क्ष्मापालः—भोः कदाग्रहैकदीप !

तदौषध्यनानयने यद्यय शिशुर्विपत्स्यते तदा त्वां सकुटुम्बं सर्वस्वापहारपूर्वं जीवनिग्राहं निग्रहीष्ये, सोऽप्यूचे–देव ! सर्वस्मात्सर्वकुटुम्बात्प्राणेभ्योऽपि च प्रियतमोऽयं तनयः, तद्विपत्तावपि निरपेक्षतायां का नामा न्यापेक्षा का नाम चेषा विभीषिका तस्मायत्भवति तद्भवतु पर स्वीकृतमत स्वल्पमपि कल्पान्ते नातिचरामि सर्वथा–श्रविणमाणपुत्रादि, सुलभं हि भवे २। स्याद्लन्तैरपि भवैर्जैनधर्मस्तु दुर्लभः ॥१॥ सर्वस्वमाणपुत्रादेर्नाशो किमपि सम्भवे । दुःखं भवेष्वनन्तेषु, धर्मध्वंसे तु दुस्सहम् ॥२॥ एव तात्त्विकसात्त्विकमुकुटायमाने तस्मिन् वद माने धर्मैकामतया आकृष्टविषयवेयाकृष्टया: शासनदेव्या वाग् दिव्याऽभिर्वभूव–भोः कुमार ! सत्त्वैकसार ! दर्शय सर्वेषां स्वधर्मवात्र्यमहिमानं निमान सिञ्चस्व स्वकरामृतरसेनैनं बालं यथाऽसौ प्रोज्जीवति तत्काल, ततो विस्मयाद्भुतभाजने समयजने सिक्तोऽसौ कुमारेण स्वपाणिपावितनीरेण जातश्च तरसा सुधारसाभिषिक्त इव सुव्यक्तचेतनः प्रमुदितश्च प्रेयैः सर्वोऽपि जनः अजायन्त वर्द्धापनादिमहोत्सवाः प्रावर्तन्त सर्वतोऽपि कुमारान्भुतयशसारवाः–पेकान्यमाहात्म्यमहो !, महीपः किञ्चिदद्भुतम् । येनैष धर्मनिर्वाहः, पुत्रप्रोज्जीवनाद्यपि ॥१॥ स्वल्पमात्रकृतेऽप्येके, त्यजन्ति सुणवद्व्रतम् । दृढमताः केचिदेव, विकटे सङ्कटेऽप्यहो ॥ २ ॥ अपरेद्युः स्वतमाक्त पुत्रादिवृत्तान्ततान्तस्वान्तकुसुमवतीकान्तप्रेरितः स स्वगत्या गतवान् महाविदेहे प्रणतिपूर्वं पृष्टवांश्च जिनश्रेष्ठ मेव्यादिभागभवसन्देह, स्वाम्यप्यूचे–धन्यपुरे सुधनो नाम धनी धनश्रीर्गेहिनी धनावहश्च तस्य बालवयस्यः, तौ प्रीत्या सहोदराविव सदैव व्यवहरतः सुभावृतया शुद्धव्यवहारतः, अन्तरा २ तु क्रयविक्रयादौ विदम्भ

किञ्चार्यपर्णस्वगृहव्यापारणाद्विना सुधनः सुहृत्स्वितस्ततो व्ययति, अविश्वासास्पदत्वेन च तेन सुहृच्चित्त मूपस्तर ब्रूयते मैत्रीमङ्गभिया तु न किञ्चित् प्रतिब्रूते, सुधनेन चैवमसद्व्ययेन विनाशितं तस्य द्रम्मशतं, एकेन च वणिक्सुतेनैकेन सद्व्यवहाराद्वितस्ततो मिलितास्तस्य देया विंशतिर्द्रम्माः, सयोऽनर्पणात्स्वल्पत्वा द्विना पुनरुत्तमर्णानामार्गणाच्च सुधनसन्निधौ स्थिताः, अन्येन च लभ्यधनप्रदानेऽधिकं द्रम्मद्वयं भ्रान्त्या दत्तं पश्चाज्ज्ञातं सुधनेन परं लोभान्न प्रत्यर्पित–लोभः क्षोभकरः कस्य, न स्याद्धर्मवतोऽपि हि? १। यः सूक्ष्मसम्परायाख्यगुणस्थानेऽप्यवाप्यते ॥१॥ एतच्च चास्यत्रय व्यवहारशुद्धिमसिद्धिमसया गुरोः पुरोऽपि सम्यग् नालोचित–समर्थोऽप्यसमर्थोऽसौ, विविक्तोऽप्यविविक्तवत्। सशल्यया दुःस्थधर्मिष्ठोद्धारमारचयेच्च यः॥ १ ॥ इति व्याख्या सुधनेनाथमसमये सीदतः परमधार्मिकसाधर्मिकस्य दत्तं द्रम्मशतं तदुपजीवनेनासौ यावज्जीवसुखात् सुखनिर्वाहितां, समयदत्तं हि जलदजलवत्स्वल्पमप्यनल्पफलवत्, उक्तञ्च–"करचलुअपाणिएणवि अवसरदिन्नेण मुच्छिअं जिअइ। पच्छा मुआण सुबहि! घडसय दिन्नेण किं तेण? ॥ १ ॥" क्रमात्ते समासायुष्काः सुधनो धनभीस्तत्सुहृत्तौ वणिजौ साधर्मिणश्च चत्वारोऽप्याराद्धश्राद्धधर्मेण सौधर्मे गताश्च्युताश्च धनदत्तकुसुमश्रेष्ठी तत्पुत्राश्च चत्वारो जज्ञिरे, प्राग् द्रम्मशतविनाशेनाद्यपुत्रास्त्वितुः सर्वस्वनाशायासीत्, तेन च प्रागेकस्य श्राद्धस्य वाणिज्यविषयाद्यनुत्सार्यमात्सर्यतो व्यसनिकलङ्कप्रदानादव्यसनिस्व तं प्रत्येव विद्विष्टतया सद्यः किमयं न म्रियत इति दुर्ध्यानाच्चास्यायुष्कं तस्याजनिष्ट, मध्यमात्मजयोः प्राग् देयमिदमृणं जातं, प्राग्द्रम्मशतोपकृतेस्त्व कोटा

कोटीपूरणाद्यकृपाः—जघन्यतो दशगुणमृण घातादि वा पुरः । द्वेषे तु शतसहस्रलक्षकोटिगुणाप्यपि ॥१॥ क्रमुकस्याः सगहमहिषीप्रसूतपशुकयोः कोऽप्येतावपत्यस्य याति तदा साध्विति प्राग् दुर्ध्यानाजातमात्रापत्यद्वयवियोगोऽजनि, वेपलम्यनमोगीस्तु संनिहितसुरकृता, एव मध्यमश्रेष्ठ्यात्मजयोः स्थानाद्यपि स्वामिनोक्तम्, इत्यर्थं द्राक्सुधास्वादोद्भूतमहानन्देन स्वस्थानमागत्य श्रीजिनोदिते सम्यगनिवेदिते निर्विण्णाः पित्रादयः प्रपन्नाश्च प्रव्रज्यां, महानन्दोऽपि तौ सोदरौ धर्मधनप्रदानादिना प्रमोदमेदुरौ विधाय समये च दीक्षामादाय माहेन्द्रे माहेन्द्रसमः सुरोत्तमः समभूत्, ततश्च्युतश्च सेत्स्यति । इति विगिरतिमत विधां, पशुसङ्क्षेपविधेः प्रपद्य भोः । विधुरेऽपि विधाय धीरतां, प्रतिपालय धनदत्तपुत्रवत् ॥ १ ॥

॥ इति पञ्चमे महानन्दनिदर्शनम् ॥

उक्तं षष्ठं व्रतमथ भोगोपभोगाभिधानं सप्तमं गुणव्रतं तु द्वितीयं, तच्चोपभोगपरिभोगव्रतमित्यप्युच्यते अर्थस्यैक्यात्, इदं द्विधा—भोगतः कर्मतश्च, तत्र भोगो द्विविधः—उपभोगपरिभोगभेदात्, यदेकवारमेवान्तर्वा भुज्यते तस्याहारभक्षणादिकुसुमादेर्भोगः, उपभोग उपशब्दस्य सकृदर्थत्वादन्तरर्थत्वाच्च, यच्च पौनःपुन्येन बहिर्वा भुज्यते तस्य भवनाङ्गनादेर्भो(परिभो)गः परिशब्दस्यासकृदर्थत्वाद्बहिरर्थत्वाच्च, यदाह—"उवभोगे विगईओ तंबोलाहाररपुप्फफलमाई । परिभोगे वत्थसुवण्णमाइय इत्थिगेहाइ ॥१॥" श्रावकेण तावदुत्सर्गतः प्रासुकैषणीयाहारभोजिना भाव्य, तच्छिक्षसति सचित्तपरिहारः कार्यः, तस्याप्यशक्तौ बहुसावद्यान्मद्यामिषानन्तकायादीन् वर्जयता

प्रत्येकमिश्रसचित्तादीनां प्रमाणं कार्यं, भणितं च—"निरवज्जाहारेणं १ निज्जीवेणं २ परित्तमीसेणं ३ । अत्ताणुसंधणपरा सुसावगा एरिसा हुंति ॥ १ ॥" एवमुत्सर्गादिविशेषं विना सकुम्भतकरणस्फटिकमणिसुवर्णखचितकुण्डलरणनूपुरादिपरिधानमुकुटादिबन्धनशिरोवेष्टनाञ्चलोर्ध्वमुखन्यसनादिनाऽत्यन्तचेतोग्रहकुन्मादजनापवादविजनकमत्युत्कटवेषवाहनालङ्कारादिकमपि श्रावको वर्जयेत्, यत उक्तम्—"अइरोसो अइतोसो अइहासो दुज्जणेहि संवासो । अइउब्भडो अ वेसो पंचवि गरुअंपि लहुअंति ॥ १ ॥" अतिमलिनातिस्थूलह्रस्वच्छिद्रवस्त्रादिसामान्यवेषपरिधानेऽपि कुचेलत्वकार्पण्यादिना जनापवादोपहसनीयतादि स्यादतः स्वविभवयोऽवस्थानिवासस्थानकुलाद्यनुरूपं वेषं कुर्यात्, उचितवेषादावपि प्रमाणनैयत्यं कार्यम्, एवं दन्तकाष्ठाभ्यङ्गतैलोद्वर्तनमज्जनवस्त्रविलेपनाभरणपुष्पफलधूपासनशयनभवनादेस्तथौदनसूपस्नेहशाकपेयाखाद्यस्वाद्याद्यशनपानखाद्यस्वाद्यादेस्सर्वस्य यथा प्रमाणं कार्यं, शेषं च त्याज्यमानन्दादिसुश्रावकवत्, कर्मतोऽपि श्रावकेण मुख्यतो निरवद्यकर्मप्रवृत्तिमता भवितव्यं, तदशक्तावप्यत्यन्तसावद्यविवेकिजननिन्द्यमद्यविक्रयादि कर्म वर्जनीयं, दोषकर्मणामपि प्रमाणं करणीयं, यतः—"रंधणकंडणपीसणदलण पयणं च एवमाईणं । निच्चं परिमाणकरणं अविरइबंधो जओ गुरुओ ॥ १ ॥" अत्र सूत्रकृद् गाथामाह—

मज्जंमि अ मंसंमि अ पुप्फे अ फले अ गंधमल्ले अ । उवभोगपरीभोगे बीअंमि गुणव्वए निंदे ॥ २० ॥

'मज्जमी'ति ॥ मद्य-मदिरा, तच्च द्वेधा-काष्ठोद्भवं पिष्टोद्भवं च, मद्यस्य च प्रथममुपन्यासो बहुदोषाश्रयत्वात् महादो-
नर्थहेतुत्वाच्च, यदाह-"गुरुमोहकलहनिद्दापरिभवउवहाससरोसमयहेऊ । मज्जं दुग्गइमूलं हिरिसिरिमइधम्मनास-
यरं ॥ १ ॥ श्रूयते किल शाम्बेन, मद्यान्धभविष्णुना । हतं नृपकुलं सर्वं, प्लोषिता च पुरी पितुः ॥ २ ॥"
मांसं त्रेधा-जलचरस्थलचरखचरजन्तुसत्कमेदाच्चर्मरुधिरमांसभेदाद्वा, एतदप्यतिदुष्टं, यदाहुः-"पंचिंदिअवह-
भूअं मंसं दुग्गंधमसुइबीभत्थं । रक्खपरितुलिअमक्खणमामयजणयं कुगइमूलं ॥ १ ॥ आमासु अ पक्कासु अ
विपच्चमाणासु मंसपेसीसु । सययं चिअ उववाओ भणिओ निगोअजीवाणं ॥ २ ॥" योगशास्त्रेऽपि-"सद्यः
संमूर्च्छितानन्तजन्तुसन्तानदूषितम् । नरकाध्वनि पाथेयं, कोऽश्नीयात् पिशितं सुधीः ॥ १ ॥" सद्यो-जन्तु-
विशसनकाल एव संमूर्च्छिता उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां सन्तानः-पुनः पुनर्भवनं तेन दूषित-
मिति तद्वृत्तौ व्याख्या, सूत्रगाथायां चशब्दान्मध्वादिशेषाभक्ष्यद्रव्याणामनन्तकायानां च परिग्रहः, तत्राभक्ष्य-
द्रव्याणि द्वाविंशतिस्तथाहुः-"पंचुंबरि ५ चउ विगई ९ हिम १० विस ११ करगे अ १२ सव्वमट्टी अ १३। रय-
णीभोअणगं चिय १४ बहुबीअ १५ अणंत १६ संधाण १७ ॥ १ ॥ घोलवडा १८ वायंगण १९ अमुणिअना-
माणि फुल्लफलयाणि २०। तुच्छफल २१ चलिअरसं २२ वज्जह दव्वाणि बावीसं ॥ २ ॥" व्याख्या-पञ्चोदुम्बरी
वट १ पिप्पलो २ दुम्बर ३ प्लक्ष ४ काकोदुम्बरीफल ५ रूपाऽसौ मशकाकारसूक्ष्मबहुजीवनिचितत्वाद्वर्जनीया
५, लौकिका अपि पेठुः-"कोऽपि क्वापि कुतोऽपि कस्यचिदहो चेतस्यकस्मान्मनः, केनापि प्रविशत्युदुम्बरफल

माणिक्रमेण क्षणात् । येनास्मिन्नपि पाटिते विघटिते विस्फोटिते घोटिते, निष्पिष्टे परिगालिते विदलिते निर्यत्यसौ वा न वा ॥ १ ॥" चतस्रो विकृतयो-मद्य १ मांस २ मधु ३ नवनीत ४ रूपास्तद्वर्णानेकजीवसमूर्च्छनात्, तथा चाहुः-"मज्जे महुमि मसमि, नवणीअमि चउत्थए । उप्पज्जंति चयंति अ, तव्वण्णा तत्थ जंतुणो ॥ १ ॥" परेऽपि-"मद्ये मांसे मधुनि च, नवनीते तक्रतो बहिर्नीते । उत्पद्यन्ते विलीयन्ते, सुसूक्ष्मा जन्तुराशयः ॥१॥ सप्तग्रामे च यत्पापमग्निना भस्मसात्कृते । तदेतज्जायते पापं, मधुबिन्दुप्रभक्षणात् ॥२॥" मद्यमांसे प्राग्व्याख्याते, मधु माक्षिकं १ कौत्तिक २ भ्रामरं ३ चेति त्रिधा, नवनीत चतुर्धा गो १ महिष्य २ जै ३ डका ४ सम्भवभेदात्, एवं ९, हिम शुद्धासङ्ख्येयाप्कायरूपत्वात् १०, विष मन्त्रोपहतवीर्यमप्युदरान्तर्वर्तिगण्डोलकादिजीवघातहेतुत्वान्मरणसमये महामोहोत्पादकत्वाच्च ११, करका असङ्ख्याप्कायिकत्वात्, नन्वेवमसङ्ख्याप्कायमयत्वात्पानीयस्याप्यभक्ष्यत्व?, सत्य, परं पानीयेन विना निर्वाह एव न स्यात्, करकादीन् विना तु न कश्चिदनिर्वाहः तत एव निषिद्धा न पुनः पानीयं, तदपि सामर्थ्ये श्रावकस्य प्रासुकमेवोचितं १२, सर्वाऽपि मृत्तिका उदरान्तर्दर्दुरादिपञ्चेन्द्रियप्राण्युत्पत्तिनिमित्तत्वाद्विमा मरणाद्यनर्थकारित्वात्, सर्वग्रहण खटिकादितत्त्वेषपरिहारार्थं, तद्भक्षणस्यामामयाविशेषजनकत्वात्, मृत्तिकाग्रहणमुपलक्षण तेन सुधाद्यपि वर्जनीयं, तद्भक्षणाद्बहवोऽपायाः सम्भवात्, दृश्यन्ते हि मृत्तिकादिभक्षणव्यसनिनामबलतापाण्डुरोगक्षयदीर्घत्वाजीर्णश्वासक्षयरोगादयो महान्तो मरणान्ताः, सचित्तमृत्तिकादिभक्षणे चासङ्ख्येयपृथिवीकायविराधनाद्यपि, एवं तर्हि लवणमप्यसङ्ख्य-

पृथिवीकायात्मकत्वात्त्याज्य ?, सत्य, किन्तु सर्वथा तत्त्यागे गृहस्थस्य न निर्वाहः, सचित्तं पुनस्तद्भोजने त्यजति, विवेकिनो हि भुञ्जाना यदि लवणं गृह्णन्ति तदा प्रासुकमेव नत्वितरत्, प्रासुकत्वं च तस्याग्न्यादिप्रबलशस्त्रयोगेनैव संभवति न त्वन्यथा, पृथिवीकायजीवानामसङ्ख्येयत्वेनात्यन्तसूक्ष्मत्वात्, तथा च पञ्चमाङ्गे एकोनविंशे शते तृतीयोद्देशके निर्दिष्टोऽयमर्थः-"वज्रमय्यां शिलायां स्वल्पपृथिवीकायस्य वज्रलोष्टकेनैकविंशतिं वारान् पेषणे सन्त्येके केचन जीवा ये स्पृष्टा अपि नेति" ११, रजनीभोजनं बहुविधजीवसम्पातसम्भवेनैहिकपारलौकिकानेकदोषदुष्टत्वात्, यदभिहितं-"मेहं पिपीलिआओ हणंति वमणं च मच्छिआ कुणइ । जूआ जलोदरं तू कोलिअओ कोढरोगं च ॥ १ ॥ वालो सरस्स भंगं कंटो लग्गइ गलम्मि दारुं च । तालुम्मि विंधइ अली वंजणमज्झम्मि भुंजंतो ॥१॥" निशीथचूर्णावपि-"गिहकोकिलअवयवसमिस्सेण भुत्तेण पोट्टे किल गिहकोइला संमुच्छन्ति ।" एवमत्रान्तर्विषमिश्रसर्पादिलालामलमूत्रवीर्यपातादिना मृत्याद्यपि, तथा-"मारिंति मट्ठिअल जामिणीसु रयणीअरा समंतोवि । छलंति य ते हु फुडं रयणीए भुंजमाण तु ॥ १ ॥ जीवाण कुंथुमाईण घायणं भाणधोअणाईसु । एमाइ रयणिभोअणदोसे को साहिउं तरइ ? ॥ २ ॥ उलूककाकमार्जारगृध्रशम्बरशूकराः । अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥३॥" इत्यादि, परेऽपि पठन्ति-"मृते स्वजनमात्रेऽपि,सूतकं जायते किल । अस्तगते दिवानाथे, भोजनं क्रियते कथम् ? ॥१॥ रक्तीभवन्ति तोयानि, अन्नानि पिशितानि च। रात्रौ भोजनसक्तस्य, ग्रासे तन्मांसभक्षणम् ॥ २ ॥ नोदकमपि पातव्यं, रात्रावत्र युधिष्ठिर ! । तपस्विना विशेषेण,

प्राणिक्रमेण क्षणात् । येनास्मिन्नपि पाटिते विघटिते विस्फोटिते त्रोटिते, निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥ १ ॥" चतस्रो विकृतयो-मद्य १ मांस २ मधु ३ नवनीत ४ रूपास्तद्वर्णानेकजीवसम्मूर्च्छनात्, तथा चाहुः-"मज्जे महुंमि मंसंमि, नवणीयंमि चउत्थए । उप्पज्जंति चयंति अ, तव्वण्णा तत्थ जंतुणो ॥ १ ॥" परेऽपि-"मद्ये मांसे मधुनि च, नवनीते तक्रतो बहिर्नीते । उत्पद्यन्ते विलीयन्ते, सुसूक्ष्मा जन्तुराशयः ॥१॥ सप्त ग्रामे च यत्पापमग्निना भस्मसात्कृते । तदेतज्जायते पापं, मधुबिन्दुप्रभक्षणात् ॥२॥" मद्यमांसे प्रागव्याख्याते, मधु माक्षिक १ कौत्तिक २ भ्रामर ३ चेति त्रिधा, नवनीतं चतुर्धा गो १ महिष्य २ जा ३ विका ४ सम्भवभेदात्, एवं ९, हिम शुद्धासङ्ख्येयाप्कायरूपत्वात् १०, विष मन्त्रोपहतवीर्यमप्युदरान्तर्वर्तिगण्डोलकादिजीवघातहेतुत्वान्मरणसमये महामोहोत्पादकत्वाच्च ११, करका असङ्ख्याप्कायिकत्वात्, नन्वेवमसङ्ख्याप्कायमयत्वात्पानीयस्याप्यभक्ष्यत्वं ?, सत्यं, परं पानीयेन विना निर्वाह एव न स्यात्, करकादीन् विना तु न कश्चिन्निर्वाहः तत एव निषिद्धा न पुनः पानीयं, तदपि सामग्र्यां श्रावकस्य प्रासुकमेवोचितं १२, सर्वाऽपि मृत्तिका उदरान्तर्दर्दुरादिपञ्चेन्द्रियाद्युत्पत्तिनिमित्तत्वाद्विना मरणाद्यनर्थकारित्वात्, सर्वग्रहणं खटिकादितद्भेदपरिहारार्थं, तद्भक्षणस्यामाशयादिदोषजनकत्वात्, मृत्तिकाग्रहणमुपलक्षणं तेन सुधाद्यपि वर्जनीयं, तद्भक्षणाद्धातादानर्थसम्भवात्, दृश्यन्ते हि मृत्तिकादिभक्षणव्यसनिनामबलतापाण्डुरोगवेदवीर्यबल्याजीर्णश्वासक्षयरोगादयो महानर्था मरणान्ताः, सचित्तमृत्तिकादिभक्षणे चासङ्ख्येयपृथिवीकायविराधनाऽपि, एवं तर्हि लवणमप्यसङ्ख्य-

पृथिवीकायात्मकत्वात्त्याज्यं ?, सत्यं, किन्तु सर्वथा तत्त्यागे गृहस्थस्य न निर्वाहः, सचित्तं पुनस्तद्भोजने त्यजति, विवेकिनो हि भुञ्जाना यदि लवणं गृह्णन्ति तदा प्रासुकमेव नत्वितरत्, प्रासुकत्वं च तस्याग्न्यादिप्रबलशस्त्रयोगेनैव संभवति न त्वन्यथा, पृथिवीकायजीवानामसङ्ख्येयत्वेनात्यन्तसूक्ष्मत्वात्, तथा च पञ्चमाङ्गे एकोनविंशे शते तृतीयोद्देशके निर्दिष्टोऽयमर्थः–"वज्रमय्यां शिलायां स्वल्पपृथिवीकायस्य वज्रलोष्ठकेनैकविंशतिं वारान् पेषणे सत्यपि केचन जीवा ये स्पृष्टा अपि नेति" ११, रजनीभोजनं बहुविधजीवसम्पातसम्भवेनैहिकपारलौकिकानेकदोषदुष्टत्वात्, यदभिहितं–"मेहं पिपीलिआओ हणंति वमणं च मच्छिआ कुणइ । जूआ जलोदरं तू कोलिअओ कोढरोगं च ॥ १ ॥ वालो सरस्स भंगं कंटो लग्गइ गलंमि दारु च । तालुंमि विंधइ अली वंजणमज्झमि भुंजंतो ॥२॥" निशीथचूर्णावपि–"गिहकोकिलअवयवसमिस्सेण भुसेण पोट्टे किल गिहकोइला संमुच्छन्ति ।" एवमन्यान्तर्विषमिश्रसर्पादिलालामलमूत्रवीर्यपातादिना मृत्याद्यपि, तथा–"मारिंति मञ्झिअल जामिणीसु रयणीअरा समंतोवि । छलंति य ते हु फुडं रयणीए भुञ्जमाणं तु ॥ १ ॥ जीवाण कुंथुमाईण घायणं भाणधोअणाईसु । एमाइ रयणिभोअणदोसे को साहिउं तरइ ? ॥ २ ॥ उलूककाकमार्जारगृध्रशम्बरशूकराः । अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥३॥" इत्यादि, परेऽपि पठन्ति–"मृते स्वजनमात्रेऽपि, सूतकं जायते किल । अस्तंगते दिवानाथे, भोजनं क्रियते कथम् ? ॥१॥ रक्तीभवन्ति तोयानि, अन्नानि पिशितानि च । रात्रौ भोजनसक्तस्य, ग्रासे तन्मांसभक्षणम् ॥ २ ॥ नोदकमपि पातव्यं, रात्रावत्र युधिष्ठिर ! । तपस्विना विशेषेण,

गृहिणा च विवेकिना ॥ ३ ॥ ये रात्रौ सर्वदाऽऽहारं, वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य, फलं मासेन जायते ॥ ४ ॥" स्कन्दपुराणे रुद्रप्रणीतकपालमोचनस्तोत्रे सूर्यस्तुतिरूपेऽपि–"एकभक्ताशनान्नित्यमग्निहोत्र फलं लभेत् । अनस्तभोजनो नित्यं, तीर्थयात्राफलं भजेत् ॥ १ ॥" रात्रौ भोजनकारिणां च कथं नामाचमनेऽपि शुद्धिः, यतः–"अपीतेजोमयो भानुरिति वेदविदो विदुः । तत्करैः पूतमखिलं, शुभं कर्म समाचरेत् ॥१॥ नैवाहुतिर्न च स्नानं, न श्राद्धं देवतार्चनम् । दानं वा विहितं रात्रौ, भोजनं तु विशेषतः ॥ २ ॥" आयुर्वेदेऽपि–"हृन्नाभिपद्मसङ्कोचश्चण्डरोचिरपायतः । अतो नक्तं न भोक्तव्यं, सूक्ष्मजीवादनादपि ॥ १ ॥" तस्माद्विवेकिना रात्रौ चतुर्विधोऽप्याहारः परिहार्यः, तदशक्तौ स्वशनं खादिमं च त्याज्यमेव, स्वादिमं पूगीफलाद्यपि दिवा सम्यक् शोधनादियतनयैव गृह्णाति, अन्यथा त्रसहिंसादयोऽपि दोषाः, मुख्यवृत्त्या च प्रातः सायं च रात्रिप्रत्यासन्नत्वात् द्वे घटिके भोजनं त्यजेत्, यतः–"अह्नो मुखेऽवसाने च, यो द्वे द्वे घटिके त्यजन् । निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥ १ ॥ " अत एवागमे सर्वजघन्यं प्रत्याख्यानं मुहूर्त्तप्रमाणं नमस्कारसहितमुच्यते, जातु तत्तत्कार्यव्यग्रत्वादिना तथा न शक्नोति तथाऽपि सूर्योदयास्तनिर्णयमपेक्ष्य एवाऽऽतपदर्शनादिना, अन्यथा रात्रिभोजनदोषः, अन्धकारभवनेऽपि भीतया प्रदीपाकरणादिना त्रसादिहिंसानियमभङ्गमायामृषावादादयोऽधिकदोषा अपि, यतः–"न करेमित्ति भणित्ता तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई मायानिअडीपसंगो अ ॥ १ ॥ पावं काऊण सयं अप्पाणं सुद्धमेव वाहरइ । दुगुणं करेइ पावं बीअं बालस्स मंदत्तं ॥२॥"

रात्रिभोजननियमाराधनविराधनयोर्मिश्रद्वयदृष्टान्तो यथा—एकत्र ग्रामे श्रावकभद्रकमिथ्यादृष्टिपक्षत्रय सुहृदो वणिजः, तेऽन्यदा जैनाचार्यान्तिके गताः, तैश्च रात्रिभोजनवर्जनादिदेशनां चक्रे, ततः श्राद्धेन रात्रिभोजन कन्दमूलाभक्ष्यनियमः श्राद्धकुलोचिततया सोत्साहमेव जगृहे, भद्रकेण च बहु बहु विमृश्य रात्रिभोजनमेव नियमयामासे, मिथ्यादृष्टिस्तु न प्रतिबुद्धः कदाग्रहग्रस्तत्वात्, यतः—"आग्रही बत निनीषति युक्तिं, तत्र यत्र मतिरस्य निविष्टा। पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ १ ॥" तदनु श्रावकभद्रकयोः कुटुम्बेऽपि रात्रिभोजननियमपरे अभूतां, गृहेशानुसारिणी हि गृहव्यवस्था, आस्तिकश्च क्रमात् प्रमादबहुलतया स्वनियमे शिथिलादृतिस्तत्सत्कार्यव्याकुलतायां प्रातः सायं च त्याज्यघटीद्वयमध्येऽपि भुङ्क्ते क्रमात्सूर्येऽस्तं गतेऽपि, सम्यग्नियमाराधकभद्रकादिभिर्नोदितस्तु सम्प्रति दिवस एवास्ति क रात्रिरित्यादि प्रत्याह, तदनुसारेण सकलं तत्कुटुम्बमपि तथैव जातं, अहह ! गृहस्वामिनः प्रमादबहुलतायां पापप्रसक्तवृद्धिः, अन्यदा किञ्चिन्नृपादिष्टकार्यव्यग्रतया प्रातर्मध्याह्नेऽप्यभुक्तो सायं सद्यैव भो यावत् कथमपि भोक्तुं गृहमागतो तावदुत्स्थूरोऽभवत्, ततः सुहृदादिभिरत्यर्थं कदर्थितोऽपि भद्रको नाभुङ्क्तैव, यतः—"अप्पहिअं कायव्वं जइ सक्का परहिअंपि कायव्वं। अप्पहिअपरहिआण अप्पहिअं चेव कायव्वं ॥ १ ॥" श्रावकस्तु निःशूकतया किञ्चिदन्धकारप्रसरेऽपि यथेच्छं बुभुजे, तदा च तदात्तदुष्कृतादिव मूर्ध्नः पतिता यूका तेनाहारान्तराहारिता ततोऽसौ जलोदरमहाव्याधिनाऽत्यन्त बाधितो मृत्वा निशाभोजननियमभङ्गात्क्रूरो मार्जारोऽजनि, ततश्च दुष्टेन शुना कदर्थ्यमानो विपद्याप

नरके चोत्पन्न, रजनीभोजनप्रसक्तो मिथ्यात्व्यपि कदाचित्किञ्चिद्रोगमिषमाहारमुक्त्वा यावद् यावदं त्रुटत्प्राणनिषि-
रूपीभूय मृतो मित्रवत्स्यैव मार्जारो नारकश्चाभूत्, मन्त्रकस्तु सम्यगनियममाराधनात् सौधर्मे महर्द्धिः सुरोऽभूत्,
मार्जारजीवश्च नरकोद्वृत्तो निःस्वद्विजस्य तनूजोऽजनि श्रीपुञ्जनामा, मिथ्यात्विजीवश्च सद्गुणघाता श्रीधराभिधः,
इतश्चोपपुरुषेण मन्त्रकदेवेन रहसि स्वस्वरूपज्ञापनप्राग्भवकथनपूर्वं प्रतिबोध्य रात्रिभोजनाद्यभक्ष्यनियमं ग्राहितौ
तौ तत्प्रतिपालने दृढीकृतौ च, यतः—“पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १ ॥” मित्राभ्यां तु कदाप्यहनिप्रहाय
सर्वथा भोजनं निषिद्धं, तयोर्लङ्घनत्रयं जातं, तृतीयरात्रावधिष्ठितमन्त्रकसुरेण तन्नियममहिमपुष्ट्यै तत्र भाव्री
पतेराष्टान्तिकी जठरव्यथा विचक्रे, यथा यथा भिषग्ज्योतिषिकमान्त्रिकाद्यः किञ्चिदुपचेरुस्तथा तथा सा घृतसि-
क्तवाल्लेवापर्द्धततमां, ततो मन्त्र्यादिषु किंकर्तव्यमूढेषु हाहारवपरेषु पौरेषु च दिवि दिव्या वागभूत्—भो ! भो !
निशाभोजनवर्जनादिदृढधर्मश्रीपुञ्जहस्तस्पर्शेनैवास्य राज्ञः पाटवं भावि नान्यथा कथमपीति, ततः कोऽत्र पुरे
श्रीपुञ्ज इति विमृशत्सु सचिवादिषु केनाप्युक्तं निःस्वविप्रपुत्रः स्वनियमवार्त्तायां लङ्घनत्रयेऽप्यक्षुभितः श्रीपुञ्जः
शिष्टरेकोऽस्ति स एवात्र सम्भवीति, ततः सम्भावनामात्रेणाप्यमानबहुमानेनाहूतः सचिवाद्यैः स श्रीपुञ्जः,
सपद्यागतश्च सोत्साहमुवाच—यदि मदाराध्यमानयामिनीभोजनादिनियममाहात्म्यमस्ति तदानीमिदानीमेवास्य
राज्ञः सर्वाङ्गव्यथा सर्वथाऽप्युपशाम्यतु, इत्युक्तिपूर्वमूर्वीशं स स्वहस्तस्पर्शेनैव प्रदिदिति पटूचक्रे, ततस्तुष्टेन राज्ञा

श्रीपुत्राय पञ्चशतीग्रामाधिपत्यं भावायि, तद्वचनाच नृपाद्यैस्तत्पित्राद्यैरन्यैरपि भूयोभिर्विभावरीभोजनाद्वि न्यघ्यात, एवं जिनधर्मं प्रभावयश्चिर भुक्तपञ्चशतीग्रामसाम्राज्यः श्रीपुञ्जः श्रीधरेण सार्द्धं सौधर्मं प्रासात्रयोऽपि च क्रमात्सिद्धीः ॥

॥ इति रात्रिभोजने मित्रत्रयसम्बन्धः ॥



बहुबीज पम्पोटकादिकमभ्यन्तरपुटाविरहितकेवलबीजमय तच प्रतिबीजं जीवोपमर्दसम्भवाद्वर्जनीय, ये स्वाभ्यन्तरपुटाद्विसहितबीजमय दाडिमटिन्दुरकादि तन्नाभक्ष्यतया व्यवहरन्ति १५, अनन्तकायिकानि अनन्त जन्तुजातघातपातकहेतुत्वात्, यतः-"कुम्भो नैरयिकाः सुराश्च निखिलाः पञ्चाक्षतिर्यग्गणा, द्व्यक्ष्याद्या ज्वलनो यथोत्तरममी सङ्ख्यातिगा भाषिताः। तेभ्यो भूजलवायवः समधिका प्रोक्ता यथानुक्रम, सर्वेभ्यः शिवगा अनन्तगुणितास्तेभ्योऽप्यनन्तांशगाः ॥१॥" एतानि च व्यक्त्याऽग्रे दर्शयिष्यन्ते १६, सन्धानं निम्बुकबिल्विका दीनामनेकजीवससक्तिनिमित्तत्वात्, सन्धानस्य च व्यवहारभूत्या जिनश्रयास्परतोऽभक्ष्यत्वमाचक्षते १७, घोलवटकानि-आमघोलमिश्रवटकानि उपलक्षणत्वादामगोरससंपृक्तद्विदलानि च केवलिगम्यसूक्ष्मजीवसस क्तिसम्भवात्, उक्तञ्च सत्तकनिर्युक्तौ-"सव्वेसुवि देसेसु सव्वेसुवि चेव तहय कालेसु। कुसिणेसु आमगोरस

छुसेसु निगोअपंचिंदी ॥ १ ॥" द्विदललक्षण स्वेवमाहुः–"जमि उ पीलिज्जंते नेहो नहु होइ बिंति तं विदलं। विदलेवि हु उप्पन्नं नेहजुअं होइ नो विदलं ॥ १ ॥" इति १८, वृन्ताकानि निद्रामाद्युस्थमदनोद्दीपनादिदोषपोषकत्वात्, पठन्ति च परेऽपि–"यस्तु वृन्ताककालिङ्गमूलकानां च भक्षकः। अन्तकाले स मूढात्मा, न स्मरिष्यति मां प्रिये ! ॥ १ ॥" इति १९, अज्ञातनामानि पुष्पाणि फलानि च, अज्ञानतो निषिद्धपुष्पफलेषु प्रवृत्तौ व्रतभङ्गसम्भवाद्विषपुष्पफलेषु तु प्रवृत्तौ जीवितस्यापि नाशात्, वंकचूलपल्लीपतिसार्थिकवत् २०, तुच्छफलं मधुकजम्बूबिल्वादेः, उपलक्षणत्वाच्च तुच्छं पुष्पं करीरारणिशिग्रुमधूकादेः, तुच्छं पत्रं प्रावृषि तन्दुलीयकादेश्च बहुजीवसंमिश्रत्वात्, यथा तुच्छफलमर्दनिष्पन्नकोमलचवलकमुद्गसिङ्गादिकं, तद्भक्षणे हि न तथाविधा तृप्तिर्विराधना च भूयसी २१, चलितरसं कुथितान्नं पर्युषितद्विदलपूपिकादि अनेकजन्तुसंसक्तत्वात्, उपलक्षणत्वात्पुष्पितौदनपक्वान्नादिविनष्टयातीतवस्त्वाद्यपि च, अथ पर्युषितद्विदलादौ कुथितत्वादिना जीवसंसक्तेर्गम्यत्वात् परिहार्यत्वमस्तु विनष्टयातीते तु कथं जीवसंसक्तिः कथमवगम्यते ?, उच्यते, शास्त्रप्रामाण्यात्, तथा चोक्तम्–"जइ मुग्गमासमाई विदलं कच्चमि गोरसे पडइ। ता तसजीवुप्पत्तिं भणंति दहिएवि दुदिणुवरि ॥ १ ॥" हारिभद्रदशवैकालिकवृत्तावपि–"रसजास्तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा भवन्ती"ति, श्रूयते च धनपालपण्डितस्य प्रतिबोधनार्थमागतेन तद्बन्धुना शोभनेन मुनिना विनष्टयातीते दध्यलक्तकपुम्भकेन जीवदर्शनं ततस्तत्प्रतिबोधभवनं च २२, निषिद्धं चाभक्ष्यं यथा पद्मपुराणेऽपि–"अभक्ष्यभक्षणाद्दोषात्कण्ठरोगः

प्रजापते" शान्तातपोक्तशास्त्रेऽपि–"अभक्ष्यभक्षणादेव, जायन्ते कृमयो हृदि।" इति द्वात्रिंशदभक्ष्यस्वरूपम्॥ अनन्तकायिका आर्यदेशप्रसिद्धा द्वात्रिंशत्, तथाहुः–"सव्वा य कंदजाई सूरणकंदो अ १ वज्जकंदो अ २। अल्लहलिद्दा य ३ तहा अल्लं ४ तह अल्लकच्चूरो ५॥१॥ सत्तावरी ६ विराली ७ कुआरि ८ तह थोहरी ९ गलोई अ १०। लसुणं ११ वंसकरिल्ला १२ गज्जर १३ लूणो अ १४ तह लोढा १५॥२॥ गिरिकण्णि १६ किसलपत्ता १७ खरिंसुआ १८ थेग १९ अल्लमुत्था य २०। तह लोणरुक्खछल्ली २१ खिल्लहडो २२ अमयवल्ली अ २३॥३॥ मूला २४ तह भूमिरुहा २५ विरुहा २६ तह ढक्कवत्थुलो पढमो २७। सूयरवल्लो अ २८ तहा पल्लंको २९ कोमलंबिलिआ ३०॥४॥ आलू ३१ तह पिंडालू ३२ हवंति एए अणंतनामेणं। अन्नमणंतं नेअं लक्खणजुत्तीइ समयाउ॥५॥" व्याख्या–सर्वैव कन्दजातिरनन्तकायिका, तत्र कांश्चित्कन्दान् व्यापियमाणत्वान्नामतो दर्शयति–सूरणकन्दः–अर्शोघ्नः कन्दविशेषः १ वज्रकन्दः २ आर्द्रहरिद्रा ३ आर्द्रकं शृङ्गवेरम् ४ आर्द्रकचूरकः ५ शतावरी ६ विरालिके वल्लीभेदौ ७ कुमारी–मांसलप्रणालाकारपत्रा ८ 'थोहरी' स्नुही तरुः ९ गडूची-वल्लीविशेषः १० लशुन-कन्दविशेषः ११ वंशाकरेल्लानि १२ गर्जरकाणि १३ लवणको–वनस्पतिविशेषो येन दग्धेन सर्जिका निष्पद्यते १४ लोढकः–पद्मिनीकन्दः १५ गिरिकर्णिका–वल्लीविशेषः १६ किशलयरूपाणि पत्राणि बीजस्योच्छूनावस्थालक्षणानि सर्वाण्यपि १७ खरिंशुकाः १८ थेगश्च कन्दभेदः १९ आर्द्रमुस्ता २० लवणापरपर्यायस्य भ्रमरनाम्नो वृक्षस्य छल्लि'–त्वग् न त्वन्येऽवयवाः २१ खिल्लुहडो–लोकप्रसिद्धः कन्दः २२ अमृतवल्ली-

वल्लीविशेषः २३ मूलकः प्रसिद्धः कन्दः, तस्य त्याज्यत्वं महाभारतादावप्युक्तम्-"रसोनं गृञ्जनं चैव, पलाण्डु-पिण्डमूलकम् । मत्स्यमांसं सुरा चैव, मूलकस्तु ततोऽधिकः ॥ १ ॥ पुत्रमांसं वरं भुक्तं, न तु मूलकभक्षणम् । भक्षणान्नरकं गच्छेद्वर्जनात्स्वर्गमाप्नुयात् ॥ २ ॥" २४, भूमिरुहाणि-छत्राकाराणि वर्षाकालभावीनि भूमिस्फोटकानीति प्रसिद्धानि २५, विरूढानि-अङ्कुरितानि द्विदलधान्यानि २६, ढक्कवास्तुलः-शाकविशेषः, स च प्रथमोद्गत एवानन्तकायिको न तु छिन्नप्ररूढः २७, शूकरसंज्ञितो वल्लः शूकरवल्लः स एवानन्तकायिको न तु धान्यवल्लः २८, पल्यङ्कः शाकभेदः २९, कोमलाम्लिका-अबद्धास्थिका चिञ्चिणिका ३०, आलुक ३१ पिण्डालुकौ कन्दभेदौ ३२, न चैत एवानन्तकायाः किन्तु "गूढसिरसंधिपव्वं समभंगमहीरगं च छिन्नरुहं । साहारणं सरीरं तव्विवरीअं च पत्तेअं ॥ १ ॥" इत्यादिसिद्धान्तोक्तलक्षणयुक्ता अन्येऽपि ज्ञेया हेयाश्च, यतः-"चत्वारो नरकद्वाराः, प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव, सन्धानानन्तकायिके ॥ १ ॥" अनन्तकायाद्यभक्ष्यं चाऽचित्तीकृतमपि परिहार्यम्, अधार्मिकादेः स्वयं परेणाचित्तीकृतस्य ग्रहणे को दोषः?, उच्यते, निःशूकतालौल्यवृद्ध्यादिः परम्परया सचित्तग्रहणप्रसक्त्यादिश्च, यथोक्तम्-"इक्केण कयमकज्जं करेइ तप्पच्चया पुणो अन्नो । सायाबहुलपरम्परवुच्छेओ संजमतवाणं ॥ १ ॥" इति द्वात्रिंशदनन्तकायस्वरूपम् ॥ एते चाभक्ष्यानन्तकायाः सूत्रगाथायां चशब्दसूचिता उपयोगित्वात्किञ्चिद्व्याख्याताः, सम्प्रति सूत्रगाथाऽक्षरतो व्याख्यायते-"पुप्फे य फले" त्ति वर्जनीयपुष्पादीनि बहुविधत्वात् सूत्रकारः साक्षादपि दर्शयति, तत्र पुष्पाणि मधूकात्थमूलादीनि फलानि

च प्रसाकुलानि तुच्छफलव्याख्यायां व्याख्यातानि, एषु मद्यमांसादिषु राजव्यापारादौ वर्त्तमानेन राजपारव-श्यादिना यत्किञ्चित्कृपणादि कृत तस्मिन्, अत एव राजव्यापारस्ताहग्धर्मार्जनाभावेन नरकस्यैव हेतुः, पठितं च–"नृपव्यापारपापेभ्यः, स्वीकृतं सुकृतं न यैः । तान् धूलिधावकेभ्योऽपि, मन्ये मूढतरान् नरान् ॥ १ ॥ अधि-काराभिस्त्रिभिर्मासैः, माठापत्यात्त्रिभिर्दिनैः । शीघ्रं नरकवाञ्छा चेद्दिनमेकं पुरोहितः ॥ २ ॥" एतैश्चानन्तरोदितै-र्मद्यादिभिरन्तर्भोगः सूचितो, बहिर्भोगस्त्वयं 'गंधमल्ले अ'त्ति गन्धवासाः कस्तूरीकर्पूरागुरुधूपादयश्च माल्यानि–पुष्पमालादयः, उपलक्षणत्वाद्रूपविभूषणाद्यशेषं भोग्यं च, एषु गन्धादिषु कृतप्रमाणेषु विषयभूतेषु प्रागव्या-ख्यातस्वरूपे उपभोगपरिभोगाख्ये द्वितीये गुणव्रतेऽनाभोगादिना यदतिक्रान्तं तन्निन्दामीति विंशतिगाथार्थः ॥ २० ॥ अमुष्मिन् व्रते विंशतिरतिचारास्तेषु पूर्वं भोगतः पञ्चातिचारान् प्रतिक्राम्यति—

सच्चित्ते १ पडिबद्धे २ अप्पोलि ३ दुप्पोलिअं अ आहारे ४ । तुच्छोसहिभक्खणया ५ पडिक्कमे देसिअं सव्वं २१

'सचित्ते' इति, कृतसचित्तपरिहारस्य कृतसचित्तपरिमाणस्य वा सचित्तमधिकसचित्तं वाऽनाभोगादिना खादतः सचित्ताहारः प्रथमोऽतिचारः १, एवं वृक्षात्तत्कालगृहीतं गुन्दादि राजादनादि वा सचित्तान्तर्बीजं पक्वं फलं कटाहमेव भक्षयिष्यामि पक्वत्वेन प्रासुकत्वाद्बीजं पुनरप्रासुकत्वात्त्यक्ष्यामीतिबुद्ध्या मुखे प्रक्षिपतः सचित्त-प्रतिबद्धाहारः २, अपक्वम्–अग्निनाऽसंस्कृतम् अपरिणतकणिक्कादिकं पिष्टमचित्तमित्यादि धिया भक्षयतोऽपक्वौ

पच्याहारः, अथ पिष्टं कियत्कालं मिश्रं कथं वाऽचित्तं स्यात् ?, उच्यते,चालितं पिष्टमन्तर्मुहूर्तात्परतोऽचित्तम्, अचालितं तु मिश्रं धान्यनखिकावयवानां परिणतत्वासम्भवात्, मिश्रत्वकालपरिमाणं चैवमाहुः–"पणदिण मीसो छूढो अचालिओ सावणे अ भद्दवए । चउ आसोए कत्तिअ मिगसिरपोसेसु तिण्णि दिणा ॥ १ ॥ पण पहर माह फग्गुणि पहरा चत्तारि चित्तवइसाहे । जिट्ठासाढे तिपहर अंतमुहुत्तं च चालिअओ ॥२॥" सचित्ततिलमिश्रयवधानादिरूपसचित्तमिश्राहारोऽप्यत्रातिचारेऽन्तर्भावनीयः ३, तथा दुष्पक्वस्य–अर्द्धस्विन्नस्य पृथुकचणकतन्दुलयवगोधूमस्थूलमण्डकफलादेः प्रासुकबुद्ध्या भक्षणं दुष्पक्वौषध्याहारः, इहलोकेऽप्यजीर्णादिप्रत्यपायकारी यावताऽंशेन च सचेतनस्तावता परलोकमप्युपहन्ति ४, तुच्छाः–तथाविधतृप्त्यजनकत्वादसारा ओषध्यः–कोमलमुद्गचपलकादिशिम्बिकास्ता भक्षयतस्तुच्छौषधिभक्षणता पञ्चमोऽतिचारः, आह ननु यद्येताः सचेतनास्तर्हि तद्भक्षणं प्रथमातिचारान्न विशिष्यते, अथाचित्तास्तर्हि को नामातिचारः ?, सत्यं, किन्तु योऽत्यन्तसावद्यभीरुतया सचित्तं प्रत्याख्याति तेनाचित्ता अप्येता न भक्षणीयाः, लौल्यमात्रनिमित्तत्वात्, न हि बहूनामपि तासां भक्षणे विशिष्य काऽपि तृप्तिरुपजायते, विराधना च महती, अत एव द्वाविंशत्यभक्ष्यमध्ये तुच्छफलशब्देनैता अपि प्रागभ्याख्यातास्तस्मादेतासां भक्षणे वस्तुतः एतद्व्रतविराधनारूपोऽतिचारः ५, एते पञ्चातिचाराः सचित्तपरिहारमाश्रित्यात्र प्रतिपादिताः, एवं रात्रिभोजनमद्यमांसादिपरिहारमचित्ताहारं मद्यादिपरिमाणनैयत्यं चाभिश्राप्यनाभोगातिक्रमादिना स्वधिया स्वयमभ्यूह्याः, उपलक्षणमात्रत्वादमीषाम्,एतद्विषये

'पडिक्कमे' इत्यादि प्राग्वदेकविंशगाथार्थः ॥ २१ ॥ अत्र व्रते भोगोपभोगोत्पादकानि प्रभूतसावद्यानि कर्मतोऽङ्गारकर्मादीनि पञ्चदश कर्मादानानि तीव्रकर्मबन्धनिबन्धनानि आद्येनातीचारभूतानि वर्ज्यानि अतस्तेष्वनाभोगादिना यदाचरितं तत्प्रतिक्रमणाय गाथाद्वयमाह—

इंगाली वणसाडी भाडी फोडी सुवज्जए कम्मं । वाणिज्जं चेव दंतलक्खरसकेसविसविसयं ॥२२॥

एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं । सरदहतलायसोसं असईपोसं च वज्जिज्जा ॥२३॥

कर्मशब्दः पूर्वार्द्धे प्रत्येकं योज्यः 'इंगाली'ति, 'एवं'मिति, अङ्गारकर्म काष्ठदाहेन त्वङ्गारकरणं, एवं भ्राष्ट्रकरणे इष्टकादिपाककुम्भकारायस्कारस्वर्णकारकृत्याद्यप्यङ्गारकर्म तेन यज्जीवनं तदङ्गारजीविका, एवमग्रेऽपि भाव्यम् १, छिन्नाच्छिन्नवनपत्रपुष्पफलकन्दमूलतृणकाष्ठकम्बावंशादिविक्रयो वनकर्त्तनादिकरणं च वनकर्म २, शकटशकटाङ्गघटनखेटनविक्रयादि शाकटिककर्म ३, शकटवृषभकरभमहिषखरवेसराश्वादेर्भाटकग्रहणेन भारवाहनं भाटककर्म ४, यवचणकगोधूमकरणादेः सक्तुदालिपिष्टतन्दुलकरणादि खातसरःकूपाद्यर्थं भूखननहलस्फोटनपाषाणघटनादि वा स्फोटककर्म, योगशास्त्रे तु कणदलनादिवनकर्मतया विवक्षितम् ५। अथोत्तरार्द्धेन पंच वाणिज्यान्याह—'वाणिज्ज–'मित्यादि, विषयशब्दः प्रत्येकं योज्यः, ततो दन्तविषयं वाणिज्यम्, एवं लाक्षादिष्वपि, तत्राकरे दन्तिदन्तघूकादिनखहंसादिरोमचर्मचमरशृङ्गशङ्खशुक्तिकपर्दकस्तूरीपोतीसकादित्रसाङ्गग्रहणं दन्तवाणिज्यं ६, लाक्षाधातकीनी

लीमनःशिलाहरितालवज्रलेपतुवरिपटवासटङ्कणसाबूक्षारादिविक्रयो लाक्षावाणिज्यं ७, मधुमद्यमांसम्रक्षणदुग्ध
दधिघृततैलादिविक्रयो रसवाणिज्यं ८, दासादिनृणां गवाश्वादितिरश्चां च विक्रयः केशवाणिज्यं ९, विषशस्त्र-
कुशीकुद्दालादिलोहहलादिविक्रयो विषवाणिज्यम् १०, एतत्पञ्चविधवाणिज्यं पूर्वोक्तं पञ्चप्रकारं च कर्म सुश्रा
वको वर्जयेदिति सम्प्रदायः । 'जंतपीलण'त्ति शिलोदूखलमुशलघरट्टारहट्टकूपादिविक्रयस्तिलेक्षुसर्षपैरण्डफला
तस्यादिपीडनदलनतैलविधानजलयन्त्रवाहनादिना यन्त्रपीडनकर्म, पोषणार्थे तु चरकादियन्त्रविक्रयो विषवा
णिज्यतयोक्तः ११, गवादिकम्बलशृङ्गपुच्छच्छेदनासावेधाङ्कनपण्डनत्वग्दाहादिउष्ट्रपृष्ठगालनादि च निर्लाञ्छन
कर्म १२, गहनदाहे सति भिल्लादयः सुखेन चरन्ति जीर्णतृणदाहे वा नवतृणाङ्कुरोद्भेदाद्गावश्चरन्ति यद्वा
दग्धे क्षेत्रे सस्यसम्पत्तिवृद्धिः स्यादित्यादिपुण्यबुद्ध्या कौतुकाद्वाऽरण्येऽग्निप्रज्वालनं दवदानं, श्रूयते हि मरण
काले भिल्लादयो भणन्ति–एतावन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति १३, सरोहृदतडागादि-
शोषः सारणीकर्षणेन तत्र धान्यादिवपनार्थं, तत्राखातं सरः खातं तु तडागमित्यनयोर्भेदः १४, विक्रयार्थं दुःशी-
लदासीनपुंसकादेः शुकसारिकामयूरमार्जारमर्कटकुर्कुटककुरङ्गशूकरादेश्च पोषोऽसतीपोषः, केचन हि दासीः
पोषयन्ति तत्सम्बन्धिनीं च भाटीं गृह्णन्ति यथा गोल्लदेशे १५, एषां चानाचरणीयत्वं बहुदोषत्वात् । तत्राङ्गार-
कर्मण्यग्नेः सर्वतोमुखधारत्वात् षण्णां जीवनिकायानां १ वनकर्मणि वनस्पतेस्तदाश्रितत्रसादेश्च २ शकटभाटक
कर्मणोर्भारवाहकवृषभादेर्मार्गस्थत्रसजीवानां च ३-४, स्फोटकर्मणि कणदलनादौ वनस्पतेर्भूखननादौ पृथ्व्या

उभयत्र तद्गतत्रसादेश्च महाविराधना ५, आकरे दन्तचमरीकेशादिग्रहणाद्वाणिज्ये प्राहकान् दृष्ट्वा लोमास्थुच्छ्राद्यपस्तत्कालमेव हस्तिचमर्यादिवधे प्रवर्त्तन्ते ६, लाक्षावाणिज्ये लाक्षाया मधुत्रसाकुलत्वात्त्रसस्य च रुधिरभ्रमकारित्वात् धातकीत्वक्पुष्पयोर्मद्याङ्गत्वात्तत्कल्कस्य च कृमिहेतुत्वात् गुलिकाया अनेकजन्तुघाताविनाभावित्वात् मनःशिलाहरितालयोर्लेपानां सम्पातिमप्राणिजन्तुघातकत्वात् तुवरिकायाः पृथ्वीत्वादिना पटवासस्य त्रसाकुलत्वात् टङ्कणक्षारसाधूक्षारादेर्बाह्यजीवविनाशनिमित्तत्वाच्च महानेव दोषः, लाक्षादेर्दुष्टत्वं मनुस्मृतावप्युक्तम्–" सद्यः पतति मांसेन, लाक्षया लवणेन च । त्र्यहेण शूद्रीभवति, ब्राह्मणः क्षीरविक्रयात् ॥ १ ॥" ७, रसवाणिज्ये मद्यादौ जन्तुघातोन्मत्तत्वाद्यनेकजन्तुसंमूर्च्छनादिदोषः, दुग्धादौ सम्पातिमजन्तुविराधना, दिनद्वयातीते दध्नि जन्तुसमूर्च्छनाऽपि प्रागुक्तयुक्त्या ८, केशवाणिज्ये द्विपदचतुष्पदानां नित्य पारवश्यवधबन्धक्षुत्पिपासापीडादि ९, विषवाणिज्ये शृङ्गिकावत्सनागादेर्हरितालसोमिलक्षारादेश्च विषस्य चक्रादीनां च जीवितघ्नत्व प्रतीतमेव, दृश्यन्ते हि जलार्द्रहरितालेन सहसैव विपद्यमाना मक्षिकादयः, सोमिलक्षारादिना तु भक्षितेन बालादयोऽपि, विषादिवाणिज्य परेऽपि निषेधयन्ति–"कन्याविक्रयिणश्चैव, रसविक्रयिणस्तथा । विषविक्रयिणश्चैव, नरा नरकगामिनः ॥ १ ॥" इति १०, यन्त्रपीडाकर्मण्यनेकत्रसवधोऽपि, तत एवोक्तम्– "खण्डनी पेषणी चुल्ली,जलकुम्भः प्रमार्जनी । पञ्च शूना गृहस्थस्य, पच्यते वास्तु वाह्यन् ॥१॥" तिलयन्त्रादेश्च महापातकहेतुत्व लौकिका अपि वर्णयन्ति–"दशशूनासमश्चक्री, दशचक्रिसमो ध्वजः । दशध्वजसमा वेश्या,

वृषावेश्यासमो नृपः ॥ १ ॥" इति ११, निर्लाञ्छनकर्मणि गवाश्वोष्ट्रादिपञ्चेन्द्रियषण्ढकर्वना १२, दवदानेऽनेकविधजीवकोटिवधः १३, सरोयरादिशोषे जलस्य तथा तद्गतानामनेकमत्स्यादीनां जलाश्रितानां च षण्णामपि जीवनिकायानां विनाशः १४, असतीपोषे दास्यादिक्रियमाणदुष्कृतैः पापवृद्धिः १५, एवंशुशब्दो सूत्रगाथाप्रान्ते योज्यो, तत एवंप्रकाराणि अन्यान्यपि खरकर्माणि निस्त्रिंशजनोचितानि कोट्टपालनगुप्तिपालनसीमपालनादीनि 'खु' निश्चयेन वर्जयेत्, भूयोवर्जनक्रियाऽभिधानमत्यादरख्यापनार्थम्, एषु वर्जनीयेषु यदनाभोगातिक्रमादिनाऽतिचरित तत्प्रतिक्रमामीत्यध्याहार्यम्, एतद्व्रतपालने सर्वाङ्गीणदिव्यभोगनीरोगतामीष्टसंयोगनरामरपरमपदादि फलम्, एतस्यानुपादाने विराधने वा घोररोगप्रियवियोगसमग्रभोगविप्रयोगमनानि चेति द्वाविंशत्रयोविंशगाथार्थः ॥ २२–२३ ॥ एतद्व्रताराधनविराधनयोर्मित्रपुत्रीभूत्स, तथेवम्—

सौवर्द्धिसंवर्द्धितनाककम्पा, यत्पाऽनुकम्पापरपौरलोका । अत्राहदेशोऽस्ति पुरी पुराणा, पुरः पुरः किङ्करयन्ति यस्याः ॥ १ ॥ प्राज्यप्रतापेन सहस्ररश्मिः, सहस्रशीर्षः क्षितिभारभृत्वे । तां पालयामास सहस्रवीर्यः, क्ष्माप सहस्राक्षसरक्षवीर्यः ॥ २ ॥ तस्य क्षितीन्द्रोर्बहुमानपात्रममात्यबुद्धिर्बहुबुद्धिमत्त्री । बभूव येनेप्सितसिद्धमर्थैर्मर्थैरमर्थीकृत इन्द्रमन्त्री ॥ ३ ॥ कदाचिदुर्वीवलये प्रजानामभाग्ययोगेन युगान्तकृत्सु । ववर्ष सोत्कर्षमपर्णाशीषिपेन्द्रवसीव तदिस्थान् ॥ ४ ॥ अनिष्टवृष्टेः किल सस्यसम्पत्काले करालेन जलेन तस्य । दवानलेनेव निदह्यते स्म, तृणावनीधान्यलतादयोऽपम् ॥ ५ ॥ पत्राणि वेदेषु विहङ्गमानां, पुष्पाणि केषांचन वृक्ष-

स्तु । फलानि शाखेषु च नन्वभूवस्तदा द्रुमाणां कथितुं यतोऽपि ॥ ६ ॥ जलाशयानां जलमप्यपेयमशेषमासी
द्विपमिश्रितं नु । तद्बुद्धितस्तेन जनः समग्रोऽप्यत्याकुलीभावमथापबुधैः ॥ ७ ॥ दुर्भिक्षकाले किल पत्रपुष्पफले
र्जलैश्चाखिलदेहभाजाम् । निर्वाहमाप्त हि मयेत्कथञ्चित्सदा तदप्याप सुदुर्घटत्वम् ॥ ८ ॥ महेभ्यगेहान्तरवर्त्ति
कूपीजलेन पहृर्थनयाऽल्पकेन । सुधाथवासेन तदा कथञ्चित्, केचित् कियन्त समय नयन्ति ॥ ९ ॥ तद्दुर्लभ
ये स्वलभन्त नाम्भः, पशुश्च तद्दुष्टजल तृषार्त्ताः । ते तत्क्षणोत्पन्नज्वरकण्ठकासश्वासभ्रमाद्यैर्मृतिमप्यवापुः ॥१०॥
निमित्तका दैवतसेवकाश्च, ज्योतिर्विदो मन्त्रविदोऽपि विप्रा । पृष्टा नृपाद्यैरवदत् सवन्वृष्टिः पुरः प्रावृषि
नास्तस्तु ॥ ११ ॥ किंकृत्यमूढा नृपमन्त्रिमुख्या, हाहामहारावसृजः प्रजाश्च । ततः परिक्षिप्तगलैकपाशा, इवा
भवन्नुज्झितजीविताशाः ॥ १२ ॥ उपप्लवैरित्यतुलैरनल्पैः, कल्पान्तकल्पे किल याति काले । मगेऽन्यदाऽऽस्थान
गतः क्षमाभृद्व्यज्ञप्यत प्राग् वनपालपुम्भिः ॥ १३ ॥ सर्वर्तुकैः पुष्पफलैर्दलैश्च, वन निशि प्रागखिलं सर्वतोऽद्य ।
अपल्पलीदाथ । तथा घपान्तः, करमचारोऽपि रवेर्मयेक्ष ॥ १४ ॥ एव चतुर्दिग्वनखण्डपालैः, क्षेत्राधिपालैरखि
लैश्च दृष्टैः । निपानपालैश्च जलप्रसत्त्याऽवर्द्धाप्यतोर्वीपतिरेककालम् ॥ १५ ॥ पुरान्तरग्रामसमागतैश्चाप्येव
जनैर्विज्ञपितः क्षितीन्द्रः । सविस्मयानन्दरसातिशेषमशेषलोकैः सहितोऽन्वमोमोत् ॥ १६ ॥ तदा तदात्वापस
रत्समग्ररोगा झटित्युज्झितजीविताशा । प्रजाः प्रजापालयुताः प्रमोदान्महोत्सवाद्वैतविधिं वितेनुः ॥ १७ ॥
तादृक्समृद्धेरवितर्कितायाः, सम्यग्निमित्तं न हि वेत्ति कश्चित् । ततः क्षितीशेन जनैश्च मेने, तस्यैव भाग्या

न्युदयोऽत्र हेतुः ॥ १८ ॥ तपस्विभिस्तु स्वतपःप्रभावः, सद्धार्मिकैर्धर्मविनिर्मितिश्च । ध्यानस्य च ध्याननिधैर्विधि-
धान, योगस्य योगीन्द्रवरैः प्रयोगः ॥ १९ ॥ समस्तशास्त्रे किल मान्त्रिकैश्च, सदैवतैर्दैवतवल्गितात च । यत्नैकवि
ज्ञैर्नियपक्षसृष्टिभिर्मप्रचारो प्रचारविज्ञैः ॥ २० ॥ त्रिभिर्विशेषकम् ॥ मिथ्याभिमानेषु कदर्थितेषु, सर्वेष्वपीत्थ
स्वमनोऽन्तरे च । ससंशयेष्वन्यदिने मुनीन्द्रस्तत्राययौ केवलसंविदाढ्यः ॥२१॥ राजा प्रजायुग् विधिवन्ननादि,
निर्माप निर्मोयमपृच्छदेनम् । स्वामिन्नसमाप्यतमे समृद्धिभावे मुधः सम्प्रति कोऽत्र हेतुः ? ॥ २२ ॥ गुरुर्जगो
या यद्बुद्धिमत्त्रीश्वरस्य पुत्री निपुणाऽस्ति जाता । तस्याः प्रभावो भुवनातिशायी, सर्वोऽप्ययं प्राग्भवपुण्यजन्मा
॥ २३ ॥ तस्याः प्राग्भवसम्बन्धश्चायम्–राजन् ! पुरा भद्रपुरे महेभ्यभद्रस्य भद्रावयितस्य पुत्री । आसीत्
सुभद्रेत्यभिधा प्रधाननिधानलक्ष्मीरिव माननीया ॥ २४ ॥ सा मातृपुत्रीत्युपलब्धजैनधर्माऽपि कर्मानुगमप्रमा-
दात् । आपात्यतो सौख्यमतुल्यमाधात्, सद्योऽत्यमेक विधुमण्डलीव ॥ २५ ॥ स्वैरप्रमा सर्वमभक्ष्यमेषा, पत्नादि
कन्यापि पर्यखादत् । पित्रादिभिर्भूरि निवारिता तु, रसोऽप्यहो । यद्रिरसस्य वृद्धिः ॥२६॥ अपथ्यमुन्मार्गगत
पितॄणां, दोपाय गोपस्य यथेह गावः । इत्येपकोतश्शृङ्खलतानिवृत्त्यै, न्यवारि पित्रा गृहनिर्गमादिः ॥ २७ ॥
तथाऽपि सा तद्व्यसनाभिभूता, प्रभूतमानाय्य परैः कथंचित् । अनन्तकायाद्यपि नत्यनक्ष्य, सचित्तमस्ति स्म
विवेकशून्या ॥ २८ ॥ धर्मिष्ठगेहे चपधर्मणोऽपि, धर्मिष्ठता स्यादतिशायिनीति । सा नैष्ठिकप्रथममहेभ्यसूनोर्द-
त्ताऽपि न स्वां प्रकृतिं व्यमुञ्चत् ॥२९॥ यतः–"आरमभूपतिरयं चिरन्तनं, पीतमोहमदिराविमोहितः । किङ्करस्य

मनसोऽपि किङ्करैरिन्द्रियैरहह किङ्करीकृतः ॥ ३० ॥" गुह न तिष्ठत्ययमित्यकृत्यं, तस्या पितुः स्म श्वशुरालयो
प्राक् । आसंस्ततोऽस्यां शिथिलादरास्ते, गुणैर्विना कः खलु मन्यते कैः ? ॥ ३१ ॥ यतः—"गौरवाय गुणा एव,
नतु ज्ञातेयडम्बरः । वानेय गृह्यते पुष्पमङ्गजस्त्यज्यते मलः ॥ ३२ ॥" पित्राऽथ सा श्रावकस्य कस्यचिद्वानीय
नीता सुगुरोः सकाशे । दाक्षिण्यलज्जादिवशादनन्तकायाद्यभक्ष्यस्य निषेधमाधात् ॥ ३३ ॥ अभिग्रहस्यैर्यकृते
नितान्तं, कृता प्रशंसा गुरुभिर्द्वयैश्च । कष्टं प्रकृष्टं सुनियन्त्रितेव, सा मन्यमाना गृहमाप पत्युः ॥ ३४ ॥ सुसं
स्कृतां काप्यथ कोमलाम्लिकामालोक्य दन्तोदकसंप्लवोत्कटा । दोषोऽत्र कः प्रासुकवस्तुनीतिगीराहारयन्तीं
निरभिग्रहेव सा ॥३५॥ अनन्तकायान्यपि खादति स्म सा, प्राक् प्रासुकान्येव शनैः २ पुनः । अप्रासुकान्यप्य-
हहो ! महीयसी, निःशूकता काऽप्यतिलौल्यसक्तेः ॥ ३६ ॥ यतः—"करोत्यादौ तावत्सघृणहृदयः किञ्चिदशु
भं, द्वितीयं सापेक्षो विमृशति च कार्यं च कुरुते । तृतीयं निःशङ्को विगतघृणमन्यत्प्रकुरुते, ततः पापाभ्यासा
त्सततमशुभेषु प्ररमते ॥ ३७॥" एष निजाभिग्रहकल्पभूरुहं, समूलमुन्मील्य पितुर्व्यलोल्यतः । प्राग्वत्प्रभूताऽ
खिलवस्तुभक्षणेऽप्यहो ! दुरन्ता रसना दुरात्मनाम् ॥ ३८ ॥ सा सर्वभक्ष्या भुवि राक्षसीव, ज्वालेव वायस्य
विसर्प्पिणी या । ततये न कापि चटत्प्रकर्पंसतर्पप्रीतिरहो ! भवस्य ॥ ३९ ॥ विशुद्धपक्षद्वितयाऽपि सा वृथो,
निर्धर्मनिःशूकमना पकीयितम् । दीपोद्भवा भव्यशरावसङ्गिनी, तदप्यजस्रं मलिनैव या मषी ॥ ४० ॥ यान्य
न्यदा सख पितुः पथि कश्चिद्वनान्तरज्ञातफलादनोद्यता । आस्वादिते सा सपदि द्विधा सुदुर्विपाककिंपाकफ-

लिर्व्यपद्यत ॥ ४१ ॥ कुर्यान्मुमाभिमहनिमह यः, प्रायः स तेनैव भवक्षयेऽपि । अनर्थभाक् स्यादिति किन्त्वम स्यफलावनावेव मृता मृत सा ॥ ४२ ॥ यो या यस स्याद्विषयः स तेन, विहन्यतेऽत्रापि न संशयोऽत्र । इतीव सा गृध्नुतयैव तस्मिन्, मये विपेदे नवयौवनाऽपि ॥ ४३ ॥ उत्पद्य चाद्ये नरके रसज्ञाऽस्योत्कर्तनोन्मर्दन दाहमुख्यैः । कदर्थितोऽमुष्य महातिमिस्रेऽप्येष मृताऽगान्नरके द्वितीये ॥ ४४ ॥ ततश्च विद्शूकररासभादिभवेषु भूयःस्वनुभूयते स । क्षुत्तृड्व्यथाऽत्यर्थकदर्थनाद्यैर्दुःखं तया दुर्विषहं चिराय ॥४५॥ तत स्तुता सा धनिमुख्य लक्ष्मीधरस्य लक्ष्मीपुरवासिनोऽभूत् । लक्ष्मीवतीकुक्षिभवा भवानीनाम्नी भवानीव सुरूपताद्यैः ॥ ४६ ॥ सा आतमात्राऽप्यतिमात्रकासश्वासादिकैः षोडशदुष्टरोगैः । निपीडिताऽनेकविधोपचारैरुल्लाघतां शापहतेव नाप ॥ ४७ ॥ षोडशरोगाश्चैवमुक्ताः-"कासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगदरे ६ । अरसा ७ अजी रए ८ दिट्ठी ९, पुट्ठिसूले १० मरोअए ११ ॥ ४८ ॥ कडू १२ जलोअरे १३ सीस १४, कसवेअण १५ कुट्ठए १६ । सोल एए महारोगा, आगमंमि वियाहिआ ॥ ४९ ॥ शृङ्गाररसाम्राज्यमयीमवस्थां, प्राप्ताऽपि नित्यामयतः प्रतप्ता । क्वापि विवाहसमुपाश्रय सा, यस्या च नस्या पतिनीरपृच्छत् ॥ ५० ॥ अस्त्यौषधं वः किमपीह तादृग्, व्याधिः सदोत्थोऽप्यपयाति येन । धर्माणि ताभिः सुतरां ततः साऽप्यस्यात्ता प्राह तदाऽर्थिता तत् ॥ ५१ ॥ ततोऽभ्यधुस्ता इह दुःसहानि, प्राग्दुष्पापद्रुफलान्यमूनि । क्षयाय तेषां समिधामिवाग्निः, सदौषधं श्रीजिनधर्म एव ॥ ५२ ॥ आराधिताशेषविशुद्धिमावत्स्वात्मकभावपि बोमथीति । अत्राप्यमुत्राखिलदुःखराशेरशोरिव

ध्वान्ततततेर्व्यपायः ॥ ५३ ॥ धिग्बुद्धिघृष्टया नियमस्य भङ्गमप्याचरन्ति द्रुतमेव मूढाः । परत्र तद्दुष्कृतदुर्विपाक,
दुरन्तमन्तर्नतु चिन्तयन्ति ॥ ५४ ॥ मक्षीयते तद्दुरितं न यावत्तावत्क्षयाऽपैति कथं तदुत्था ? । क्षयोऽस्य सत्त्व
र्मत एव धातस्तत्रैव यत्नोऽर्हति तस्यवेत्तुः ॥ ५५ ॥ प्राग् दुष्कृतं किन्तु कृतं मयैव, यद्बाधिता व्याधिभिरस्म्य
साध्यैः । तथेति पृष्टा अथ ता जगुः प्राग्भवांस्तदीयांश्रपरसंविदाभाः ॥ ५६ ॥ प्राग्नुः पुनस्ता व्यवहारिजाते !,
जाताऽसि तद्दुष्कृतभोगशेषात् । इहापि हा दुःसहदुःखखानिर्धिगस्तु जिह्वामजितां बुभुक्षीम् ॥ ५७ ॥ प्रसज्यते
यौवन एव जन्तो रेकैकरूपे विषये दृगादिः । लोलातिलोला तु वयस्त्रयेऽपि, रसे च वाक्ये च कृतप्रसक्तिः ॥ ५८ ॥
शूकलाश्च इव दुर्दमदुष्टैरिन्द्रियेषु रसनेन्द्रियमेव । उन्मदं यदखिलान्यपि तानि, प्रापयत्यधिकमुन्मदभावम्
॥ ५९ ॥ घ्राणानि दोषाणि बुभुक्षितायां, प्राणात्मिकायां तु बुभुक्षितानि । स्युर्यत्र चित्त करणानि योधैः, प्रथ
ततः सा रसनैव जेया ॥ ६० ॥ श्रुत्वेति जातिस्मृतितः प्रबुद्धा, शुद्धाशया सा गृहिधर्ममाप्य । भोगोपभोगेऽ-
खिलतत्क्रमेऽपि, तत्याज भोज्ये सकलं सचित्तम् ॥ ६१ ॥ अचित्तमप्योजस्भक्ष्यमेषा, भक्ष्यं च निःशेषमि-
मानि भुक्त्वा । पेयाऽथ शालिः कलमश्च मुद्गा, क्षोम्याक्यशाकं च गवाज्यतक्रे ॥ ६२ ॥ फलं च दुग्धामलकं च
पूगं, जलं त्रिदण्डोत्कलितं च साप्याः । प्रात्य दिने द्रव्यचतुष्कमेवेत्यपीति निर्वाहयति स्वधर्मम् ॥ ६३ ॥
युग्मम् ॥ सम्यग्दृशैकेन सुरेण साऽथ, प्राशस्यत स्वीकृतधर्मवार्ये । अश्रद्दधत् तत्तु परः सुरस्तां, परीक्षितुं धाम
जगाम तस्याः ॥ ६४ ॥ विदग्धवैदेशिकवैद्यरूपः, प्ररूपयामास च सानुकम्पः । छुम्यद्विपो व्याधिगणस्य वत्से !,

विच्छेत्तुमिच्छुर्यदि मूलतोऽस्य ॥ ६५ ॥ पीयूषवृक्षस्य फलं तदामीमास्वादयातः सकलामयघ्नम् । अनुष्ण सुस्वाद-
तम सुमनःपविश्रित वारि सुधानुकारि ॥ ६६ ॥ आभ्यामुभाभ्यां च रसायनाभ्यामियोग्रवेशैव भवेऽप्यमुष्मिन् ।
आमाविनामापि पुनर्भवेच, सर्वाङ्गभोगर्द्धिसुखाभिवृद्धिः ॥ ६७ ॥ इत्युक्तिमात्रात्पितृभ्रातृमाधाविकेषु मात्रा
भिषक्संभवेषु । जजल्प साऽजल्पत एव भैतत्, फलं जलं चाऽत्र भवेऽपि मे भोः ! ॥ ६८ ॥ आचष्ट वक्रोक्तिक
याऽथ वैद्यो, नन्वौषधार्थे किमकल्पनीयम् ? । महर्षयोऽप्यौषधमाश्रियन्तेऽन्यथा विभाव्य श्रमवार्धहानिम् ॥६९॥
विहस्य सा धर्मरहस्यवाचा, प्रोवाच वाचयमवत्सलत्वं । अधर्मजव्याधिविनाशनार्थमधन्यहेतुः खलु धर्म एव
॥ ७० ॥ सं बीजमूलं किल कः फलार्थी, विध्वंसयेद्दुर्मतिरल्पहेतोः ? । तस्माद्युगान्तेऽपि निषिद्धवस्त्वादान न
कुर्वे स्वमित्यवेहि ॥ ७१ ॥ सवैरिणीव स्वहितेऽपि मुग्धा, क्षुधा विदग्धात्मकमानिनी च । कदाग्रहग्राहगृहीत
चित्तोत्सर्गापवादावपि नैव वेत्ति ॥ ७२ ॥ यतः–"सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा । मुच्चइ
अइवायाओ पुणोवि सोही न याविरई ॥ ७३ ॥" एवंविधां व्याधिगणैर्गुणैरिव, भृतां प्रशास्ताङ्गकयष्टिमप्य
सूम् । याणी करिष्यत्यपि कः कथं नु वा, स्वजन्म निर्वाधमसत्यथाऽनया ? ॥७४॥ इत्यादि वैद्यस्वजनान्यलोका
नेकप्रकारोक्तिमहोर्मिमालाः । किञ्चिन्न दुर्भेदमिवोऽप्यभिन्दन्ममत्वटीं वज्रमयीमिवास्याः ॥ ७५ ॥ इत्थं दृढान्तः
करणत्वमस्या, जगच्चमत्कारकरं निरीक्ष्य । तुष्टः सुरः स्पष्टतया स्वरूपं, श्रिया प्रकाश्य प्रशशंस तां सः ॥७६॥
रोगान् समग्रानपहृत्य चास्याः, सर्वैश्चर्यैतत्साक्षितोऽसौ । रैरत्नवृष्टिप्रभृतीनि पञ्चाश्चर्याणि कृत्वा स्वपदं प्रपेदे

॥ ७७ ॥ निरभ्रनिष्पङ्कशरन्मृगाङ्क, इवोदकैः सा शुशुभे ततश्च । धर्मस्य माहात्म्यमहो ! महीयस्तत्कालमेवानु
भयमतीतम् ॥ ७८ ॥ तद्धर्ममाहात्म्यमवेक्ष्य साक्षाद्दक्षा अदक्षा अपि पौरलोकाः । आराधयन्ति स्म जिनेन्द्र
धर्मसुधैर्यतो दृष्टफलेऽलसः कः ? ॥ ७९ ॥ प्राणान्तिकात्यन्तिकसङ्कटेऽपि, नावृत्त सचित्तमियं कदाचित् । तैस्तै
र्गुणैः सा तदपि प्रतीता, सचित्तसध्री जगतोऽपि चित्रम् ॥ ८० ॥ सौभाग्यशोभाभवन भवानी, महेभ्यपुत्रेण
महेश्वरेण । सा स्वीकृता युक्तमिद च चित्र, चण्डीत्वमाधत्त कदा च नापि ॥ ८१ ॥ तस्यास्तु साङ्गत्यवशेन
सोऽपि, शिश्राय सुश्रावकधर्मसुधैः । तथा यथैकात्मजजन्मनोऽनु प्रपेदतुर्ब्रह्म भवावधि द्वौ ॥ ८२ ॥ योगेऽपि
भोगाङ्गसमप्रसक्तेर्निःसङ्गभावो भुवनाद्भुतस्तयोः । दिने दिनेऽवर्द्धत गर्द्धमुक्तयोस्तत्स्पर्द्धया वाम्नि महर्द्धयोऽपि
च ॥ ८३ ॥ क्षेत्रेषु सप्तस्वथ दुःस्थदीनादिकोपकारेऽप्यनिशं स्ववित्तम् । साऽयोजयन्निर्भरहर्षितैकचित्ता, चिराप्य
दुर्भिक्षभयाऽऽभयावौ ॥८४॥ यतः—"सत्सु कुसन्त्यधमे तुच्छाः, प्रसरन्ति महापगाः । ग्रीष्मे सरांसि शुष्यन्ति,
कामं वारिधिरेधते ॥ ८५ ॥" निर्वाह्य सद्धर्मभवाप्रभावा, तस्मिन् भवे सैव मृताऽच्युताह्वे । कल्पे सुसङ्गमम
धानुभूय, भूमीन्द्र ! मध्वीन्द्रकुलेऽवतीर्णा ॥ ८६ ॥ तस्याः प्रियोऽपि प्रियधर्मकर्मा, शुभाद्धर्मा विगलत्कुकर्मा ।
शर्मानुभूयाद्भुतमच्युतस्थ्युतः क्षितीश ! त्वमभून्महर्द्धिः ॥ ८७ ॥ प्राक् सर्वसचित्तरसादिदानाद्दानादिपुण्यैश्च
समृद्धिरेषा । आसीज्जिनस्येव जनिक्षणेऽस्या, यस्त्यज्यते प्राक् सुलभ पुरस्तात् ॥ ८८ ॥ अस्याः प्रभावात् परमा
समृद्धिरेव समप्राऽशिवनिर्गमश्च । आजीवितं संभविता प्रभूतैः, पुण्यैरसम्भाव्यमिहास्ति किं वा ? ॥ ८९ ॥

एवं वचः केवलिनो निशम्य, धात्रीपतिर्मेघमिव प्रजाश्च। संभावित स्वस्य शुभादिगर्वं, सर्वे त्यजन्ति स्म
फणीव दर्पम् ॥ ९० ॥ वहन्समान बहुमानमन्तस्ततः क्षितीशः स विवेश वेश्म। गत्वा च दृष्ट्वा जनतान्वितस्तां,
स्वगोत्रदेवीमिव मन्यते स्म ॥ ९१ ॥ निशम्य माहात्म्यमिद तदीय, देशान्तरस्था अपि भूमिपालाः। मूर्तिर्हि
तस्या इव पद्मदेव्याः, प्रपूज्य निन्युः स्वमुच समृद्धिम् ॥ ९२ ॥ सैव जगत्यामपि आगस्कसौभाग्यभाग्यादि
गुणैर्गरिष्ठा। अमोघवागेव बभूव बाल्यादपि स्वजिह्वाविनियमणात्साक्ष् ॥ ९३ ॥ जाते मृते ग्रामगते स्थिते सा,
घृते धृते शुभकृते हृते वा। सर्वत्र मौग्ध्यादपि यद्यपाऽख्यात्सथैव तज्ज्ञानिवचोवदासीत् ॥९४॥ फलाम्बुःपष्ठि
मयो चतुर्दा, पुष्टीस्तपाऽशुष्यत लीलयैव। सा साक्ष्यमात्रेण गुरोर्गरीयःप्राक्पुण्ययोगास्किमु दुर्लभं वा!
॥ ९५ ॥ तत्रान्यदाऽऽगात् किल वादिवृन्दवृन्दारकः कश्चन काकपूर्वः। सौर्येन सर्वत्र जयी प्रसर्प्पदर्पोत्कटः
प्रौढपरिच्छदाढ्य ॥९६॥ राज्ञः समागत्य स चेत्यवादीद्वावी शरत्सारिवदभिनादी। राज्येऽस्ति राजस्तव कोऽपि
वादी, कुर्यान्मया यः सह वादकेलिम्? ॥ ९७ ॥ यद्वादिकेतौ मयि वादवृन्ददुर्भिक्षहेतौ भुवनेऽभ्युदीते। संभा
व्यतेऽनुस्रव एव तेषां, तीक्ष्णत्विषीव ग्रहमण्डलानाम् ॥९८॥ मातस्त्वया भोः! प्रतिवादिदर्पमाकार्य वाद किल
कारयिष्ये। प्राञ्जेन राज्ञेति विसृज्य वादिदुर्यं रहः प्रोच्यत मन्त्रिधुर्यैः ॥ ९९ ॥ कोऽप्यत्र विद्याविदुरः प्रवादी,
वादाय सज्जीकरणीय एव। नो चेज्जगत्यामपि नोऽपकीर्त्तेर्बिम्बिडमाडम्बर एव जातः ॥ १०० ॥ ततोऽतिचि
न्तातुरतानितान्ततान्त समन्तात् बहुदुःखमानाः। अन्वेषणेऽपि प्रतिवादिनास्तेः, किंकृत्यमूढो निशि हर्म्यमा-

णत् ॥ १ ॥ त मादृशों वीक्ष्य विलक्ष्यमाख्यदक्षाशया सा तनयाऽथ तात ! । यथार्थनाम्नोऽपि कुतस्तवास्य,
श्वासाहतावर्शनिदर्शनीयम् ? ॥ २ ॥ तेनापि तस्याः सफले स्वरूपे, प्रस्तपिते सा मुखमोटनेन । प्रारूपयत्तस्य
नृकीटकस्य, पराजये काऽस्तु परास्तचिन्ता ? ॥३॥ मकपाह सर्वत्र जयी स धूर्त्तो, वैदग्ध्यतस्तेन सचिन्तता मे ।
स्मितानना साह च साऽपि यद्यः !, पर्याप्तमेतत्परिचिन्तनेन ॥ ४ ॥ तत्रैत्रपत्र हि मयाऽऽसमेवेत्यस्यां मदीयोम
हिमाङ्गुलायाम् । सुसम्मतं सर्वमपीत्यमात्योऽनुचिन्त्य निश्चिन्ततया निवृत्तो ॥५॥ प्रातः पुरस्कृत्य सुतां सवित्रा,
प्रभामियोर्वीशसमाममाजि । उक्तं सुतोक्तं च ततः क्षितीशाहूतः समेयाय स धाविधूर्त्तः ॥ ६ ॥ दृष्ट्वा पदे मां
प्रतिवादिनमाचशां सृजन् विस्मयवानुवाच । चषोऽपि किञ्चित्रहि विक्रमेत, किं केशरी बालमृगीं जिगीषुः ॥७॥
सर्वेऽचपो कौतुकिपूत्सुकेषु सा, साक्षेपमाक्षेपमकृत त प्रति । वादीन्द्ररीत्या वचनैः सुसंस्कृतैर्द्विधाऽप्यपो धूर्त्त
तयाऽभ्यधत्त सा ॥ ८ ॥ अमात्यशक्तेस्त्वपि बालिकाया, न सक्षरः सद्गतिमग्रहीत् । किञ्चित्पुनः प्रश्नततुसरा
विकेली विधेया सह बालयाऽपि ॥९॥ इत्युक्तिपूर्वं स सगर्वमाख्यदक्षे ! समाख्याहि समीक्ष्य मह्यम् । न्यक्षाऽ
न्यक्षमाश्रनु मक्षिकांघ्रियाताम्रिलोकी कथमाप कम्पम् ? ॥ १० ॥ विहस्य सा प्राह सुभिक्षिचित्रन्यस्ता पयोऽन्तः
प्रतिबिम्बिता सा । स्वचित्तवत्सम्प्रति मत्प्रकृताक्षेपावकम्पिष्ट ततोऽपि युक्तम् ॥ ११ ॥ चमत्कृतोऽप्यन्तरतीव
दुर्घटामयो समस्यां पुनरेष पृष्टवान् । कोणे तिलस्योष्ट्रमसूत कीटिका, सा प्राह सत्य यदि मां विजेष्यसे ॥ १२ ॥
पुनः स प्रश्नान्तरमकरोत्—स्त्रीयुग्मनरयुग्मोत्थः, कृष्णोऽन्तर्बहिरुज्ज्वलः । वेषनामापि नो वेद, सर्वनियोंत्सा

पकः ॥ १ ॥ समुद्रोऽपि जलाद्रीभाग्, अकमोऽपि पशुभ्रमी । सर्वभाष्यपि मौनी च, साक्षरोऽपि जडश्च कः ? ॥ २ ॥ युग्मम् ॥ कन्ययोक्त लेखा । पुनः स एव पपच्छ–नरश्रीपश्चकोत्पन्ना, प्रवृत्ता गाढपान्थकृत् । देहे लग्नाऽपि दुःप्राकृत्, का नु दृष्टाऽपि वैरकृत् ? ॥ ३ ॥ तयोक्तमिय तवैवार्हेति मिथ्याभिमानित्वात्, ततः का नामा स्यार्हेति ज्ञातुमुत्सुके समालोके तयोक्त चपेटेति, ततः सर्वेऽपि हास्यं नाटयन्ति, अथ समर्थेयावीन्द्ररीत्या त प्रस्याह सर्वाङ्गनिपुणा निपुणा–हंहो ! मया प्रश्ने कृते तन्मूकास्मतया क तव पाण्डित्यावकाशोऽपीति पृच्छ मां पुनर्यथेच्छ, ततः सोऽप्युर्वीविपापोतिविपममप्रश्नयत्–"सुअणा १ पवरतुरगा २ सारहिणो ३ नाणिणो अ ४ पाइयरा ५ । सूआरा ६ जूआरा ७ गणिआ ८ वरगायणा ९ विप्पा १० ॥१॥ वणिवरकुविंदमवणा ११ कणा सुमि-यसंमि १२ गिम्हि जलहितडा १३ । घुसा १४ वुसयसत्ता १५ धम्मिअचित्ता य धम्ममि १६ ॥२॥ बेअम्बिक अ १७ दपाल् १८ वेला अमुद्दा १९ पवो २० महासुहडो २१ । असई २२ सुतन्तुवाओ २३ महवाओ २४ पाउसि जवासो ॥ २५ ॥ ३ ॥ मज्जवसणी अ २६ अंतिमजलहिठिई २७ मच्छसंकुलतडागा २८ । अणुकूलपवणपोआ २९ अयपालगिहा य ३० जलहिमुहा ३१ ॥ ४ ॥ परपत्थणापरमणा ३२ निच्चवरिहा ३३ महासमुद्दा य ३४ । हत्थाइगा य ३५ वहगा ३६ कुमारा ३७ गिरिणई ३८ मरुम् ३९ ॥ ५ ॥ कम्हारमही ४० सिद्धा ४१ महदुमा ४२ निवठिई ४३ सयपई अ ४४ । भेरीओ ४५ फलिअसाली ४६ मंतिवरा ४७ घुत्तमित्ती अ ४८ ॥ ६ ॥ तिपक्खमनरगा ४९ निवकमगा य ५० रापा य ५१ जायगा ५२ सुगिहा ५३ । सुहडा कुविआ ५४ तिसि

आ ५५ वणउद्देसा य केरिसया ५६ ॥ ७ ॥ पागयभासाइ इहं घणणवउक्षेण येथ पइपसिण। पच्चुत्तरं पयच्छसु जइ अइछेयत्तणं वहसि ॥ ८ ॥" ईपद्विसृश्य तयोक्तं–'परवाया' इति, तत्र सुजनाः परवाचः प्राणान्तेऽप्यन्यथाऽकरणात् प्रकृष्टगिर इत्यर्थः १, प्रवराश्वाः–परवाजाः प्रकृष्टवेगाः 'कगचजतदपयवां प्रायो लुगिति (श्रीसिद्ध० अ० ८ पा० १ सू. १७७) जलुक्, 'अवर्णो यश्रुति' (श्रीसिद्ध० अ० ८ पा० १ सू. १८०) रित्यवर्णस्य यः २, सारथयः प्रवाजाः–प्रकृष्टरवेण आजः–क्षेपः, प्रेरणमर्थाद् नृपयोर्येषां ३, ज्ञानिनः परावायाः–अवायो–निश्चयः, 'दीर्घह्रस्वौ मिथो वृत्तौ' (श्रीसिद्ध० अ० ८ पा० १ सू. ४) वित्ति ह्रस्वः ४, वादिवराः परघावाः ५, सूपकाराः परपाकाः 'पो व' (श्रीसिद्ध० अ०८ पा० १ सू. २३१) इति पस्य वः ६, द्यूतकाराः परपाताः, पाशकपातनादि ७ गणिकाः परव्याजा व्याजः–कपटं ८, वरगायनाः–भारवायाः प्रकृष्ट आरवस्यायो–विस्तारो येषां ९, विप्राः परव्यावाः परं–श्रेष्ठं विशेषेणावन्तीति 'कर्मणोऽण्' (श्रीसिद्ध० अ० ५ पा० १ सू. ७२) १०, धनिवरकुविन्दायासाः–परावाया, आवायः–कुविन्दशाला ११, सुभिक्षे कणाः परव्राताः–प्रकृष्टसमूहाः १२, ग्रीष्मजलधिसदाः परवाताः, वातो–वायुः १३, धूर्त्ताः परव्यावाः 'व्यचन् व्याजीकरणे' व्यचनं व्यावो–वञ्चनं १४, दुर्नयसत्त्वाः परापायाः, अपायोऽनर्थः १५, धार्मिकचित्ता धर्मे परयावाः 'यव् स्थैर्ये' प्रकृष्टस्थैर्याः १६, वेदविदः परवाका वाक्–ऋगयजुःसमूहात्मकं वाक्यं १७, दयालुः परपाता, परान् पातीति शीलार्थे तृन् १८, अशुभवेला परपाता, पातः क्रान्तिसाम्यादिः १९, पटः परव्याता 'व्येंग् संवरणे' परं व्ययति–आच्छा

वयतीति तन् २०, महासुभटः परपायाः, पररक्षकशक्ताः २१, असती परप्यागाः, प्रकृष्टविख्यापराधाः २२, सुतन्तुवायः परयाता 'वेञ् तन्तुसन्ताने' प्रकृष्ट वयतीति तन् २३, महापाता 'यांक गतौ' तन् २४, माशूपि यपासः परपासा 'पै शोषणे' तन् २५, मद्यव्यसनी-परपाता, प्रकृष्ट पिबतीति तन् २६, अन्याङ्घिस्थितिः परव्यापा, प्रकृष्टविस्तारा २७, मत्स्यसङ्कुलतडागाः परवाकाः, बकसमूहो वाकम् २८, अनुकूलपवनाः पोताः परव्यायाः 'व्यपी गतौ' प्रकृष्टगमनाः २९, अजापालगृहाः-प्ररपाजाः प्ररपन्तीत्यपि प्ररपा अजा यत्र ३०, अभिमुखाः परावाया प्रकृष्टः अपामायो-लाभो यत्र ३१, परमार्थनापरमनसः परव्यजाः, परेषु विशेषेणाजो-गतिर्येषां ३२, निस्वरिक्ताः परापायाः, पर-दूरमपगतमयो-भाग्य येभ्यः ३३, महाऽभयाः परापायाः-परा-मृशायें परापा-मृशापां आयो येषु ३४, हास्तिकाः परवापाः, प्रकृष्टोसयः ३५, पचकाः-परपापाः ३६, कुम्भकाराः परापाका, आपाको-मृद्भाण्डपाकस्थानं ३७, गिरिनदी-प्ररवाप् 'रुङ् शब्दे' अपि प्ररवा आपो यत्र ३८, मरुभूः परापाऽगा दूरमपगतवृक्षा ३९, काश्मीरमही परवाकै, वाक्-सरस्वती ४०, सिद्धाः परापाकाः प्रकृष्टम पगतमर्क-अर्घ येभ्य ४१, महाद्रुमाः-परपावाः, पावा-मूलानि ४२, नृपस्थितिः परवाक्-परान् शत्रून् वाज ति-अवक्षिपतीति क्विप् ४३, शतपदी-परपाद् चतुस्त्वात्प्रकृष्टाङ्घ्रिः ४४, मेघैः परव्यावाः 'रुङ् शब्दे' युवर्णे (श्रीसिद्ध० अ० ५ पा० ३ सू २८) इत्यलि भवाः-शब्दः परान्-शब्दान् व्यपति-आच्छादयतीत्यातो ड (श्री-सिद्ध० अ० ५ पा० १ सू. ७६) इति डे परव्योऽवो यासां ४५, फलितशालयः-परवापाः वपाः-शुकास्तस्स

मूढो वाचम् ४६, मन्त्रिवराः परावापाः, आवापोऽरिचिन्तन ४७, धूर्तमैत्री परापाता, आपातस्तत्कालः ४८, श्रयः प्रथमनरकाः परापाकाः, परेभ्यः–परमाधार्मिकेभ्य आप्यत इति परापमर्क–दुःखं येषु ४९, नृपकन्याः–परमायाः 'मींञ् वरणे' प्रकृष्टो मायो यासां ५०, राजानः–परपायाः, परः पायो–रक्षा येषाम् ५१, याचकाः परव्याताः 'अत सातत्यगमने' अतनम् आतः परेषु विशेषेणातो येषां ५२, सुयशः परव्यायाः, परेभ्यो विशिष्टा आया–ध्वजधूमाद्यो येषु ५३, कुपिताः सुभटाः परावापाः, परे–शत्रावधापः–प्राप्तिर्येषां ५४, सुपिताः पर–केवल पिपन्तीति परमते तन्व्यधीति णे परपायाः ५५, वनोद्देशाः परव्यायाः प्रकृष्टो वीनामायः–आगमन येषु ५६, वाजः पक्षमुनिनिस्वनेष्वपि वाजं सर्पिर्वारियज्ञाम्नेषु, पाकः शिशुवैल्ययोरपि पततीति वा स्वलादीति (श्री सिद्ध० ५–१–६२) णे पातः पततीत्यपि पतः–पक्षी तत्समूहः पातं व्याजोऽपदेशोऽपि आगोऽघेऽपि "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे" उप्यतेऽस्मिन्निति वापः क्षेत्रेऽपि, पापः–पापिष्ठेऽपि, अगः–शैलसरीसृपार्केष्वपि पाशोऽशुतुपांशांह्रिपर्यन्ताग्निपूजास्वपि, आवापः–पातमेवालवालप्रक्षेपभाण्डपवनवलयेष्वपि, आपातः–पातेऽपि पको रक्षोभेदश्रीदशिवमल्लीष्वपि, 'पदं स्थाने विभक्त्यन्ते, शब्दे वाक्यैकवस्तुनोः। त्राणे पादे पाद चिह्ने, व्यवसायप्रवेशयोः ॥ १ ॥" मङ्गमते पदं चरणन्यासाक्षचिह्नयोरपि, वचा औषधिशारकयोः, वपा विव रमेदसोः, व्रजोऽध्वगोष्ठसङ्घेषु, व्यजा ऊपाकर्षणाय रज्जुयन्त्रघट्यादिनिक्षेपमार्गे प्रेरणदण्डे च 'वज व्रजण् मार्गण् संस्कारगत्योः' मार्गण् संस्कारेऽपीत्यन्ये, एतयोरपि वजः व्रज , वदपचादिभ्योऽपि वदः पच इत्यादि २७,

पकारादीनां घता(पवा)दीनां च यथायोगं समूहाण्यपि पाकं पाकमित्यादि, एव १४९, तथा 'पां पैं उवेंग् व्येंग् वेंग् पव् व्यरूपायां याचि' कण्ठमते पव् स्येर्ये अष रक्षणादि १९ अर्थेषु,'अक अग कुटिलगतौ' 'वज व्रज अयि वयि पयि पवि च गतौ' 'वांक्ष गतिगन्धनयोः' 'वीङ् प्रजनकान्त्यसनखादनेषु' अन्ये असनस्थानेऽशनमाहुः, 'पीङ् पाने मीङ् मरणे पतण् गतौ वा' एषां घञि पायः वायः इत्यादि ४४, 'ई इङ् गतौ यातण् गतिसुखासेवनयोः सुखासेवनयोरि त्येके' एषां 'युवर्णस्याल्' अयः यातः 'वषण् वदिण् भाषणे' संदेशने इत्येके 'भाषण् लम्भने' एषां युजादित्वा णिजभावपक्षे घञि वाकादि 'व्ययण् विससमुत्सर्गे' गतावित्येके, पविण् गतौ, अनयोर्णिजनित्यत्वेऽनदन्त- त्वेन घञि व्यायादि १४, 'मृगक्ष वक्ष (भाषणे)' वक्तीतिशीलः किपि वाक् २ 'ओवे वांक्ष गतिगन्धने' तृनि वाता २ पात्याधात्वन्तससकारानव्ययीति णे पायादि ७ 'अज गतौ' अव् अत् आप् अक अग् णिचोऽनित्यत्वे वा ण, पर्यां किपि अयाज इत्यादि १०, वेंग् वे परयाः १९ अर्थेषवधातोरपि अयः परश्वासावयश्च परायः, परं पिप तीति किपि परपाः, एव पात्याद्यावन्तैरपि भमे आयादि योज्यम् २८, अवृजजांजादिभ्योऽयाऽवोऽवाऽविअजा- तादि (?)२९,आइपूर्वपात्यादिषवपचादिसकर्मधातुभ्यः कर्मणोऽणि(श्रीसिद्ध० ५-१-७२)त्यणि परवायाः परवावाः परपाचा इत्यादि ५९, पूर्वोक्तधातूनां यथामास णिचि शेषाणां तु सर्वेषां णिणि किपि पात् वात् इत्यादि, पाय वाप इत्यादि ७८ एव ११९, पथामापष्टे इत्याद्यर्थे णिजि किपि पुनः ११९ एव ७२२ प्रश्नोत्तराण्यत्र, प्रकर्षेण राजत इति कश्चिद् भरः, अनेनापि सर्वरूपाणि रूपाष्टकवर्जं स्युः, तथा च १४११, पूर्वोत्तरपदयोर्मिथो यथाऽर्ह

परावर्ते विशेषलक्षणे च न सक्षमा, एवं नवनवप्रकारप्रश्नोत्तरैः सर्वेषामपारं चमत्कारं कृत्वा वादिनस्तिरस्कारं कर्तुमना मनाग् विहस्य सा तं प्रत्याह—भो वादीन्द्र! यदि मदुक्तप्रश्नस्यैकस्याप्युत्तरं चिरेणापि दास्यसि तदाऽपि त्वयैव जितमित्युक्तिपूर्वं सा लीलावती जातिसुलभलीलयाऽनतिविषममेव प्रश्नयामास—"चित्रमत्र पयः पेया, एव व्यञ्जनवर्जिताः। समीक्ष्यन्ते जनैर्नित्यमपि वर्गत्रयार्थिभिः ॥ १ ॥" भो वादिन्! कथयास्य श्लोकस्य को भावार्थः?, अत्र षण्मास्यवधिः, सोऽपि पराजितमानी तदानीमतिमतिमोक्षमात्मूर्ध्ना विमृशन्नप्यभव्य इव सम्यग्भावं यावन्न लभते तावत् परिज्ञानायास्युत्सुकैर्नृपादिकैरुक्तं—कन्ये! व्यक्तं त्वमेव कथयेति, तत स्तया प्रोक्तं—पयःपेयाशब्दस्य व्यञ्जनवर्जितत्वे आया इति स्यात्, अत्र विसर्गाणामपि व्यञ्जनत्वं ज्ञेयं, 'कादिर्व्यंञ्जनं' ( श्रीसिद्ध० १-१-१० )मित्यत्र कस्यादिः कादिरित्यपि व्याख्यानात्, ततोऽतिविषादिनं तं वादिनं सा पुनः प्रत्यवादीत्—वादिन्! अथापि यद्येकं बुद्धिविषयमपि प्रश्नं प्रत्युत्तरयसि तदाऽपि त्वया न पराजितं, प्रश्नश्चायम्—एकत्र पुरे राज्ञः पुत्री सर्वाङ्गीणाद्भुतगुणा केनापि विद्याभृताऽपहृता, यः कन्यामानयति तस्यैव सा मया दत्तेति राज्ञा पटहवादने नैमित्तिकेनोक्तम्—अहं तयोः स्थानं जाने परं स्वे गन्तुं न शक्नोमि, रथकारेण नभोगामी रथः कृतः, सहस्रयोधी युद्धाय वाक्यधाते सद्यःसंरोहणाय वैद्यश्च सज्जीभूतो, चतुर्भिः संभूय गत्वा कन्या प्रत्यानिन्ये, ततस्तामुद्वोढुं चत्वारो विवदन्ते, परिणीता स्वेकेनैव सा, उक्तञ्च—"नेमित्ती १ रहगारो २ सहस्सजोही ३ तहेव विज्जो अ ४। दिन्ना चउण्ह कण्णा परिणीआ नवरमिक्केण ॥ १ ॥" सा केन कथं वा परि-

णिन्ये ?, वादिन् ! यद् यदि विदग्धंमन्योऽसि चतुरविचारेणापि, तद्वेद्मि नि वादिनि नरेशादेशान्मन्त्रिपुत्र्येव
माह—राजन् ! तया राजपुत्र्या गूढाभिप्रायया चतुर्णां विवादपदानां स्वयमित्युक्तं—यो मया सहाग्नौ प्रवेक्ष्यति स
एव मे वरः, ततस्त्रयो मौनाः स्थिताः, नैमित्तिकस्तु निमित्तबलादुदयमपायं जानन् कन्यया सह चितायां प्रविष्टः
पौरैर्वार्यमाणोऽपि, यावच्च चितायामग्निरुद्दीपितस्तावत्तौ प्राक्कृतसुरङ्गया निर्गतौ सोत्सवं परिणीतौ च, एष तुर्यो
दिन तिरस्कृत्याऽशुष्कोत्सवैः सा सर्वैः श्लाघ्यमाना स्वगृहं प्राप्ता, अन्येद्युरन्यः कश्चिद्धूर्तः सकृत्श्रुतधरः सम-
र्पितस्वर्णकन्दुकधरः पुरान्तः प्राप्तः, स प्रोचे—यो ममापूर्वं श्रावयति तस्मै कन्दुकं ददामीति, निपुणयोक्तं—म
त्पित्रा त्वत्पार्श्वे धनकोटी न्यासीकृतेति यदि श्रुतं तदा ददतां नो चेदेनं कन्दुकं देहीतिबुद्ध्या स जिग्ये
तारक कन्दुकश्चोपार्जितः, एवमनेकधा स्वबुद्धिकौशलं दर्शयन्ती सरस्वती सा कन्या कस्य न विस्मयरसार्द्रतम-
तनिष्ट ?, क्रमाच्च तारुण्यरसोद्गमेन, वल्लीव दिव्या कुसुमोद्गमेन । विभूषिता सा शुशुभे त्रिलोकीजैत्र सुमन्त्रा
स्त्रमिव स्मरस्य ॥ १ ॥ विश्वत्रयेऽप्यद्भुतभाग्यलक्ष्मीं, लक्ष्मीमिवोद्वक्ष्यति यः किलैताम् । भाव्येष विश्वम्भरि
षत् स विश्वविश्वेश्वरः श्रागिति चिन्तनोत्कः ॥ २ ॥ यद्गीश्वरस्तां स्वयमेव मन्त्रीश्वर याचते यच्चिन्तयाऽऽ-
र्तम् । वहूपरोधेन विशिष्टवस्तुन्यहो महान्तोऽपि हि सानुबन्धाः ॥ ३ ॥ युग्मम् ॥ राजा स्वयं याचत इत्यमन्दा
नन्दाद्ददाति स ततः सुतां ताम् । तस्मै सुतं मन्त्रिपतिः सुपात्रे, प्राप्ते विलम्बोऽर्हति नैव दातुः ॥ ४ ॥ नाथः
पृथिव्याः पृथुपर्वपूर्वमपूर्वमोदादुदुवाह चैताम् । वाचां शचीवल्लभवत्तमोऽस्याः, पट्टाभिषेकं निरमीमपच्च ॥ ५ ॥

तस्याः प्रभावात् प्रभुरेष पृथ्व्याः, पृथ्वीभुजोऽन्यानखिलानपि द्राक् । वशीकरोति स्म वशी सुखेन, दुष्टेन्द्रिया-
णीव भवी चिरस्था ॥ ६ ॥ तदा समग्राङ्गसमृद्धिसौख्यैः, स्वपुण्यवत्सुन्यभिधेयशून्याः । दुर्भिक्षदारिद्र्यकुरीति-
नीतिदुर्व्याधिपापाद्यभिधा बभूवुः ॥ ७ ॥ नृपक्रियाभक्तियुतस्य चैव, साम्राज्यलक्ष्मीः सकलेऽपि विश्वे । एका-
तपत्राऽभवदुत्तमश्रीयोगस्य माहात्म्यमहो ! महीयः ॥ ८ ॥ यद्वा कपालीह महेश्वरत्वं, जनार्दनो वा पुरुषोत्त
मत्वम् । सुरालयेशस्त्रिदशेशतां च, लेभे पुराऽप्युत्तमदारलाभात् ॥ ९ ॥ ईदृग्विधप्रौढिमसङ्गमेऽपि सा, स्त्रीजा
तिसुभावमपीयवर्त्यहो ! । नैवाभिमानं भजति स्म जातुचित्साकण्ठपूर्णं हि झलज्झलायते ॥ १० ॥ सा प्रत्युत
ध्यातवती प्रभावो, ममात्र कः ? प्राक् सुकृतस्य किन्तु । तदेव कुर्वे तदिहापि येनोत्तरोत्तराः स्युर्मम सम्पदो
ऽपि ॥ ११ ॥ आर्यास्तु पर्यन्ति विचार्य पूर्वमभ्यस्तमाराधयति स्म सम्यक् । भोगोपभोगव्रतमेव पूर्वा, हृदेव
निर्वाहयितुं प्रतिज्ञाम् ॥ १२ ॥ जिह्वेन्द्रियं यद्यपि दुर्जयं नृणां, विशिष्य च प्रौढिविशेषशालिनाम् । सैकाग्रचि
सैव तथाऽपि सद्व्रते, फलेऽनुभूतेऽङ्कुसमत्र वा किमु ? ॥ १३ ॥ तद्वाक्यतः क्ष्मापतिरन्यलोकोऽप्येतद्व्रतं स्वीकृत
वान् यथेष्टम् । पुमांश्च धर्मश्च महद्भिरेवाहतौ हि साम्राज्यपदं प्रयातः ॥१४॥ यो येन नीतः परमां समृद्धिमारा
धनीयो ह्यमुना स एव । तत्किं व्रतं सक्षममेव सोऽपि, भावीभूतत् काऽपि कृतघ्नताऽहो ! ॥ १५ ॥ चिरं चरित्वेति
गृहस्थधर्मं, सा प्राज्यसाम्राज्यसुखाद्भयेऽपि । निष्क्रम्य जिह्वाविजयेन सारैः, सिद्धा तपोभिः क्षितिपेन सार्द्धम्

॥ १६ ॥ प्राग्भवानुगतमभिपुत्रिकाभिधकारिचरिताद्वितीरितात् । भो ! विभाव्य विपुल क्रियाफलं, सप्तमव्रत विधौ प्रयत्यताम् ॥ १७ ॥

॥ इति भोगोपभोगव्रते मभिपुत्रिकासम्बन्धः ॥

उक्त सप्तम व्रतमथानर्थदण्डपरिहाराख्यमष्टम, गुणव्रत तु तृतीय, तत्रार्थः–प्रयोजन क्षेत्रवास्तुधनधान्यशरीरस्वजनपरिजनादिविषयं तस्याभावोऽनर्थस्ततोऽनर्थ–निष्प्रयोजनं प्राणी पुण्यधनापहारेण दण्ड्यते–पापकर्मणा विलुप्यते येन सोऽनर्थदण्डः, यदाह–"जं इंदिअसयणाई पडुच्च पावं करेज्ज सो होइ । अत्थे दण्डो इत्तो अन्नो उ अणत्थदण्डो अ ॥ १ ॥" स चापध्यान १ पापोपदेश २ हिंस्रप्रदान ३ प्रमादाचरित ४ भेदाच्चतुर्धा, तत्राप ध्यानं–आर्त्तरौद्रभेदाद्द्विधा, तत्राप्यार्त्तं चतुर्धा–अनिष्टशब्दादीनां कालत्रयेऽप्यत्यन्तविप्रयोगचिन्ता १ एव रोगादिवेदनाया विप्रयोगचिन्ता २, इष्टशब्दादीनां कालत्रयेऽप्यत्यर्थं संयोगाध्यवसायः ३, दिव्यभोगर्द्धि राज्यादिनिदानाध्यवसाय ४ श्चेति, रौद्रमपि चतुर्धा–हिंसानुबन्धि १ मृषानुबन्धि २ स्तेयानुबन्धि ३ विषयसंरक्षणानुबन्धि च ४, तत्राद्यमतिक्रोधादिना प्रत्य प्रति वधबन्धनाङ्कनहिंसनपुरवेधामध्यादिचिन्ता १, द्वितीय पिशुनासभ्यासद्भूतघातकादिवाक्प्रणिधानं २, तृतीयं परस्वहरणचिन्ता ३, तुर्यं शब्दादिविषयसाधनधनरक्षार्थं सर्वेषामविश्वसनेनोपघात एव श्रेयानिति बुद्धिर्म ४–१ क्षेत्र कृष कृषध्वं दमय वृषान् षण्ढय कपय शालम् यर्न्त्र वाहय शस्त्रं सज्जय पापोपदेशोऽयम्, एवं प्रत्यासीदति वर्षाकालो दीयतां वत्सरेभ्यभिः सञ्जीक्रियतां हलका

लादि अतिक्रामति वापकालः शीघ्रमुप्यतां धान्यानि मूता वा केदारा गाद्यन्तां सार्द्धविनत्रयमध्ये उप्यतां च लादि अतिक्रामति वापकालः शीघ्रमुप्यतां धान्यानि प्रत्यासीदन्ति प्रवहणपूरणदिवसाः प्रगुणीक्रियतां प्रवहणा मीद्दपः जाता वयःस्था कन्यका विवाह्यतां शीघ्रं प्रत्यासीदन्ति प्रवहणपूरणदिवसाः प्रगुणीक्रियतां प्रवहणा नीत्यादि सर्वोऽपि पापोपदेशः २॥ हिंस्रप्रदानप्रमादाचरितरूपमेवद्वयं तु चतुःसाध्यस्यास्मूत्रकृदेव क्रमाद् गाथा

द्वयेनाह—

सत्यग्गिमुसलजतगतणकट्ठे मतमूलभेसज्जे । दिन्ने दवाविए वा पडिक्कमे० ॥ २४ ॥

पहाणुव्वट्टणवन्नगविलेवणे सद्दरूवरसगंधे । वत्थासणआभरणे पडिक्कमे० ॥ २५ ॥

'सत्थग्गी'ति 'ण्हाणुवट्टणे'ति'॥ शस्त्राग्निमुशलानि प्रसिद्धानि उपलक्षणत्वादुदूखलहलान्यपि यन्त्रक—शकटघरट्टा-दि तृण—मसारसुकरणादिहेतुर्दर्भादि व्रणकृमिशोधन वा मधुकरी वा काष्ठ—अरघट्टयष्ट्यादि मन्त्रो—विषापहारादिर्व-शीकरणादिर्वा मूल—नागदमन्यादि ज्वराद्युपशमनमृत्तिका वा गर्भशातपातादि वा मूलकर्म,यदवाणि—"मंगल मूलीण्हवणाइ गब्भवीवाहकरणधायाई । भवयणमूलं कमति मूलकम्म महापाव ॥ १ ॥" भेषज—सांयोगिक द्रव्यमुच्चाटनादिहेतुः, एतच्चस्वाप्यनेकप्राणिप्राणव्यपरोपणकारणभूतदाक्षिण्याद्यभावेऽन्येभ्यः प्रदत्त दापितं वा तस्मिन् योऽतिचारस्तं 'पडिक्कमे' इत्यादिमाग्वत्। इति चतुर्विंशतितमगाथार्थः ॥ २४ ॥ 'ण्हाणु' इति स्नान—अभ्यङ्गपूर्वकमङ्गप्रक्षालन तथायतनया त्रससंसक्तभूमौ सम्पातिमसत्त्वाकुलेऽकाले वा सम्यगपरिपूतजलेन वा

यत्कृतं तपोधनेन ग्रससंसक्तपूर्णादिभिर्यत्कृतमुपमर्तिका वा भस्मनि न क्षिप्तास्ततस्ताः कीटिकाकुलाः श्वादिभिर्भक्षिताः पादैर्मर्दिता वा, तथा वर्णकः—कस्तूरिकादिभिः कपोलादिमण्डनं, विलेपनं—चन्दनकुङ्कुमादिभिर्ग्रीष्महेमन्तादौ, एतद्द्वयं सम्पातिमसत्त्वाद्ययतनया यत्कृतं, शब्दो—वेणुवीणादीनां कुतूहलेन श्रुतः निशि चोच्चैःस्वरेण शब्दः कृतस्तस्मिंश्च कृते गृहगोधादिदुष्टजीवा जागरिताः तैश्च मक्षिकादिजीवा हिंसिता अलाव्यापारम्भकैर्वोच्चैःशब्देन जागरितैः स्वस्वारम्भः प्रारम्भि, तथा च सति पानीयाहारिकावाणिज्याकारककर्पुकारघट्टिकाधिकरजकलोहकारमात्स्यिकसौनिकशाकुरिकघातकचौरपारदारिकाचरकन्दवायकादीनामपि परम्परया कुव्यापारप्रवृत्तिरिति महाननर्थदण्डः, अत एवोक्तं श्रीभगवत्यङ्गे कौशाम्ब्यां शतानीकभगिन्या मृगावतीननन्दुर्जयन्त्याः श्रीवीरपार्श्वे प्रश्नसम्बन्धे—"सुत्तत्तं भंते ! साहू जागरिअत्तं साहू ?, जयन्ती ! अत्थेगइआणं सुत्तत्तं साहू अत्थेगइआणं जागरिअत्तं साहू, जे इमे जीवा अहम्मिआ अहम्माणुआ अहम्मिट्ठा अहम्मक्खाई अहम्मपलोई अहम्मपलज्जणा अहम्मसीलसमुदायारा अहम्मेणं चेव वित्तिं कप्पेमाणा विहरंति एएसि णं जीवाणं सुत्तत्तं साहू, एए णं जीवा सुत्ता समाणा नो बहूणं जीवाणं पाणाणं भूआणं सत्ताणं दुक्खणाए जाव परिआवणाए वट्टंति, एए णं जीवा सुत्ता समाणा अप्पाणं परं वा तदुभयं वा नो बहूहिं अहम्मिआहिं संजोअंति, एएसिं सुत्तत्तं साहू जयन्ती !, जे इमे जीवा धम्मिआ जाव धम्मेणं चेव वित्तिं कप्पेमाणा विहरन्ति एएसि णं जीवाणं जागरिअत्तं साहू, एए णं जीवा जागरा समाणा बहूणं जीवाणं ४ अदु

क्खणाए जाव अपरिआवणाए वट्टंति, एए णं जीवा जागरा समाणा जाव धम्मिआहिं संजोएत्तारो भवंति एएसिं जागरिअत्त जीवा जागरा समाणा पुव्वरत्तावरत्तकालसमयंसि धम्मजागरिअं जागरइत्तारो भवति एएसिं जागरिअत्त साहू, एय बलिअत्त दुब्बलिअत्त, दक्खत्त आलसत्त, इत्यादि, 'जागरिआ धम्मीणं, अहम्मीणं तु सुत्तया सेआ। वच्छाहिवभइणीए अकहिंसु जिणो जयंतीए ॥१॥" इति, रूपाणि–रूपादीनां नाटकादौ विलोकितानि परेषां पुरो वर्णितानि वा, रसा–मिष्टान्नशाकादिसम्बन्धिनः परेषामपि गृद्धिवृद्धिहेतवो वर्णिताः, एवं गन्धवस्त्रासनाभरणा वर्णितानि वा, रसा–मिष्टान्नशाकादिसम्बन्धिनः, तद्दर्शनाच्च तज्जातीयम न्यपि परगृद्धिहेतुवृद्धितया व्यावर्णितानि, एतैश्च पञ्चविधविषयलक्षण प्रमादो दर्शितः, तद्दर्शनाच्च तज्जातीयम त्यादिप्रमादः पञ्चप्रकारोऽपि परिहार्यतया द्रष्टव्यः, यदाहुः–"कुतूहलाद्गीतनृत्यनाटकादिनिरीक्षणम्। कामशास्त्र प्रसक्तिश्च, द्यूतमद्यादिसेवनम् ॥ १ ॥ जलक्रीडान्दोलनादिविनोदो जन्तुयोधनम्। रिपोः सुतादिना वैरं, भक्त स्त्रीदेशराट्कथा ॥ २ ॥ रोगमार्गश्रमौ मुक्त्वा, स्वापश्च सकलां निशाम्। एवमादि परिहरेत्, प्रमादाचरणं सुधीः ॥ ३ ॥ विलासहासनिष्ठ्यूतनिद्राकलहदुष्कथाः। जिनेन्द्रभवनस्यान्तराहारं च चतुर्विधम् ॥ ४ ॥" तथा आलस्यादिना घृततैलजलादिभाजनानामस्थगन, मार्गे सति हरितकायाद्युपर्यशोधिताध्वनि वा गमनमनालो कितस्थाने हस्तक्षेपादि सत्यपि स्थाने सचित्तोपरि स्थित्यादि वस्त्रादेर्वा मोचनं पनककुन्थ्वाद्याक्रान्तभुव्यवश्राव पादेस्त्यजनमयतनया कपाटार्गलादानादि वृथा पत्रपुष्पादित्रोटनं मृत्खटीवर्णिकादिमर्दनं वह्नुदीपनगवादिघा तदानशस्त्रव्यापारणनिष्ठुरमर्मभाषणहास्यनिन्दाकरणादि रात्रौ विद्याऽध्ययनतया वा स्नानकेशग्रन्थनरन्धनम्

पञ्चवृसनभूसमनमृद्वाविमर्दनलेपनधावनजलगालनादि च प्रमादाचरितं श्लेष्मादीनां व्युत्सर्गेऽस्थगनाद्यय तनाऽपि प्रमादाचरितं मुहूर्त्तानन्तरं तत्र संमूर्च्छिममनुष्यसंमूर्च्छनतद्विराधनादिमहादोषसम्भवात्, आह च श्रीप्रज्ञापनोपाङ्गे भगवानार्यश्यामः–"कहिणं भंते ! समुच्छिममनुस्सा समुच्छंति ?, गोयमा ! अंतो मणुस्सखित्ते पणयालीसाइ जोयणसयसहस्सेसु अड्डाइज्जेसु दीवसमुद्देसु पन्नरसु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा नगरनिद्धमणेसु वा गामनिद्धमणेसु वा सव्वेसु चेव असुइठाणेसु संमुच्छिममणुस्सा संमुच्छंति अंगुलअसंखेज्जभागमित्ताए ओगाहणाए असन्नी मिच्छदिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतमुहुत्ताउआ चेव कालं पकरंति" 'सव्वेसु चेव'त्ति अन्यान्यपि यानि कानिचिन्मनुष्यसंसर्गवस्तूनीनि तेषु सर्वेष्वपीति तदुक्तो, अधिकरणभूतस्यागतस्य पात्रादेर्मलमूत्रादेश्चाप्युत्सर्जनमपि प्रमादाचरितं, यदुक्तं पञ्चमाङ्गे–"पुरिसे णं धणु परामुसति उसुं परामुसति उड्ढं वेहासं उव्विहित्ते समाणे जाइं तत्थ पाणाइं अभिहणति ततो णं भंते ! से पुरिसे कतिकिरिए ?, गोयमा ! से पुरिसे पंचकिरिआहिं पुट्ठे, जेसिंपि य जीवाणं सरीरेहिंतो धणू निव्वत्तिए तेवि अ जीवा पंचहिं किरिआहिं पुट्ठा, एवं धणुपट्ठे ण्हारू उसू सरे पत्ते फलेवि पंचहिं पुट्ठे"त्ति, ननु पुरुषस्य पञ्च क्रिया भवन्तु कायादिव्यापाराणां तस्य दृश्यमानत्वात्, धनुरादिनिर्वर्तकशरीराणां तु जीवानां कथं ताः ?, कायमात्रस्यापि

तदीयस्य तदानीमचेतनत्वात्, अचेतनकायमात्रादपि बन्धोपगमे सिद्धानामपि तत्प्रसङ्गः, तत्कायानामपि प्राणातिपातादिहेतुत्वेन लोके विपरिवर्त्तनात्, किञ्च—यथा धनुरादीनि कायिक्यादिक्रियाहेतुत्वेन पापकारणानि स्युस्तज्जीवानां तथा पात्रदण्डादीनि जीवरक्षाहेतुत्वेन पुण्यकारणानि स्युर्न्यायस्य समत्वात्, अत्रोच्यते, अविरतिपरिणामाद्बन्धः, स च यथा पुरुषस्यास्ति तथा धनुरादिजीवानामपि, सिद्धानां तु नास्तीति न बन्धः, पात्रादिजीवानां च न पुण्यबन्धहेतुत्वं, तद्धेतोर्विवेकादेस्तेष्वभावात्, किञ्च—सर्वज्ञवचनप्रामाण्याच्चैतदुक्तं तत्तथा श्रद्धेयमेवेति तद्वृत्तौ, एवं संसारान्तर्भ्रमद्भिर्जीवैर्यानि २ शरीरायुधादीनि मुक्तानि तैस्तैर्यदा जीववधाद्यनर्थः स्यात्तदा तत्स्वामी भवान्तरगतोऽपि तत्सत्ताऽपरित्यागात्तत्पापेन लिप्यते, तस्मादनन्तभवान्तर (मुक्त) देहशस्त्रादीन्यप्यधिकरणत्वाद्व्युत्सर्जनीयानि विवेकिना, स्वकार्ये कृतेऽपि ज्वलदिन्धनप्रदीपादेरविध्यापनमपि प्रमादाचरणं, नन्वग्नेर्विध्यापनेऽपि दोष एव ?, सत्यं, परं विध्यापनेऽग्निजीवानामेव विनाशो ज्वलति तु क्रियतां तेषां पृथ्व्यादीनां त्रसाणां च बहूनामपि विराधनेत्यधिकदोषः, तदुक्तं भगवत्याम्—"जे से पुरिसे अगणिकायं निव्वावेइ से णं पुरिसे अप्पकम्मतराए चेव"त्ति, अपिहितस्य प्रदीपचुल्हकादेर्धारणं चुल्हकोपरिचन्द्रोदयाप्रदानादपि प्रमादाचरणं, तयो जीववधादिबहुदोषहेतुत्वात्, अत्र निदर्शनं यथा—

श्रीपुरे श्रीषेणो राजा तस्य पुत्रो देवराजो देवराज इवापरः, स यौवने दैववशात्कुष्ठी जातः, सप्तवर्षाण्यपि विविधप्रतीकारैरप्यपटुर्वैद्यैस्त्यक्तः, ततो यो मत्पुत्रं नीरोगं करोति तस्यार्द्धराज्यं ददामीति नृपः पटहमवाद-

गत्, तत्र च महेभ्ययशोवसुपुत्री लक्ष्मीवती शीलादिसर्वगुणमयी तया पटहं निवार्य हस्तस्पर्शेन कुष्ठः स्फेटितः, यतः–"यस्य स्मरणमात्रेण, सर्वा संसारजा रुजः । शरीरिणो विशीर्यन्ते, सोऽयं शीलमिषद्रु नवः ॥ १ ॥" ततस्तयोः पाणिग्रहमहः, पुत्रं राज्ये न्यस्य दीक्षाऽऽदवे राज्ञा, तत्र चैकदा पाटलाचार्या ज्ञानिन ऐयुः, गुरुवन्दनार्थं नृपराज्योर्गमनं, देशनान्ते प्राग्भवपृच्छा, गुरुराह–वसन्तपुरे व्यवहारिदेवदत्तस्य चत्वारः पुत्राः–धनदत्तो १ धनदेवो २ धनमित्रो ३ धनेश्वर ४ श्च मिथ्यात्विनः, इतश्च मृगपुरे जिनदत्तः श्रेष्ठी जैनः, पुत्री मृगसुन्दरी तस्या अभिग्रहत्रय–जिनं पूजयित्वा १ साधूनां दानं दत्त्वा भोक्ष्येऽहं २ रात्रौ च न भुञ्जे ३, अन्यदा व्यवसायार्थं धनेश्वरो मृगपुरे ययौ, दृष्टा रूपश्रीजितसुरसुन्दरीवृन्दा मृगसुन्दरी, दृढमनुरागो जज्ञे, मिथ्यात्विनो नैनां दत्ते पितेति ज्ञात्वा कपटश्रावकीभूय तां परिणिन्ये स, स्वगृहे नीता, धर्मेर्ष्यया जिनपूजादि निषिद्धं, तस्या उपवासत्रयं जातं, तया गुरवः पृष्टाः, गुरुभिर्गुणागुणं विचार्योक्त–चुल्हकोपरि चन्द्रोदयं पन्नीयास्तेन पञ्चसाधुदानेन पञ्चतीर्थ्याश्च नमस्क्रियया यादृशं पुण्यं जायते (तादृशं पुण्यमवाप्स्यते), ततस्तया तथा कृते श्वशुरादिभिः किमपि कार्मणमनया कृतमिति विचार्योक्तं धनेश्वरस्य, तेन स चन्द्रोदयो ज्वालितः तया द्वितीयो दत्तः सोऽपि ज्वालितः एवं सप्त दग्धाः, ततश्च श्वशुरेणोक्त–भद्रे ! किमर्थोऽयं प्रयासः ?, तयोक्त–जीवदयार्थं, पुनस्तेन सरोषमूचे–तर्हि पितृगृहे गच्छ, तयोक्त–सकुटुम्बेन त्वयाऽहं पितृगृहे मोच्या, ततः सर्वेऽपि चलिताः, क्वापि मार्गग्रामे श्वशुरपक्षीयैः प्राघूर्णकार्थं रात्रौ पाकः कृतः, सा वधूः बहुकथनेऽपि न भुङ्क्तेऽतः कोऽपि न भुक्तः, ततो यस्य गृहेऽभ

जात तस्यैव कुटुम्ब मुक्त मृत, प्रातर्यावद्विलोकन्ते तावद्भस्थाल्यां सर्पो दृष्टः, सर्वैश्चिन्ति–रात्रौ पाके धूमा कुलः सर्पोऽस्यस्थाल्या पपातेति, पश्चाद्वधूः क्षमिता, तयोक्तम्–अत एव चुल्लकोपरि चन्द्रोदय दत्ते रात्रौ च न भुजेऽहं, ततस्तेषां प्रतियोध , सर्वेऽपि जीवितप्रदानात्साक्षात्कुलदेवीमिव तां मन्यानाः पश्चादागताः, तदुप देशात्सुश्रावका जाताः, मृगसुन्दरीधनेश्वरौ सम्यग्धर्ममाराध्य स्वर्गं गतौ, च्युत्वा शुभौ जातौ, यस्तया प्राग्भवे सत चन्द्रोदया दग्धास्तदुष्कर्मनिन्दाविना यत्तु क्षपित, अशामात्र तु स्थित तेन ससवार्षिको व्याधिस्तयाभूत्, यत –"नाभुक्त क्षीयते कर्म, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृत कर्म शुभाशुभम् ॥ १ ॥" तत उभयोर्जातिस्मरण पुत्र राज्ये न्यस्य प्रव्रज्य स्वर्गं गतौ क्रमान्मोक्ष च तौ ॥

॥ इति चुल्लकोपरि चन्द्रोदयदाने मृगसुन्दरीकथा ॥

अत्रोचितेन्धनधान्यजलादिव्यापारणमपि प्रमादाचरित सप्ततना प्रथमव्रते प्रागुक्ता, चतुर्विधोऽपि चानर्थ-दण्डोऽनर्थहेतुरेव निरर्थकश्च, नहि तेन विना कश्चिन्निर्वाहः, तथाहि–आर्त्तरौद्ररूपापध्याने न काचिदिष्टसि द्धिः प्रत्युत चित्तोद्वेगवपुःक्षीणताशून्यताघोरदुष्कर्मबन्धदुर्गत्याद्यनर्थं एव, उक्तञ्च–"अणवट्ठिअ मणो जस्स झायइ बहुआइं अट्टमट्टाइं। त चिंतिअ च न लहइ संचीणइ पावकम्माइं ॥ १ ॥ चयकापविरहिआणवि कम्माण चिंतामित्तविहिआण । अइघोर होइ फल तन्दुलमच्छुव्व जीवाण ॥ २ ॥" अतोऽशक्यपरिहार ज्ञात्वपध्यान क्षणमात्र स्यात्तदाऽपि सद्य एव परिहार्यं मनोनिग्रहयतनया, यदाह मनोनिग्रहभावनाकृत्–"साहूण साव

गाण य धम्मे जो कोइ विस्थरो भणिओ। सो मणनिग्गहसारो जं फलसिद्धी तओ भणिआ ॥ १ ॥" धर्मशुक्लध्यानयोश्च मन प्रवर्त्तनीय, यतः—"यतः कामार्थयशसां, कृतोऽपि विफलो भवेत्। धर्मकर्मसमारम्भसङ्कल्पोऽपि न निष्फलः ॥ १ ॥" पापोपदेशार्हिस्रप्रदाने च भ्रातृपुत्रकलत्रमित्रादावन्यथा निर्वाहाद्यदर्शनाद् दुःशक्यपरिहारे, अन्येषु तु पापान्यनर्थफले एव, तदुक्त लौकिकैरपि—"न शास्त्राणि न वेदानि, पञ्च ग्रन्थाणि पण्डितैः। अग्निर्विषं तथा शस्त्र, मद्य मांसं च पञ्चमम् ॥ १ ॥" प्रमादाचरिते तु चैत्यायतनादिनिमित्तो हिंसादिदोषः, अत एवाह—"तुल्लेवि उअरभरणे मूढअमूढाण अंतर पिच्छ। एगाण नरयदुक्खं अन्नेसिं सासय सुक्खं ॥ १ ॥" यतनां विना च प्रवृत्ती सर्वथानर्थदण्ड एव, अतः सद्यतया सर्वव्यापारेषु सर्वशक्त्या श्रावकेण यतनायां यतनीय, यतः—"जयणा य धम्मजणणी जयणा धम्मस्स पालणी चेव। तवुड्ढिकरी जयणा एगंतसुहावहा जयणा ॥ १ ॥" हास्यमोसर्योपनर्थदण्डमात्रापि घोरवैराद्यनर्थकृत्, कुमारपालभूपालभगिनीं प्रति भर्त्तुः द्यूतकीडायां मारय मुण्डिकानिति हास्योक्तादिव, सार्थकपापाच्च निरर्थकपापेऽधिककर्मबन्धादिदोषोऽपि, यतः—"अट्ठेण तं न बंधइ जमणट्ठेणं तु थेवबहुभावा। अट्ठे कालाईआ निआमगा न उ अणट्ठाए ॥ १ ॥" अतश्चतुर्विधोऽप्यनर्थदण्डः सर्वथा विवेकिना त्याज्यः, तस्मिंश्च योऽतिचार इत्यादि पूर्ववदिति पञ्चविंशगाथार्थः ॥ २५॥

अत्र पञ्चातिचारानिन्दति—

कदप्पे कुक्कुइए मोहरि अहिगरण भोगअइरत्ते । दंडमि अणट्ठाए तइअमि गुणव्वए निंदे ॥ २६ ॥

'कदप्पे' इति ॥ कन्दर्पः—कामस्तद्धेतुर्वाक्प्रयोगोऽप्युपचारात्कन्दर्पः—रागादिविकारोद्दीपक हास्यादिवचनमित्यर्थः १, 'कौकुच्य' भ्रूनेत्रौष्ठनासाकरचरणवदनादिविकारगर्भं हास्यजनक विटचेष्टित, येन हि स्वस्य परस्य वा मोहोद्रेको हास्य स्वस्य लाघव च स्यात् न तादृशं श्रावकस्य वक्तु चेष्टितु वा कल्पते, प्रमादात् तथाचरणे स्यतिचारः, एतौ द्वौ प्रमादाचरितरूपानर्थदण्डत्यागस्यातिचारौ २, 'मोहरि'त्ति मौखर्य—असभ्यासम्बद्धबहुभाषित्वं, मौखर्ये सति जातु पापोपदेशस्यापि सम्भवादतिचारत्व, मौखर्यं हि प्रायः सर्वानिष्टकार्यविपत्तौ च विशेषानर्थहेतुः, यदुक्तम्—"बहूनां समवाये हि, सिद्धे कार्ये सम फलम् । यदि कार्यविपत्तिः स्यात्, मुखरस्तत्र बाध्यते ॥ १ ॥" मौखर्ययुक्तः प्रस्तावाद्यौचित्य विनाऽपि वदेत्, तथा चामीस्यादिर्महान् एव दोषः, यतः—"अवि आणिअ परवाय परचित्तमलक्खिऊण ज भणिअं । किं वायपर तत्तोवि तुज्झ अत्थि लोअमि ॥ १ ॥" इति ३, 'अधिकरण'त्ति संयुक्ताधिकरणता, अधिक्रियते नरकादिष्वात्माऽनेनेत्यधिकरण—मुशलोदूखलादि संयुक्त— अर्थक्रियायां सज्जीकृत यद्वा संयुक्त—सहितमधिकरणान्तरेण यथोदूखलेन मुशल हलेन फालः धनुषा तीराः शकटेन युग पेषण्या लोष्टकः कुठारेण दण्डः घरट्टिकापुट द्वितीयपुटेनेत्यादि, संयुक्त च तदधिकरण च २ तस्य भावः संयुक्ताधिकरणता, इह श्रावकेणविवेकिना सज्जीकृत शकटादि न स्थाप्य यतस्तद्दृष्ट्वा जनो गृहीत्वा विचारयितु न शक्य

ते, असज्जीकृते तु स्वयमेव निवारितः स्यात्, एवमग्निरपि यदा गृहस्थैर्गृहे प्रज्वालितः स्यात्तदा प्रज्वालनीयः, चरणार्थं गवाविमोचन हलशकटवाहन गृहारम्भग्रामान्तरगमनाद्यपि प्रथम न कुर्याद् अधिकरणप्रवर्त्तनादिदोषात्, उक्तं हि-"कार्ये शुभेऽशुभे वाऽपि, मधुसिन्धैः कृताऽऽदितः। ज्ञेयास्ते तस्य कर्त्तारः, पश्चादप्युपचारतः ॥१॥" अथ हिंस्रप्रदानपरिहारस्यातिचारः ४, 'भोगअइरित्त'त्ति उपभोगपरिभोगातिरिक्तता, उपभोग्यपरिभोग्यवस्तूनां स्नानभोजनभोगपरिधानाद्यर्थानामाधिक्यमित्यर्थः, तडागादौ स्नानावसरे हि तैलामलकादीनामाधिक्येऽन्येऽपि तानि याचित्वा स्नानादौ प्रवर्त्तन्ते तथा चानर्थदण्डः, अत्रापमादकृत्यकस्नान्योक्तो विधिः-पूर्वं तावद्गृहे एव स्नातव्यं, तदभावे तु तैलामलकैर्गृह एव शिरो घर्षयित्वा तानि सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टो गालितजलेनाञ्जलिभिः स्नाति, गृहेऽपि स्नानभोजनताम्बूलपुष्पाद्युपस्करास्पतीय गुणहेतु, यदाहुः-"सकलमुपस्करमधिकं मतिमान् स्वगृहेऽपि कारयेन्नैव। मात्राधिकोपकरणैर्लोकः पाप समाचरति ॥ १ ॥" येषु च पुष्पफलादिषु कुन्थ्वादिविराधना तानि परिहरति, एष प्रमादाचरितविरतेरतिचारः ५, एतद्विषये यदुक्तं तद् 'दंडमि अणट्ठाए'त्ति अनर्थदण्डाख्ये तृतीये गुणव्रते निन्दामीति पञ्चिंशगाथार्थः ॥ २३ ॥ अत्र वीरसेनकुसुमश्रीकथा, तद्यथा—

पुरे कनकसालेऽभूद्विशाले सकलर्द्धिभिः। नाम्ना धाम्ना च विख्यातः, क्षितिमानरिकेशरी ॥ १ ॥ तस्य प्रिया प्रियालापा, नाम्ना प्रियमती सती। वीरसेनस्तयोः सूनुरनूनगुणगौरवः ॥ २ ॥ प्रियाः सार कुमार त,

कुमारमिव भूमिगम् । समश्रय श्रयन्ति स्म, निस्तुला सकलाः कला ॥ ३ ॥ इतश्च-पुरे रत्नपुरे राजजैनप्रासा
वसुन्धरे । आसीन्न्यायधुराधीरो, रणधीरो धराधिपः ॥ ४ ॥ पत्नी रत्नावली रत्नावलीवास्य सुनिर्मला । अपत्य
चिन्तातुरयोस्तयोः काल कियानगात् ॥ ५ ॥ अथोपयाचितशतै, प्राक्कृतैः सुकृतैस्तयोः । कुसुमश्रीरिति
ख्याता, जाता विश्वाद्भुता सुता ॥ ६ ॥ लावण्यकुल्या निस्तुल्या, सा वाल्यातिक्रमात् क्रमात् । रराज स्मरर
अस्य, राजधानीव जङ्गमा ॥ ७ ॥ वरचिन्तातुरस्तस्याः, पिताऽज्ञासीद्वरैर्नरैः । साक्षान्मारं कुमार त, वीरसेन
वर वरम् ॥ ८ ॥ सुरसुन्दरनामान, निपुण तत्र मन्त्रिणम् । प्रैषीन्नृपोऽपि राजाऽथ, सत्वरं सोऽपि जग्मिवान् ॥९॥
सर्वोद्गीणगुणश्रेणीं, त सङ्केतनिकेतनम् । दृष्ट्वाऽतिहृष्ट सचिवस्तस्मै वव्रे स्म तां कनीम् ॥ १० ॥ पित्रादेशा
न्महासेनो, वीरसेनोऽपि तत्पुरे । अगान्मुग्ध इवाकृष्टः, स्वीकर्तुं कुसुमप्रियम् ॥ ११ ॥ महीयसा महेनाथ, मही
शस्तौ व्यवाहयत् । सा स्वाक्ष्यवपक्ष्मीण, करमोक्षक्षणे पतिम् ॥ १२ ॥ देव ! देवतया दत्तोऽश्वः पल्यङ्कः शुक
स्तथा । यामामर्दन्ति न स्वन्यस्वनसैन्यादि किञ्चन ॥१३॥ यथार्थनामा कमलामेलस्तत्र तुरङ्गमः । प्लुतैः कामित
गन्ता, दिवि दिव्यविमानवत् ॥१४॥ पल्यङ्क सर्वदा स्वर्गिपल्यङ्क इव सज्जितः । स्वामीच्छया पृष्ठगामीष्टनिराकृत
कामितप्रदः ॥१५॥ सुधी सुधीमदस्तारग, विधुराशौ सुधीरहृत् । विदग्धचूडामण्याख्यः, शुकश्च शकुनादिवित्
॥ १६ ॥ त्रिरत्नीव त्रिवेदीव, निजार्थाव्यभिचारिणी । विश्वातिशायिताहेतुः, सैव तन्मार्ग्यतां गुरो ॥ १७ ॥
पञ्चभिः कुलकम् । तेनापि मुग्धितेनैव, याचितेऽचिन्तयन्नृपः । अहो ! गूढरहस्य मे, वृष पुत्र्या प्रकाशितम् ॥१८॥

तस्यिषान् ॥ ३४ ॥ सुवर्णमणिवप्राद्दालकाद्दालयमणिवसम् । ममस्तवस्तुविस्तारसारमेतत्पुर महत् ॥ ३५ ॥ उद्वा व्योमेव शून्य तु कुतस्तेनेत्युक्तः शुकोऽब्रवीत् । देव । संभावये देव्या, कुतोऽपि क्रुद्धयाऽनया ॥ ३६ ॥ त्रिभिर्विशेषकम् ॥ सितं विपद्दते, धन्यमुवासकं कथम् ? । सप्रत्ययेव स्वस्थानरक्षिणः पक्षिणोऽपि हि ॥ ३७ ॥ फिञ्च किञ्चिन्निमित्तेन नैमित्तिक इव मुवे । विभो ! भावी भवानेव, नगरेऽत्र नरेश्वर ॥ ३८ ॥ मुदितास्मा तदुदितादुदितात्यन्तकौतुकः । शुकेन साकं सोऽकार्षीत्, काश्चिद्गोष्ठ्या सुस्वासिकाम् ॥ ३९ ॥ अथास्तमीयुषि जगच्चक्षुषि ध्वान्तविद्विषि । परितः प्रसृतध्वान्तैः, खलैरुच्छलितैरिव ॥ ४० ॥ ततश्चाकस्मिक किञ्चित्स्व शुकः शकुनाविकम् । बुद्ध्वाऽयथार्थं निर्धार्य, कार्यवित् प्राह तं प्रति ॥ ४१ ॥ रात्रिर्घोरान्धकारेयं, स्थानं निर्मानुष स्ववः । इय रक्षत्रयी तावदुध्यापा सुसदामपि ॥ ४२ ॥ पश्याम्यवश्यं कमपीदृश्य विघ्नं हि भाविनम् । जागर्मि यामयुग्मं तत्पूर्वं पश्चात्तुवां पुनः ॥ ४३ ॥ यतः–"उद्यमे नास्ति दारिद्र्यं, जपतो नास्ति पातकम् । मौनेन कलहो नास्ति, नास्ति जागरतो भयम् ॥४४॥" जाग्रता सुमतीकारः, स्यात्मत्यूहोऽप्युपस्थितः । भयस्थाने हि यः सुप्तः, स विमुग्ध इति स्थितिः ॥ ४५ ॥ सुषुप्सेऽथ सदारेऽपि, कुमारे धार्मिकस्थितिः । चीरयत् कीरराट् तस्थावार्यैः कार्ये हि कोऽलसः ? ॥ ४६ ॥ निशीथेऽथ तयोः शय्याप्रभावाद्गीतनिद्रयोः । सुष्वाप प्राप निद्रां द्राक्, शुकः श्रान्त इवाध्वगः ॥ ४७ ॥ पद्मदेव्या गृहे दिव्य, स्फीतसङ्गीतकध्वनिम् । कुमारः सोऽथ सुश्राव, श्रवःसारस-धागुराम् ॥ ४८ ॥ तेनाकृष्ट इवाकृष्टिमन्त्रेण नृपनन्दनः । देहचिन्तामिव कृत्वा, गत्वा शुभ व्यलोकयत् ॥ ४९ ॥

तत्र च–तत वीणादि तालादि, घन च मुरजादिकम् । आनद्ध शुषिर वंशाद्यैर्व वाद्य चतुर्विधम् ॥५०॥ श्रीरा-
गमुख्या रागाः षट्, भाषास्त्रिंशत् षडन्विताः । षड्जादयः स्वराः सप्त, मयूरादिकशब्दगाः ॥ ५१ ॥ यदुक्तम्–
“षड्ज मयूरा ब्रुवते, गाव ऋषभभाषिणः । अजा वदन्ति गान्धार, क्रौञ्चः क्वणति मध्यमम् ॥५२॥ पुष्पसाधारणे
काले, पिकाः कूजन्ति पञ्चमम् । धैवत प्राहुरश्वाश्च, निषाद बृहते गजः (ब्रुवते गजाः) ॥ ५३ ॥ स्वरानुगास्त्रयो
ग्रामा, मूर्च्छना एकविंशतिः । ताना एकोनपञ्चाशन्मात्रास्तिस्त्रस्त्रयो लयाः” ॥५४॥ चतुर्दश रूपक त्रेधाऽप्येकताली
द्विधा पुन । रासाद्यतालकानीसारुचकप्रतिमाठकाः ॥५५॥ माठकः षड्विधो ध्रुवाभिध षोडशाभेदमुत् । त्रिधा
ध्रुवं झुम्पडकः, करणी वर्त्तनी तथा ॥ ५६ ॥ रागोपरागा रागाङ्गभाषाङ्गानि क्रियाङ्गयुग् । उपाङ्गादीनि गीते
स्युर्भेदा नृत्ये तु ते यथा ॥ ५७ ॥ त्रयोदश भेदाः शीर्षे, सप्तत्रिंशच्च लोचने । कनीनिका नवविधाऽप्यष्टधा
लोकने पुनः ॥५८॥ पुटानि नव सप्त भ्रूभेदा नासा कपोलयुक् । षोढाऽधरश्च प्रत्येक, चुबुरागश्चतुर्विधः ॥५९॥
ग्रीवा नवविधा बाहुः, पञ्चभेदः करः पुनः । हस्तकानि चतुःषष्टिर्वक्षः पार्श्वं च पञ्चधा ॥ ६० ॥ कुक्षिकट्यूरुज
ङ्घाश्च, प्रत्येक त्रिविधा मताः । करणान्यष्टाग्रशत, द्वात्रिंशदङ्गहारकाः ॥६१॥ चत्वारो रेचकाः सप्तदश बन्धाश्च
पैण्डिकाः । इत्युक्तैः स्फीतसङ्गीतरसे स विवशोऽभवत् ॥ ६२ ॥ मानुष्यकेऽपि सङ्गीते, जन्तुर्जायेत तन्मयः ।
किं पुनर्दैवते चायुरपि पूर्येत यद्रसात् ? ॥ ६३ ॥ एकाकिनी तदानीं च, कुसुमश्रीरपि क्षणात् । निद्राणा दैव
घातो, मा वि स्यात्कथमन्यथा ? ॥ ६४ ॥ तावच्चुरङ्गपल्यङ्कीं, चौरवत् कोऽप्यपाहरत् । छलच्छेकाश्छल प्राप्य,

॥ ६६ ॥ तस्यां पश्चिमायां च, शुक सुतोत्थितस्ततः । अपश्यत्तौ कुमार च, सुम्या
कस्मै न प्रमविष्णवः ? ॥ ६६ ॥ कुसुमश्रीजजागार, त श्रुत्वा दुःश्रव रवम् । आरेकया कुमारोऽपि, भवेद्यायस्पराङ्-
राव विनिर्ममे ॥ ६६ ॥ गीतनृत्यादिक तावदिन्द्रजालमिवाखिलम् । काप्यनेशन्मृशा सोऽपि, दाराङ्क च विसिष्मये ॥ ६८ ॥
मुखः ॥६७॥ गीतनृत्यादिक तावदिन्द्रजालमिवाखिलम् । काप्यनेशन्मृशा सोऽपि, दाराङ्के च विसिष्मये ॥ ६८ ॥
सस्थानगम तौ लब्ध्वाऽन्वावबीक्ष्य विलक्षवत् । दध्यौ धिग्मे मृषा केय, मूढता दुष्प्रमाविनः ? ॥ ६९ ॥ आः
कीरेण तथोक्तेऽपि, काऽपि व्याक्षिप्तचित्तता । कुठनाढ्येऽप्यभून्मे धिक्, स्वार्थभ्रंशोऽपि नेक्षि यत् ॥ ७० ॥ यद्वा
स्वकार्यमूढस्य, प्रमत्तस्यैतदल्पकम् । अत्रामुत्रापि यत्पुसां, प्रमादोऽनन्तदुःखदः ॥ ७१ ॥ पठ्यतेऽपि–"प्रमादः
परमद्वेषी, प्रमादः परम विषम् । प्रमादो मुक्तिपूर्दस्युः, प्रमादो नरकायनम् ॥ ७२ ॥" इत्यायत्तिमहादुःख, दधतं
त प्रबोधयन् । शुकः प्राह प्रभो ! नैव, युज्यते हि भवादृशाम् ॥ ७३ ॥ यतः–"आपत्सु संपत्स्वपि, पूर्वकर्म-
नियोगतः । धैर्यमेव परित्राण, न युक्तमनुशोचनम् ॥ ७४ ॥" एव ब्रुवन्त कीरेन्द्रमार्यः पर्यन्वयुङ्क्त सः । सखे !
सखेदचित्तस्य, कृत्य मे कथयाथ किम् ? ॥ ७५ ॥ सोऽप्याख्यदेव ! दुर्लघादिव्य दुर्ललितं ध्रुवः । जज्ञे विमेन
तद्देवी, देवेनाराध्यतामियम् ॥ ७६ ॥ सोऽप्युपोष्य विशिष्याधोविधिनाऽऽराध्यति स्म ताम् । स्पष्टीभूय ततः-
पेऽहि, तुष्टाऽभाषिष्ट साऽपि तम् ॥ ७७ ॥ कियत्कालविलम्बेन, मिलिष्यत्यखिल च तत् । किन्त्वितोऽप्यधिक
दुःख, भावि प्राक्कर्मतः कियत् ॥ ७८ ॥ यत –"वारिज्जइ हंतो जलनिहीवि कल्लोलभिन्नकुलसेलो । नहु अन्नज
म्मनिम्मिअ सुहासुहो कम्मपरिणामो ॥ ७९ ॥" किन्तु धैर्ये कुरुष्वाथ, स्वजं चित्तं यथा द्रुतम् । अरिघ्नीपा-

दित! कृपाविव स्यात्तव निर्गमः ॥ ८० ॥ इत्युक्त्वाऽन्तर्हितायां प्राग्, देवतायां तदैव स । तदैत्योत्तुङ्गमारुह्य,
चिह्नहेतु ध्वजं व्यधात् ॥ ८१ ॥ सांयात्रिको धनपतिः, सार्थपोऽथ परार्थकृत् । वीक्ष्य चिह्नध्वजं प्रैषीत्तूणिक-
पुत्रान् द्रुतं निजान् ॥ ८२ ॥ तेऽप्यागत्य कुमाराय, प्रोचिरेऽस्मत्प्रभुः प्रभो ! । उद्धरत्यब्धिपतितान्, मद्भ्ये
शम्यलायपि ॥ ८३ ॥ पावाब्धपार्यतां प्राक्त तस्सोऽथ हृष्टः सुरीमधक्त । देवि ! मामापदः पापाः, पूरयेश्च मनो
रथान् ॥ ८४ ॥ इत्युक्त्वा स सुरीं नत्वा, शुकमादाय सप्रिय । उपेतः पोतपतिना, स्वपोतेऽप्यध्यरोप्यत ॥८५॥
पृष्टा ज्ञाते कुमारस्य, वृत्तान्ते सार्थपोऽप्यथ । दुःखीबभूव को वा न, दुःखी दुःखे महात्मनाम् ? ॥ ८६ ॥ ततः
सार्थपतिस्तत्तद्वचनैस्त प्रमोदयन् । भक्त्या शुश्रूषादिसद्युक्तिं, कुर्वन्नावर्जयत्तराम् ॥ ८७ ॥ क्रियासमभिहारेणा
न्यदा तु कुसुमप्रियः । रूपं निष्प्रतिरूपं निरूपयन्नमुमति स्म सः ॥ ८८ ॥ तस्यां लुब्धश्च दुर्बुद्धिश्छलं लब्ध्वा
ऽथ त निशि । क्षिप्रं चिक्षेप विभ्रब्धमब्धौ स्वं तु भयाम्बुधौ ॥ ८९ ॥ अब्धौ नृपातगुप्योऽभूत्, निर्घोतः कोऽपि
सम्प्रति । भो ! भो ! सक्षमनुष्यास्तत्सम्भालयत यत्नतः ॥ ९० ॥ इत्युच्चैः पूत्कृते पोतपतिनैव च कैतवात् ।
सोत्थिता बभ्राणीव, स्वपतिं नैक्षत कश्चित् ॥ ९१ ॥ छिन्नशाखेव साऽकस्मा मूर्च्छिता न्यपतत्तत । कथञ्चि
दुत्थिता चापि, विललाप मुहुर्मुहुः ॥ ९२ ॥ विलाप वाग्मिकालाप, सोऽप्युच्चैर्मम्फूत्कारतः । सर्वेऽन्येऽपि तदा
दीन, रुदन्ति विलपन्ति च ॥ ९३ ॥ अथ जाते प्रभातेऽन्वी,धीर्यमाणाऽपि सर्वथा । सती सतीप्रदुःखाब्धौ, याच
जम्पां ददाति सा ॥ ९४ ॥ तावदेव इयाकस्मात्प्रादुर्भूयाह मूपमूः । मा मा रामस्यमितिवाग्, काद्रुम्पां तामवी

परात् ॥९५॥ युग्मम्। विस्मयानन्दयोर्मैत्रमवैत वृषती तु सा । पप्रच्छ स्वच्छधीः स्वामिन्!, क गतश्चागतः कुतः ?
॥९६॥ सोऽपि प्राह प्रिये ! नैष, जानेऽब्धौ केन पातितः ? । इतस्ततस्तरन्मुक्तोऽप्युत्तुस्याप्य च केनचित् ॥९७॥
अकृत्रिम मुमुदिरेऽन्ये सार्थेशस्तु कृत्रिमम् । अन्तराकस्मिकभयानुशयाभ्यां भृशार्दितः ॥ ९८ ॥ कुमारस्तस्य
दुर्दशा, नैवाधादीद्विषन्नपि । अहो ! कारुण्यदाक्षिण्यनैपुण्यनिचिता सताम् ॥ ९९ ॥ मनसाऽप्यस्य नाध्यासीद्वि
रूद्ध दुःखपीरयम् । कृत्याकृत्यफल सर्वः, स्वयं सर्वोऽप्यवाप्स्यति ॥ १०० ॥ उक्तं हि–"अपकारिषु मा पाप,
विचिन्तय कदाचन । स्वयमेव पतिष्यन्ति, कूलजाता इव द्रुमाः ॥ १ ॥" प्राग्वदेव कुमारेऽथ, तस्थुषि स्वस्थता
कुपि । सार्थपोऽपि तथैवास्थात्कूटभृत्य इवानिशम् ॥२॥ इतश्च दुश्चरितता, तस्य मीत्येव कोपतः । पवनः प्रति
कूल सन्, प्रचण्डोऽवगतां दधौ ॥ ३ ॥ महावातोच्छलत्कल्लोलकल्लोलैः कौतुकादिव । प्राप्यन्त हन्त ते पोता
स्ववाली का तुकी कलाम् ॥ ४ ॥ महोपलैरिव महाकल्लोलैः प्रचलैस्ततः । आस्फाल्यास्फाल्य भग्नास्ते, माण्डव
स्वण्डशः क्षणात् ॥ ५ ॥ सार्थेपः सह सार्थेन, वस्तुसार्थे गतेऽम्बुधौ । मोहात्तलातलगामीव, हा हा कुर्वन्निमम-
वान् ॥ ६ ॥ अत्युग्रपुण्यपापानामिहैव फलमाप्यते । इतीव सार्थवाहस्य, तादृशी दुर्दशाऽभवत् ॥ ७ ॥ कुमार
कीरयुग् दैवात्फलक प्राप्य तत्क्षणात् । कुसुमश्रीरपि तथा, काऽप्यहो ! सुकृतप्रथा ॥ ८ ॥ फलके चेलतुस्ते च,
पा पाविव पृथक् २। व्यञ्जन्ती इव जीवानां, भवे भिन्नपथां गतिम् ॥ ९ ॥ मुक्ताविवेकतः किञ्चित्सिकटेऽपि तटे
सदा । ऊर्मिभिः कर्मभिर्दूर, नीयेते ते तु जन्तुवत् ॥ १० ॥ अभिलापभयादैवलब्धिमताद्विमलम्मतः । प्रासौ मौ

दम्पती रात्रिरयात्तमिथुनस्थितिम् ॥११॥ समयज्ञस्तु दम्पत्योस्त्वीयोड्डीय कीरराट् । गतागतैः कियत्कालं, मिथः शुद्धिमचीकृपत् ॥ १२ ॥ ततः भ्रान्त शुकं शोकपिच्छच्छ अतिवत्सलः । सोऽगवद्गरुव वैयावृत्योय पपात नः ॥ १३ ॥ मा मूवस्मत्कृते तेऽपि, मृतिरत्र पतत्रिणः । तन्मे शुद्धिं चवत्सस्या, वत्स ! गच्छ वनान्तरे ॥ १४ ॥ जीवन् पुनर्नः क्वापि स, प्रियदर्शन ! दर्शयेः । को वेद वा भावि किं नः, प्राणितेऽप्यत्र संशय ॥ १५ ॥ धीरः कीरस्ततोऽवादीत्, देव ! मा मुञ्च धीरताम् । धीरतामेव आमीहि, सेतुमापत्पयोनिधौ ॥ १६ ॥ यतः–"सत्यम नुज्झितधाम्नो स्खलितान्तरितोऽपि भवति पुनरुदयः । उदयत्येव दुराश्रेरस्त गत्वाऽपि दिननाथः ॥ १७ ॥" रूपोऽप्याराधितोऽपि प्राक्, सम्यग्धर्मोऽन्तरा क्वचित् । असत्पित नून तज्जन्येऽभाक पैदासमीदृशम् ॥१८॥ यत – "सेवितः किल सम्पूर्णः, सम्पूर्णं तनुते फलम् । जमानां जिनधर्मोऽपि, खण्डितः खण्डित पुनः ॥१९॥" पुनः सर्वं शुभं भावि, पन्नाग्य भवतोऽद्भुतम् । न किं स्मरसि देव्योक्तमित्युक्त्या तमधीरयत् ॥ २० ॥ मुहुर्विसृष्टः कृच्छ्रेणापृच्छ्यान्तरमुत्क शुकः । तस्याः पार्श्वे समापासीत्, परमामीष्टबन्धुवत् ॥ २१ ॥ विविध विलपन्ती तां, धीरयन् धीरधीरयम् । न्यवेदयत्कुमारोक्तं, साऽप्यथो साऽश्रुदृग् जगौ ॥२२॥ याहि याहि निजान् प्राणान्, पाहि १ कथञ्चन । अवश्यं प्राकृत कर्मास्माभिर्भोक्तव्यमत्र तु ॥२३॥ ततो वदन् महादुःखमनन्यगतिकः सकः । शुकः कथमपि प्रापवासत्वे कानने क्वचित् ॥ २४ ॥ रुदती सुदती साऽथ, तुदती स्वकमर्तिभिः । अथाकुलीकृता वीचीभिर्जलचरैरपि ॥ २५ ॥ दुष्कर्मघातस्तस्याः, फलक स्खलतस्ततः । जीवितव्यमिव भ्रष्ट, कष्ट धिग् विधि

वेष्टितम् ॥ २६ ॥ पाताल प्रविशन्तीव, मज्जन्ती सा ततोऽम्बुधौ । जग्रसेऽजगरेणेव, महामत्स्येन केनचित्
॥ २७ ॥ यत –"छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां, पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूर
वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन् मृगः, कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरु
षम् ? ॥ २८ ॥" वक्रकुम्भीनिभे मत्स्यकुक्षौ कृच्छ्रेण सा स्थिता । जीवन्ती हन्त ! कथमप्याप नारकदुःखिताम्
॥ २९ ॥ भवितव्यतानुभावाद्भ्राम २ तिमिश्च सः । काप्यल्पनीरे तीरेऽगाद्विपेदे च सपद्यपि ॥ ३० ॥ स मत्स्य
मात्स्यिकोऽगृह्णान्मूल्याय जगृहुस्तत । कुम्भकारवेश्यादास्योऽद्यावासन्नभीपुरागताः ॥ ३१ ॥ ताभिस्तुष्टाभि
रष्टाभिरिष्टाभिर्गणिकागृहे । कष्टेनोत्पाट्य नीतोऽसौ, शस्त्रा यावद्व्यदार्यत ॥ ३२ ॥ तावदाविरभूत्तत्र, चित्रकृ
द्रूपसम्पदा । मञ्जूषान्तर्गता साक्षाल्लक्ष्मीरिव मृगेक्षणा ॥ ३३ ॥ तां मृतामिव मूर्च्छालां, बालां बहुविधोपचैः ।
पटूकृत्य पटूल्लापगुम्फगुम्फा मुदाऽवदत् ॥ ३४ ॥ निश्चित ते कुलं बाले !, वपुर्लावण्यलीलया । तथाऽपि कथय
त्वं का, किं वाऽभूदुर्वशीरवशी ? ३५ ॥ सुगन्धिशीलकुसुमा, कुसुमश्रीस्त्वचिन्तयत् । ममाब्धौ किं न ? किं नाहं
विलीना मीनकुक्षिगा ? ॥३६॥ इयद्दुःखमदानेनाप्यतृप्तेन दुरात्मना । धिग् दग्धविधिना कस्मिन्, स्थाने क्षिप्ताऽ
स्मि शत्रुवत् ? ॥ ३७ ॥ सासहे सर्वदुःखानि, वाचये येन्धनाद्यपि । पर वृथे प्रसवोच (इ), गहनाशाऽप्यहं वधु
॥३८॥ तत्किं प्रतिब्रुवे ? यद्वा, मौन सर्वार्थसाधकम् । ध्यात्वेति ध्यानलीनेव, मौनमेव ततान सा ॥३९॥ इवा
नीमार्द्रदुःखेव, क्रमात्सर्व करिष्यति । इति साऽपि तदालापे, शिथिलीभावमाचरत् ॥ ४० ॥ अनन्तमनस्तद्-

दुःख, वहन्ती तां महासतीम् । कुम्फा प्राहान्यदा वत्से !, वत्सल मद्वचः शृणु ॥ ४१ ॥ एषा मदनलेखा मे,
लब्धरेखाऽत्रनाजमे । धन्या कन्या जगन्मान्या, मन्यतां भगिनी त्वया ॥ ४२ ॥ अस्मत्कुलं हि विमलं, महाभा-
ग्येन लभ्यते । यत्र नित्यमवैधव्यं, विश्व भोगसुखादि च ॥४३॥ सकुटुम्बवियुक्तस्य, कस्य स्यादपि दुःखिता ? ।
नित्योत्सव स्थिरं वेश्म, स्वर्भस्माशाऽसि पुण्यतः ॥४४॥ विमुच्य दुःखं सौख्याङ्गभोगानङ्गीकुरुष्व तत् । तथाय
त्तमिदं सर्वं, परीवारयशादिकम् ॥ ४५ ॥ इदं दुःशकुनारावमिथोद्वेगकरं परम् । श्रुत्वा सा विधुराऽभ्यासीद्,
धिगस्या मूढभाषितम् ॥ ४६ ॥ निन्द्येभ्योऽप्यतिनिन्द्याया, न दृष्टव्यमुखा च या । यस्याङ्गाऽपि सतां पाङ्क्ता,
धिग् साऽपि स्म विकत्थते ॥ ४७ ॥ यद्वाच्यं यदभक्ष्यं, च महापापकारणम् । उपदेश्य सदप्यस्या, अहो !
नीचजनस्थितिः ॥४८॥ किमुत्तरं करोम्यस्याः ?, मौनेन च कियच्चिरम् । मया स्थेयं ? विधेयं च, किं वा ? काऽत्र
गतिर्मम ? ॥ ४९ ॥ इति चिन्ताकुला बाला, तयाऽलापि पुनर्दृढम् । स्वस्वरूपं त्वया वत्से !, वाच्यमेवाधुना
मनाग् ॥ ५० ॥ वक्तिः सम्यग् न युक्ताऽत्रेत्यजल्पत् साऽपि कल्पितम् । श्रीवसन्तपुरे श्रेष्ठी, देवसेन पिता
मम ॥ ५१ ॥ पतिः पुनर्वसन्ताख्यः, सांयात्रिकतया मया । सार्द्धमम्बुधिमागमे, पोते मां तिमिरमग्रहीत् ॥५२॥
इति श्रुत्वाऽश्रुमिश्राक्षी, कुट्टिनी कपटे पटुः । प्राह हा ! हा ! महाकष्टमीदृग् मा भूद्विपामपि ॥ ५३ ॥ अन्तस्तु
हृष्टा तुष्टा साऽभ्यासीत्सिद्धं ममेप्सितम् । इयं सुतपसा दैवादेवीवाऽऽप्ता मयाऽर्थितः ॥ ५४ ॥ एवं विचिन्त
यन्ती सा, परिवारान्विताऽपि ताम् । आवर्जयन्ती सर्वैरन्यदा प्राब्रवीन्मुदा ॥ ५५ ॥ अङ्गीकुरु कुरङ्गाक्षि !,

विशेषवेषभूषणात् । लावण्ययौवनभीस्ते, फलेऽप्यस्तु फलेग्रहिः ॥५६॥ सती ख्यातवती स्वत्र, शीलमाजन्म निर्मलम् । हा ! निर्वाप्य कथं शीलमिव श्वपचपाटके ? ॥ ५७ ॥ पत्युः प्रत्याशया मृत्युः, साम्प्रतं नहि साम्प्रतम् । शुद्धबुद्धिः स कीरोऽपि, दूरोऽमून्मम दैवतः ॥ ५८ ॥ यद्वा स्यात्कालविक्षेपोऽप्यशुभे शुभसम्पदे । कीरोऽपि जातु मिलतीत्यजल्पत् परिकल्प्य सा ॥५९॥ मातरस्मत्कुले रीतिरियं यद्दयिते मृते । षण्मासान् पक्षिणां भक्त्या, दीनदानं च दीयते ॥ ६० ॥ ततः सौरं तु शृङ्गारकरणाद्यपि युक्तिमत् । इत्युक्तया कुट्टिनी हृष्टा, तदर्थं सर्वमार्पिपत् ॥ ६१ ॥ युग्मम् । सा शीलशालिनी शालिमुख्यसस्यकणोत्करान । अनेकांस्तनुते नित्यं, कुट्टिनीहर्म्यकुट्टिमे ॥ ६२ ॥ केकिकाकशुकक्रौञ्चकलविङ्ककपिञ्जलाः । कपोतचक्रचापाश्च, चटिका लावकादयः ॥ ६३ ॥ पक्षिणोऽन्येऽप्यनेके तत्सस्यभक्षणकाङ्क्षिणः । तत्राययुर्यावकवद्दिने दिनेऽधिकाऽधिकाः ॥६४॥ युग्मम् । तेषां त्रासभिया छन्नसर्वाङ्गाच्छादना तु सा । कृतावगुण्ठना नित्य,कणान् दत्तेऽतिदुःखिनी ॥६५॥ विश्वस्ता अपरित्रस्तास्ततस्तेऽपि पतत्रिणः । दूरादिदूरादायान्ति, कणानाहारयन्ति च ॥ ६६ ॥ मिथश्च कथयन्ति स्म, विस्मिताः सस्मिताश्च ते । नरा नराणां दानानि, ददते न तु पक्षिणाम् ॥ ६७ ॥ इदमस्याः पुनर्दानं, निदानं सर्वसम्पदाम् । दीयमानं विमानं हि, निस्समानं कथं स्तुमः ? ॥६८॥ इत्थं पक्षिगणास्तस्याः, सद्गुणोद्घोषघोषणैः । दानधर्मं घोषयन्तीव, सांरावणपरायणाः ॥ ६९ ॥ यतः—"आरोहन्ति सुखासनान्यपटवो नागान् हयांस्तत्सुपस्ताम्बूलाद्युपभुञ्जते नटविटाः ख्यावन्ति हस्त्यादयः । मासादं चटकादयोऽपि निवसन्त्येते न पात्रं स्तुतेः, स स्तुत्यो भुवने प्रयच्छति

कृती लोकाय यः कामितम् ॥ ७० ॥" अपि कार्पटिकादिभ्यः, पतिशुद्ध्यै विशुद्धधीः । वैदेशिकेभ्यः सर्वेभ्यः, प्रवृत्ते सा यथोचितम् ॥ ७१ ॥ तेन स्वामिवियुक्तेन, शुकेन भ्रमता वने । विदग्धचूडामणिना, दुःखिना शुश्रुवे स्वरः ॥ ७२ ॥ यत् काचित् कामिनी नित्य, दुःखिनी नवयौवना । नित्यमध्वप्रवृत्तेन, प्रवृत्ते पक्षिणां कणान् ॥ ७३ ॥ स ततोऽस्याः स्थितिस्थाने, सकर्णस्तूर्णमागमत् । कुसुमश्रीरिव नूनं, भाविनीति विचिन्तयन् ॥७४॥ तत्रागतः स तद्दृष्टिरपि तां चिरहिताङ्गिकाम् । अभिज्ञोऽनभिजानस्तत्पार्श्वे घूर्णिमिवाप्नुयो ॥ ७५ ॥ अस्यासन्नः स विज्ञस्तु, व्यालोक्य क्रममक्रमात् । तां निर्णीय निजां वाणीं, प्रणयेन प्रयुक्तवान् ॥ ७६ ॥ स्वामिनि ! स्व जनं किं न, प्रसन्ननयनैर्निजैः । सम्भावयसि ? भावज्ञे, मिलनोत्कण्ठुलं चिरात् ॥ ७७ ॥ अचिन्तितामृताम्भोदसागरां तां गिरं चिरम् । सा स्वकर्णपुटैः पीत्वा, परमानन्दमासदत् ॥ ७८ ॥ उद्घाट्य वदनं सोत्सवं वीक्ष्य तं शुकम् । ससम्भ्रमं निजोत्सङ्गे, रभसेन जगृहेऽथ सा ॥ ७९ ॥ तयोस्तदा द्वयानन्दबाष्पाकुलितनेत्रयोः । स्पर्द्धयेव द्वयोरासीत्, कोऽपि रोमाञ्चकञ्चुकः ॥ ८० ॥ सा तमालिङ्ग्य सस्नेहं, स्नेहपात्रं सपुत्रवत् । आलापयत् प्रियालापैरापायैरमृताम्भसः ॥ ८१ ॥ अथ प्रार्थितसञ्जाततदागमनजातया । स्वपत्यागमनप्रत्याशया प्रीताऽन्वयुङ्क्त तम् ॥ ८२ ॥ पत्युः शुद्धिं वत्स ! वेत्सि ?, सचेत् सोऽपि नेत्यवक् । निराशेव दुरालापान्, विलापान् सा व्यधात्ततः ॥ ८३ ॥ ततः कीरेण वीरेण, धीरिता भणिता च सा । सर्वमम्ब ! शुभं भावि, स्मर तद्देवतावचः ॥८४॥ पूर्वसाङ्केतिकः क्रीडाकीरोऽसावित्युदीर्य सा । दास्यानीते ततोऽक्षेप्सीत् कीरं मञ्जु पञ्जरे ॥८५॥ तमभ्यक्षीन्म

गाक्षी च, वक्षावधारि समीक्ष्य मे। भावी न वा प्रिययोगो, यदि नो तत्त्यजाम्यसून् ॥ ८६ ॥ अस्या विवेकक-
दिन्याः, कुट्टिन्याः पुरतोऽन्यथा। कथ शील मया रक्ष्यमथापक्यौ समीक्ष्य सः ॥ ८७ ॥ मा सन्दिग्धा अस-
न्दिग्धे, मौग्ध्याद्यपितसद्मने। परं कालयितव्यः प्राग्, वेश्याऽप्युक्तः कथं टलेत्! ॥ ८८ ॥ मातर्माऽतः परं
तस्मात्, सेवं कार्षीस्तव ध्रुवम्। शील निर्वाहयिष्येऽह, कुरु ज्ञानादिकं मुदा ॥ ८९ ॥ इत्थाथा साऽथ षण्मास्यां,
पूर्णायां तूर्णमासनोत्। लालाङ्गभोगशृङ्गारान्, विशोके का विचारणा! ॥ ९० ॥ दास्यादिभ्यस्ततस्तस्या, विश्व
स्याप्यद्भुतमद्भुताम्। रूपादिसम्पद श्रुत्वाऽन्यदाऽऽगात् कश्चिदिभ्यभूः ॥ ९१ ॥ उत्कण्ठिते स्थिते द्वारि, तस्मिन्
विस्मेरयौवने। दास्याऽथ तस्या विज्ञप्त, यूनोऽभ्यागमन मुदा ॥ ९२ ॥ सती मोक्षवती साऽथ, शुकोऽत्रार्थे सम-
र्पधीः। यद्वस्ति विततुच्चं ततः कीरोऽप्युवैरयत् ॥ ९३ ॥ दीनारान् वितरेत् पञ्चशतीं भेत्पोऽत्र शोसराम्।
तवैकरात्रं सोऽत्रैतु, गत्वाऽऽख्यत् साऽपि तस्य तत् ॥ ९४ ॥ द्रव्यस्यासैश्वर्यं इव, स वेश्याव्यसनी धनी। तदपि
प्रतिपद्य प्राग्, पायद्रूप्यमुपानयत् ॥ ९५ ॥ तावत् समग्राः सामग्रीः कृपाणीयधिया रयात्। कामुकस्य पृथु
र्यामातिक्रमार्थं पृथक् २ ॥ ९६ ॥ दासीर्वक्षाः शिक्षयित्वा, रहः कीरेण कारिताः। मीत्याऽऽगताय कुट्टिन्यै, स
द्रव्य देयपर्वो ॥९७॥ विमोपक ॥ अभ्यङ्गोद्वर्तनस्नानैर्यामिन्या याममादिमम्। अथाद्यभूमौ क्षणदास्या तस्या
स्ययाहयत् ॥ ९८ ॥ एवं भूमौ द्वितीयायां, द्वितीय याममादरात्। अशनैः पानकैः खाद्यैः, स्वाद्यैश्च विविधैर्वरैः
॥ ९९ ॥ तृतीयायां तृतीय तु, गीतवाद्यादिकौतुके। तुर्ये नृत्यादिभिस्तुर्यांतुर्यायां सुधि चाद्भुतात् ॥ २०० ॥

गमी नगाग्रमाश्रेणयियशः पशुपत्तुन । विमातायां विभावर्यामावासाभिरवास्यत ॥ १ ॥ तस्यास्तु भूमौ सद्य
ग्यां, तस्तुणा दुर्दुर्गिण्यपत् । पत्त्वेण्या इव कापि, नैक्षिष्ट मुक्यमप्यसौ ॥ २ ॥ यिडालः शिक्यकाक्रष्ट, इव
काल्च्युतः कपिः । वायाग्रा पूतकृज्जान्तस्ततो दृस्तो जघर्प सः ॥ ३ ॥ मुधा ग्रम्यपथ्यपास्स्वेष्टकार्यप्रशाम सो
परैः । सम्पापोऽपि व्यार्थां नाक्यमूत्ता घृष्टो हि मौनभाग् ॥ ४ ॥ अन्येषामपि यथेष, मवेषूनां विडम्बना ।
तवा गे समता मे स्नास तु य पञ्चभिः सह ॥ ५ ॥ व्यायञ्जिति स धूर्तास्मा, स्वभान्तरप्यनीक्षितम् । रूपादि
तस्या माशसीत्, पुरो यूनां मुहुर्मुहुः ॥ ६ ॥ ततस्तद्गुणानोऽन्येऽप्युत्सुका यान्ति तद्गृहम् । पश्यन्ते च तथै
पाहो !, कामिनां सुन्दमपता ॥ ७ ॥ मिथ सम्भाषितस्यापि, वञ्चनस्याप्रकाशनात् । तुल्योक्तीनां तदा तेषां,
पूर्वमेव्यमियाभयत् ॥ ८ ॥ तस्यामेकरतीयाशा, सार्थका शुककल्पिता । एकप्रकारानुभवात्, ख्याता तेष्वपि
मार्गका ॥ ९ ॥ एव निरर्गलप्रम्पमास्या मीता पणाङ्गना । स्वशीलपालनात्साऽपि, काऽपि कीरस्य धीरहो ! ॥१०॥
यनीषणोरपि मिथः, स्वार्थसिद्ध्या द्वयोस्तयोः । माननीयः स भूपाऽभूत्, माज्ञो मान्यो न कस्य वा ? ॥ ११ ॥
गानाल्पा महत् न्ममा सेत्य कथमन । सुमुग्वी शुकसाहाय्यात्, काल वहुमयाहयत् ॥ १२ ॥ इतश्च धीर
सेनो रिणतटे सफलकः क्रमात् । क्षिप्तः सप्तदिनैः पुण्यकर्मणेव स वायुना ॥ १३ ॥ स नष्टचेतनः काष्ठपतित
स्तत्र दैवत । ददृशे ग्यदमाऽऽसयनगरव्यवहारिणा ॥ १४ ॥ दयालुनाऽमुनाऽऽनीय, स्वधाम्नि विविधौषधैः ।
सज्जीकृत्य च वृत्तान्तमयं यावदपृच्छत ॥ १५ ॥ तावदेव स्मृतमाप्यावस्थः सन् धीरव्यमास्तितः । सास्पत्ता

दूरणेनेवामयद्दाण्याम्बुपूर्णदृग् ॥ १६ ॥ व्यलापीच ततस्तेनाचिन्ति नून महेभ्यभूः । कोऽप्ययं पृच्छया पूर्वं
दुःख स्मृत्वेदृशोऽजनि ॥ १७ ॥ तदलं तुच्छयाऽस्यैतत्पृच्छया हि मयेच्छताम् । अतुच्छतां स्वज्ञातां चाक्या-
न्ति सल्लक्षणान्यपि ॥ १८ ॥ यतः–"अभणतायिय्य नज्जति सुपुरिसा गुणगणेहिं निअएहिं । किं वुज्झति मणीओ
जाउ सहस्सेहिं घिप्पति" ॥ १९ ॥ सैव विचिन्त्य कृत्यज्ञस्तमपुत्रः पविश्रधीः । इय राज्यपदे पुत्रपदे सद्यो न्य
पीविशत् ॥ २० ॥ तस्यायकृत्रिमप्रेमा, सोऽप्यकृत्रिमपुत्रवत् । छेकानां छेकता सैव, यत्कार्यं समयोचितम्
॥ २१ ॥ चित्ते प्रभूते जरसाऽभिभूते श्रेष्ठिनि क्रमात् । स्वःपथे पथिकीभूते, सोऽभूत्तद्धनप्रभुः ॥ २२ ॥ ततोऽ-
प स्वभिप्रायशुद्ध्यै, वाणिज्यव्याजतः सुधीः । सभ्रमी बभ्रमीति स, देशाद्देशं पुरात्पुरम् ॥ २३ ॥ भवे भव्य
इव भ्राम्यन्नुमय वाञ्छितप्रदम् । पुण्यैरगण्यैस्तु ततः, स प्राप श्रीपुर पुरम् ॥ २४ ॥ तस्मिन् प्रविशतस्तस्य,
प्रशस्यशकुनादिभिः । काऽप्यासीज्जीवितेशा सा, जीविताशेव रोगिणः ॥२५॥ मध्येपुरं प्रविष्टश्च, निविष्टः कापि
एदके । अपृच्छत्कुस्तुकः कश्चित्स्वरूप तत्पुरस्य सः ॥२६॥ सोऽप्याह नपसारोऽत्र, राजेन्द्रः श्रीपुरे पुरे । व्यवहारिण
श्चानेके, शुद्धैव व्यवहारिणः ॥२७॥ कुम्भापेर्यागृहे चैका, युवतिर्पुंचचेतसाम् । साक्षादेकरतिः काचिदत्रास्त्येकर
तिः श्रुता ॥२८॥ सौवर्णपद्मशय्याऽपि, तत्सङ्गस्त्वेकरात्रिकः । श्रुण्वन्नित्यादि सोऽप्यासीन्नास्तियं सैव संभवेत् ॥२९॥
सा वा स्यात्कथमीदृक्षेत्यमुना सशयालुना । निर्णीतमप्स्फुरणैर्मिलेद्वेवाथ सा कचित् ॥३०॥ यदुक्तपिपा–"सिरफु
रणे किर रज्ज पियमेलो होइ बाहुफुरणंमि । अच्छिफुरणंमि अ पिअं अहरे पिअसङ्गमो होइ ॥ ३१ ॥ गच्छेछ

इत्थिलाभो कण्ठेसु अ सोहणं कुणइ सयं। नेत्ताते धणलाभो उट्ठे विजय पिआणाहि ॥ ३२ ॥ पिट्ठे पराजओ-
विउ मोगो अंसे तहेय कंठे अ। हत्थे लाहो विजओ वच्छे नासाइ पीई अ ॥ ३३ ॥ लाभो थणेसु हिअय
हाणी अंतेसु कोसपरिवुड्ढी। नाभीइ थाणभंसो लिंगे पुण इत्थिलाभो अ ॥ ३४ ॥ फुळेसु सुओप्पत्ती ऊरूहि
मघुणो अरिट्ठं तु। पासेसु पल्लहस्स वाहणलाहो फिजे भणिओ ॥ ३५ ॥ पायतले फुरणेणं हवइ सलाभ
नरस्स अद्धाण। उवरिं च थाणलाभो अघाहिं पोयमज्जाणं ॥ ३६ ॥ पुरिसे स य महिळाए पुरिसस्स य दाहिणा
अनुत्तफला। महिलं सपुरिसमहिलाण झुत्ति वामा अनुत्तफला ॥ ३७ ॥" तां निर्णिनीपुरेपोऽथ, कुम्भाण्डमुपा-
गतः। कुम्भाये मयवे मह्यपवे स्वां मणिमुद्रिकाम् ॥ ३८ ॥ अथाङ्गस्फुरणात्तस्या, निर्णीय प्रियसङ्गमम्। पाव
प्रसोऽभवत् कीरः, कुमार तावदैक्षत ॥ ३९ ॥ तां च वर्धापयामास, प्रियस्यागमनेन सः। क्षिप्रं निर्वापयामास,
तस्याश्च विरहानलम् ॥ ४० ॥ शृङ्गारं कारयामास, सार रोमाञ्चितां च ताम्। तास्याऽथाकारयामास, सस्म्पां
मुषि त कुत्त ॥ ४१ ॥ भाग्ययोगाद्वियोगान्धकूपादिव स भूपभूः। वधैरुद्वैरथारोहत्, प्रापिवान् प्रेप्सित पदम्
॥ ४२ ॥ स च चातुर्यपेटीनां, चेटीनां प्रतिपत्तिभिः। अनल्पमुदित्यतल्पकल्पे तल्पे निविष्टवान् ॥ ४३ ॥ तदा
स्वमन्वमन्याक्षासीक्षापकासने हयक। निषण्णाऽधोमुखी दध्यावीहक सा साश्रुहक सुहक ॥ ४४ ॥ अस्मिन्
स्थाने स्थिताया मे, प्रस्थाने सद्गुणप्रियाम्। प्राणनाथः कथ हा पिक, प्रक्ष्येष्यति विशुद्धताम् ? ॥ ४५ ॥ अनु-
भूत महद्दुःखं, न मे कावकुस्ते तथा। निन्द्यास्थानमवस्थानमिव दैवकृत यथा ॥ ४६ ॥ उक्तं चान्योक्तिकृता–

“दृक्छेदे न मे दुःखं, न दाहे न च घर्षणे । एतदेव महद्दुःखं, गुञ्जया सह तोलनम् ॥४७॥” तां तथा दुः-
स्थितावस्थां, निध्याय ध्यायति स्म सः । नेयं नाम पणस्त्रीव, कुलस्त्रीव तु लक्ष्यते ॥४८॥ सत्यं च दयिता
किं मे, धिग् धिग् वा सा महासती । किमेतद्धामनामापि, चाकरीव वच सहेत् ? ॥४९॥ तद्रूपा काचि-
द्-न्यैव, दुर्दैववशतस्तु सा । को वेद क्व गता क्वास्ति, नास्ति वा क्वाऽसि हा प्रिये ! ॥५०॥ स्मृतदुःखं तमन्येव,
न्यस्तमुखं वीक्ष्य पक्षिराट् । स जगाद विषादोऽयं, कः प्रमोदपदेऽद्य वाम् ? ॥५१॥ सुखेभ्यूर्ध्वमुखः प्रेक्ष्य, प्रे-
क्षायान् पञ्जरे शुकम् । अयं क्रीडाशुकः किं मे ?, यावदेव व्यतर्कयत् ॥५२॥ तावदागात्तदुत्सङ्गे, रङ्गेणास्तु-
तसुकः शुकः । उपलक्ष्य च सम्भाष्य, स्नेहात्तेनाप्यपृच्छ्यत ॥५३॥ वत्स ! वेत्सि प्रियाशुद्धिं, कामपीत्यथ सोऽ-
प्यवक् । स्वामिन् ! कोऽयं भ्रमस्तेऽद्य, देवीव पुरतः स्थिता ॥५४॥ ॥ तन्निशम्य कुमारः स्माह, निकामं श्या-
मलाननः । चित्तान्तश्चिन्तयामास, धिगहो चरितं स्त्रियाः ॥५५॥ इयं तस्य महीभर्तुर्दुहिता मम च प्रिया ।
अप्रष्टव्यमथाभव्य, वेश्यात्वं कथमाचरेत् ? ॥५६॥ माननीयः सतां पुत्रस्थानीयश्च शुकोऽप्ययम् । कारयेद्वी-
दृशं कर्म, धिग् द्वयोर्निर्विवेकताम् ॥५७॥ तदस्या अतिनिन्द्याया, न युक्तं दर्शनाद्यपि । विषादविषवाहेन, पा-
तवेयमवादि सः ॥५८॥ उत्तालस्तुमुलस्तावद्भूपालभवनेऽभवत् । तां त्याज्यामिव तद्राजास्यवस्था प्राक् तत्र सो-
ऽप्यगात् ॥५९॥ युग्मम् । अद्राक्षीच्च स कौश्मपन्नं पत्नं धराधवम् । फेनायमानं भूपीठे, लुठन्तं चण्डजन्तुवत् ॥६०॥
अथ संभाव्य तद्दिव्यमक्रियन्त प्रतिक्रियाः । मन्त्रिभिर्मन्त्रतन्त्राद्या, नैकास्तास्त्वभवन् वृथा ॥६१॥ अथ कण्ठ

गतप्राणे, निष्प्राणे रमणे सुखः । किंकर्तव्यविमूढेषु, मौढेष्वपि च मन्त्रिषु ॥ ६२ ॥ हाहारवपरे पौरे, निकरे परि
तोऽपि च । दिव्याविरभवद्दिव्या, वाग् युगान्ताम्बुगर्जिवत् ॥ ६३ ॥ युग्मम् ॥ भो ! भो जनाः ! निजनिज,
स्थानं यात द्रुतं द्रुतम् । पापः पापफलं प्रेप, लम्भनीयोऽधुना सुखम् ॥ ६४ ॥ भूपोत्क्षेपादिमत्स्याऽपि, चिन
योक्याऽपि मन्त्रिणाम् । अदृष्टः कोऽप्यसौ कोपाटोपो यावन्न शाम्यति ॥६५॥ तावत्परोपकारैकरतिः प्रकृतिसत्त्व
मः । कुमारः स्माह तं स्वामिन् !, मुञ्च मुञ्च कृपां कुरु ॥६६॥ युग्मम् । प्रसीद सीदति जनेऽस्मिन्नदोषे विपादिनि ।
प्रत्यक्षीभूय चाख्याहीत्याख्याते क्षितिभृत्सुता ॥ ६७ ॥ वेतालचक्रकरालः कोऽप्याविर्भूयाभ्यधात्सुर । कथं मोच
यसे धीर !, वीरसेन ! निजं रिपुम् ॥ ६८ ॥ अरिकेशरिराजेन्द्रकुलाधार ! कुमार ! किम् ! न स्मरस्येष सद्वाम्भो,
पुरा तेऽपहरिष्यति ? ॥ ६९ ॥ मासोऽयं यां विवाहे तौ, दृष्ट्वा लुब्धस्तथा छलात् । विधया पशुरूपिण्या, ह्यस्य
त्वां व्यसनेऽक्षिपत् ॥७०॥ दुष्टाः कष्टफलं स्पष्टं, दृष्टं विना न मन्यते । उक्त्वेति मुद्गरेणोच्चैस्तं प्रहर्त्तुं वधाय सः
॥७१॥ तत्राऽन्तरे कुमारेणाधिरैयैव प्रवेशिना । पादयोः पतितेनोपशमितः कथमप्यसौ ॥७२॥ लोकोऽस्तोकोऽपि
विस्फेरविस्मयश्च व्यचिन्तयत् । शत्रोरपि परित्राणे, धीरहो ! धीरचेतसः ॥ ७३ ॥ स्वस्वीय स्वहितः स्वस्याश्रितो
वा कैर्न रक्ष्यते ? । विपक्षरक्षादक्षास्तु, त्रिजगत्यपि दुर्लभाः ॥ ७४ ॥ परावस्थोऽथ तद्रूपं, स्वरूपं दिव्यरूपिणी ।
स्फुटीकृत्यावदद्देवी, भो भोः शृणुत तात्त्विकम् ॥ ७५ ॥ इमे वज्रमया बन्धा, निर्बन्धाः क्रुद्धया मया । कृता-
वद्धिष्यन्ति महासतीहस्तेन नान्यथा ॥ ७६ ॥ तत्राऽऽजन्म या शुद्धा, प्रसिद्धा सा महासती । स्वहस्तधारिणा

दुःखवारिणा मोचयस्वमुम् ॥ ७७ ॥ यच्च पद्मदेव्यायास्तथा न स्वमवत्फलम् । दुःसंभवा हि मनसा, वि
शुद्धिः शीलशालिने ॥ ७८ ॥ तवत्प्रथमया तासु, न्यक्कृतास्वखिलास्वपि । का सती स्यादिति शुद्धेति, संशयाने
जनेऽखिले ॥ ७९ ॥ देव्युवाच स्वापवादस्फेटायोत्सर्गकारिणी । कुम्भकायेऽस्ति श्लाघ्याऽहो ! कुसुमश्रीर्महास
ती ॥ ८० ॥ युग्मम् ॥ कुमारमन्त्रिप्रमुखाः, सर्वे गर्वेण वर्जिताः । स्वय गत्वा श्रेष्ठिसद्मै, महा आह्वानयतु ताम्
॥ ८१ ॥ विस्मिता देवतावाक्यात्तेऽपि तत्र गता द्रुतम् । आह्वयन् बहुमानात्तां, धीरोऽपि प्रैरयत्तया ॥ ८२ ॥
देवताऽप्येत्य तत्रोचे, बाले ! बालेन्दुनिर्मले ! । शीललीलायितं किञ्चित्, कौतुकीयत् मद्दर्शय ॥ ८३ ॥ ततः सा
पारितोत्सर्गा, निसर्गादपि वत्सला । उपक्षमापतिं प्रापदिव्यनव्यमहोत्सवैः ॥ ८४ ॥ मनसा वचसा कायेनाप्या
जन्म न चेत्परः । अकामये कुमारास्तत्सिद्धिरत्रास्तु माऽन्यथा ॥ ८५ ॥ इत्युच्चैः प्रोच्य सा तोयच्छटयाऽच्छोटयच्छुपम् ।
पन्याश्च जीर्णतृणवत्पटदिति तुत्रुटुः ॥ ८६ ॥ आकाशात्पुष्पवृष्टिश्च, सद्योऽभूत्सोपवृष्टिवत् । शीलेन निष्कल
ङ्केन, किं किं वा दुर्लभं नृणाम् ? ॥ ८७ ॥ स्वस्थीभूतस्ततो भूतधात्रीशः स प्रभूतमुत् । श्रीजावियादविस्मयर-
सैश्च विवशोऽप्यभूत् ॥ ८८ ॥ देव्यावेश्मस्थिताऽप्येषा, प्रासरेसा सतीत्वहो । कथमित्थं कुमारोऽथ, देवीं
पप्रच्छ वत्सलाम् ॥ ८९ ॥ ततस्तया समस्तेऽपि, वृत्तान्ते कथितेऽद्भुते । विप्रीयमाणाः सर्वेऽपि, श्लाघन्ते स्म
शुकं च ताम् ॥ ९० ॥ केच किमसत्सान्निध्य, विदध्यादिति विस्मितौ । कुसुमश्रीकुमारौ तु, देव्युवाच प्रसाद
भृत् ॥ ९१ ॥ सुभगौ मां युवां वक्षौ, नोपलक्षयथः कथम् ? । पद्मदेव्यस्मि कुसुमपुरे प्राक् तोपिता त्वया

॥ ९२ ॥ तदादि वत्स ! वात्सल्याद्वत्सलाऽम्बेव तेऽनुगा । सान्निध्य विदधानाऽस्मि, त्वत्पुण्यैर्वशवर्तिनी ॥ ९३ ॥
सकृत्स्वामन्मेरुकृत्त्यानीतः पोते मया तदा । तथापि संनिधास्ये ते, सर्वकार्येषु सर्वदा ॥ ९४ ॥ इत्यदु स सु
यक्षात, तर्वा प्राग्दुष्कृतेः फलम् । न शक्यतेऽन्यथा कर्तुं, शक्रैरपि कुतो मया ? ॥ ९५ ॥ यतः–"शक्ति
बुद्धिः परेषां हि, कोपस्यावर्तनक्षमा । शक्रोऽपि कुपितं कर्म, नैव सान्त्वयितुं पटुः ॥ ९६ ॥" अतःपरं परं
भाग्य, परंतप ! निरन्तराः । निरन्तरायाः मासोऽसि, चिरं सम्पत्परम्पराः ॥ ९७ ॥ जीवितोपकृतिक्रीतः, प्री
तस्तस्मै स भूपतिः । समर्पिस्वा ददौ राज्यं, स पुनर्नाग्रहीत्तदा ॥ ९८ ॥ पत्न्या समुरसा च, सराज्ञ जग्राहे सु
तः । सन्तो हि सन्तोषजुषः, प्रस्तेष्वप्यन्यवस्तुषु ॥ ९९ ॥ स वीरसेन तत्प्रणयितेन च सत्कृतः । रम्यतः कति
चित्तत्र, दिनांस्तस्थौ रसाभरात् ॥२००॥ तमापृच्छ्य नृपं सोऽथ, प्रतस्थे स्वपुर प्रति । वेगीकृतविमानस्थो, निस्स-
मानमहर्द्धियुक् ॥१॥ अथ च–वीरसेनस्य सैन्य तत्, स्वपुरोद्यानमागतं । तस्यानागमनात्तत्र, हृदि दुःखमथाकृषाम्
॥२॥ वीरसेन विना सेना, शून्या तनुरिवात्मना । तस्थौ कथञ्चित्तत्रैवापेक्षमाणा तदागमम् ॥ ३ ॥ पतद्व्यतिकरं
दुःखाकरं श्रुत्वा पिताऽप्यभूत् । दुःखाद्वयमयः पुत्रशोकात् को वा न तप्यते ? ॥ ४ ॥ जनोऽन्यदा तदागच्छ-
द्दिव्यप्रेक्षणकक्षणम् । दिव्यं विमानं वीक्ष्योच्चैर्निःघोषोऽपि विसिष्मिये ॥ ५ ॥ दिष्ट्या वर्द्धाप्यसे देव !, तव
सूनुः समेत्यधम् । इत्यादि वर्धापनिकोत्सव कीरोऽकरोत्तदा ॥ ६ ॥ अथो पृथूत्कण्ठितेन, स्वसैन्येन पुराद्बहिः ।
यूथेश इव यूथेन, संजग्मे जगतीशसूः ॥ ७ ॥ प्रावेशयत ततः पित्रा, पुत्रश्चित्रकृदुत्सवैः । रामो दशरथेनेव,

सधभूकः पुरं निजम् ॥ ८ ॥ नव्यजन्मोत्सवेनेथ, पुत्रस्यागमनेन सः । आसादयधमानन्दं, स तु वाचामगोचरः ॥ ९ ॥ ततस्तया देवतया, तद्वृत्ते निवेदिते । क्षेत्राद्भुताभ्यां भूपाणा, रस सङ्कीर्णमाप्नुवन् ॥ १० ॥ अथान्यदा मुदाऽमुष्मै, कुमाराय निजं पदम् । प्रदाय दीक्षामादाय, क्ष्मापः प्राप परं पदम् ॥ ११ ॥ अमान निस्समानं तन्महिमानं च शुश्रुवान् । परमानन्ददांस्तस्मै, स्वराज्यं श्वशुरोऽप्यदात् ॥ १२ ॥ स्वभारमारोपितवाक्षय सारोऽपि भूपतिः । आगत्य गृह्यवत्तस्मिन्, लोकः पूजितपूजकः ॥ १३ ॥ देव्यप्यवादीत्कुसुमपुरे यः प्राक् नरेश्वरः । स दुष्टो दुर्नयी दुर्धीः, प्रायस्तत्राभ्र तादृशाः ॥ १४ ॥ इति तन्मत्सराद्वत्स !, चरसरात्परतः पुरम् । तन्मयोद्वासित शाला, परं शून्या न चौरयुक् ॥ १५ ॥ स्वामथाभ्यर्थये तस्मिन्, नगरे भव भूविभुः । विद्या राज्यं च दीयेते, योग्यायैवेति हि स्थितिः ॥ १६ ॥ इत्थं तदुद्वासनोत्थोऽपवादोऽप्यपयाति मे । श्रुत्वेति प्राक् शुकप्रोक्तसंवादि प्रत्यपादि सः ॥ १७ ॥ दिव्यश्रीभिर्भासितं तदेव्या प्राग् वासितं ततः । तदाख्योत्पन्नशाकेणा लक्ष्मके चौरियामुना ॥ १८ ॥ एवं तस्याभवच्छ्रस्या, प्राज्यराज्यचतुष्टयी । चतुष्टयीव श्रीः श्रेष्ठा, दिक्पालै रुपढौकिता ॥ १९ ॥ वशीकृतापाः सुकृतैर्देवतायाः प्रभावतः । निष्कण्टकत्वमेवासीत्साम्राज्येच मिराज्यवत् ॥ २० ॥ केवली कनकसालः, पुरस्योपवनेऽन्यदा । आययौ निर्ययौ चैव, वन्दितुं सपरिच्छदः ॥ २१ ॥ नत्वा स्तुत्वा च तस्यासौ, तत्त्वातत्त्वार्थदेशिनीम् । श्रवःप्रवेशिनीं चक्रे, देशनां क्लेशनाशिनीम् ॥ २२ ॥ सोऽथ प्रस्तावयामास, प्रस्तावे संशयं निजम् । नेतर्नूतनयोगे नौ, वियोगः केन कर्मणा ? ॥ २३ ॥ अविघातादिकष्टं च,

कुतोऽभूत् ? किञ्च किंकुलः । वेद्येति निष्कलङ्कायाः, कलङ्कः कुसुमश्रियाः ॥२४॥ युग्मम् । अथादिदेश भगवान्, केवली के बलीयसा । अल्पीयसाऽपि विषयस्कर्मणा नेह जज्ञिरे ? ॥ २५ ॥ हास्येनाप्यर्जित कर्म, मर्माविद्धच काण्डवत् । सर्वथाऽनर्थदण्डोऽयमार्यैस्तन्निनिवार्यते ॥ २६ ॥ युवाभ्यां हि युवभ्यां प्राग् भवे कौतुकमाश्रितः । यथाऽर्ज्यते स्म दुष्कर्म, सकर्णाकर्ण्यतां तथा ॥ २७ ॥ सम्मेतशैलतलहट्टिकायां ग्रामसत्तमे । क्षेमङ्करः सार्थनामा, ग्रामाध्यक्षो भवानभूत् ॥ २८ ॥ तत्र च सद्गुणश्रेणिधारिणी धारिणीत्यभूत् । इय ते वल्लभा प्राणवल्लभाऽतिशुभाशया ॥ २९ ॥ शुद्धश्राद्धौ समृद्धौ तौ, द्वावपि भद्रयाऽधिकौ । नैकयात्रिकलोकस्यातुल्यवात्सल्यकारिणौ ॥ ३० ॥ तीर्थमार्गे प्रपादानदायिनौ दीनतायिनौ । शुद्धाक्षयकृपाभावैः, सुपात्राराधिनौ मुदा ॥ ३१ ॥ भाग्यचतुर्विधाहारप्रत्याख्यानविधायिनौ । सचित्तपरिहारेण, सकृदाहारभोजिनौ ॥ ३२ ॥ पञ्चपर्व्यां चतुष्पर्व्यां, त्रिपर्व्यां च विशेषतः । आरम्भवर्जिनौ ब्रह्मपोषधोपोषणार्जिनौ ॥ ३३ ॥ दानादिभिश्चतुर्भेदं, विविधधर्मभावरात् । आराध्यन्तौ धार्मिकाणामीयतुः श्लाघनीयताम् ॥ ३४ ॥ पञ्चभिः कुलकम् ॥ तस्य बन्धुः स्निग्धमुग्धोऽनुरूपां भिषमञ्जरीम् । कनीं कनीयानन्येद्युः, परिणिन्ये परैर्महैः ॥ ३५ ॥ ग्रीष्मे ग्रीष्मेऽन्यदा रात्रौ, तौ नवोढौ वधूवरौ । गृहोद्याने दीर्घिकायां, जलक्रीडार्थमीयतुः ॥ ३६ ॥ युक्तेन बन्धुना स्नेहसिन्धुना प्रेमहास्यतः । अकस्मातावपासेतां, तत्र तद्दीर्घिकोदके ॥ ३७ ॥ न यथाप्यधिक दूनौ, तावद्भूमोदकाभयात् । तदभ्याकस्मिकीं कामभ्याहूतां व्याकुलास्मताम् ॥ ३८ ॥ क्षेमङ्करेण तत्क्रीडापरेणैतदभ्यकारि च । तत्कुतूहलकारिण्या, धारिण्या

ऽप्यन्वमन्यत ॥३९॥ ताभ्यां तथाऽन्धकरणेऽन्धकारे द्रौ पृथक् पृथक्। मुक्तौ ततो वियुक्तौ तौ, क्षणं जातौ भयद्रुतौ
॥४०॥ अस्मुवार च शृङ्गार, कारयित्वाऽथ धारिणी। देवरस्य प्रियां रूपमञ्जरीं प्रियमञ्जरीम् ॥४१॥ निवेश्य मुग्धां
सौधान्तरम्यधाद्देवर रह। देवरागच्छ गच्छेह, वेश्यां स्वं पश्य पश्य च ॥४२॥ युग्मम्। सोऽप्यागतः स्वकवधूं, वीक्ष्य
मन्वाक्षद्युःस्वमागा। न प्रेक्ष्य साऽप्यमून्दूरिखेदमेवखिला प्रिया ॥४३॥ इति कौतुकमात्रेण, मात्राधिकविपाकसूत्।
क्षेमङ्करधारिणीभ्यां, सञ्चित दुष्कृत कियत् ॥ ४४ ॥ हास्यमात्रेण को नाम, दोष इत्यवहीलनात्। नालोचितं
गुरोस्ताभ्यां, मतिक्रान्तं च नैव तत् ॥४५॥ सम्यग्धर्मार्जितानन्तसुकृतौ तौ च तद्भवम्। क्रमात्समाप्य सौधर्मेऽ
भूतां चारुसमौ सुरौ ॥ ४६ ॥ ततश्च्युत्वाऽवतीर्णौ तौ, पृथग् राजकुले युवाम्। युवयोः प्राग्भवस्नेहात्पाणिमह
महापमूत् ॥ ४७ ॥ लघ्वयान्धयजीवोऽपि, धर्ममाराध्य किञ्चन। देवतादिभवान् भ्रान्त्वा, अज्ञे धनपतिः स तु
॥ ४८ ॥ तयामूत्प्राग्भवाभ्यासात्स्नेहस्तेन सह क्षणात्। दीर्घिकायामक्षिपस्त्वं, न तस्य सोऽपि वारिधौ ॥४९॥
पूर्वार्जितानुसारेण, नवयोर्युवयोरपि। वियोगोऽभूत्तथैवास्याः, स्यात वेदपात्रमप्यहो! ॥ ५० ॥ स्वल्पमप्य
र्ज्यते जीवैः, प्राग्भवे कर्म यद्यपा। तस्तपा वेद्यते हन्त!, पुरोऽनन्तगुणाधपि ॥ ५१ ॥ चतुर्विधस्य विधिवद्-
मेस्याराधनाच ते। देव्या सहाभ्रसानां, राज्यानां च चतुष्टयी ॥ ५२ ॥ इत्याकर्ण्योभयाकर्णी, सकर्णौ साधु-
भावपि। जातजातिस्मृती पूर्वं, सर्वं सस्मरतुर्मेघम् ॥ ५३ ॥ निर्वेदाच प्रपेदानो, तौ आद्धत्वामसीम्। चि
शिष्य सर्वथाऽनर्थदण्डस्यागमत पुनः ॥ ५४ ॥ चतुर्विधं विशुद्धधीर्य, धर्ममाराध्य तौ चिरम्। प्रान्तेऽनशनतः

प्रासादच्युते ग्रैवशीं श्रियम् ॥ ५५ ॥ च्युत्वा यातौ विदेह् तौ, निस्संदेह महर्द्धिताम् । लब्ध्वा शुद्धाऽऽर्हत धर्मं, भाविनौ शिवगामिनौ ॥ ५६ ॥ अन्यच्च धर्मे विहितेऽप्यनर्थे व्यक्तस्य शस्त्रावपि किञ्चिदेयम् । मयण्डवर्णं परिभाव्य भव्यास्तस्यागतः प्राप्य सुखितां श्रयध्वम् ॥ १५७ ॥ ॥ इत्यष्टमव्रते वीरसेनकुसुमश्रीदृष्टान्तः ॥

इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ गुणव्रताधिकारस्तृतीयः ॥ ग्रन्थाग्रम् ५२३१ ॥

---

उक्तानि त्रीणि गुणव्रतानि, सम्प्रति चत्वारि शिक्षाव्रतानि प्रस्तुतानि, तेषु च प्रथमं सामायिकव्रतं सूत्रतस्तु नवमं, तत्रावश्यकचूर्णिपञ्चाशकचूर्णियोगशास्त्रवृत्त्याद्युक्तो विधिः– इह श्रावको द्विविधः–ऋद्धिमानऋद्धिकश्च, तत्र योऽनृद्धिकः स चतुर्षु स्थानेषु सामायिकं करोति–जिनगृहे साधुसमीपे पोषधशालायां स्वगृहे वा, यत्र वा विश्राम्यति निर्व्यापारो वा तिष्ठति तत्र च सर्वत्र, यदा च साधुसमीपे करोति तदाऽयं विधिः–यदि कस्मादपि भयं नास्ति केनचिद्विवादो वा नास्ति ऋणं वा न धारयति मा भूत्तत्कृताकर्षणापकर्षणनिमित्तश्चित्तसङ्क्लेशः, यदि च निर्व्यापारोऽस्ति तदा स्वगृहे सामायिकं कृत्वेर्यां शोधयन् सावद्यां भाषां परिहरन् काष्ठलेष्ट्वादिना यदि कार्यं तदा तत्स्वामिनमनुज्ञाप्य प्रतिलिख्य प्रमार्ज्य च गृह्णन् खेलसिङ्घाणादीकांश्चाविवेचयन् प्रत्युपेक्षितप्रमार्जितस्थण्डिले वा विवेचयन् एवं पञ्चसमितित्रिगुप्तियुक्तो नैषेधिकीपूर्वं साध्वाश्रयं गत्वा गुरूंस्त्वा

गुरुसमक्ष यथाविधि सामायिकदण्डकोच्चारादि कृत्वा यथाज्येष्ठमाचार्यादीन् वन्दते पुनरपि गुरुं वन्दित्वा प्रत्युपेक्ष्य निविष्टः शृणोति पठति पृच्छति वा, एवं चैत्येष्वपि द्रष्टव्य—यदा तु स्वगृहे पौषधशालायां वा सामायिकं गृहीत्वा तत्रैवास्ते तदा गमनं नास्ति, यस्तु राजामात्यश्रेष्ठ्यादिर्महर्द्धिकः स गन्धसिन्धुरस्कन्धाधिरूढश्छत्रचाम राविराजालङ्करणालङ्कृतो हास्तिकाश्वीयपादातिरथकट्यापरिकरितो भेरीभाङ्कारभरिताम्बरतलो वन्दिवृन्दकोलाहलाकुलीकृतनभस्तलोऽनेकसामन्तमण्डलेश्वराहमहमिकासम्प्रेक्ष्यमाणपादकमलः पौरजनैः सश्रद्धमङ्गुल्योपदर्श्यमानो मनोरथैकपदस्पृश्यमानस्तेषां सेवाञ्जलिबन्धान् लाजाञ्जलिपातान् शिरःप्रणामांश्चानुमोदमानोऽहो ! धन्यो धर्मो य एवंविधैरप्युपसेव्य इति प्राकृतजनैरपि श्लाघ्यमानोऽकृतसामायिक एव तीर्थप्रभावनाहेतो जिनालय साधुवसतिं वा गच्छति, तत्रागतो राजककुदानि छत्रचामरोपानन्मुकुटखड्गरूपाणि परिहरति, आ वश्यकचूर्णौ त्वेवमुक्तम्–"सामाइअ करिंतो मउडं न अवणेइ, कुंडलाणि नाममुद्दं पुप्फतंबोलपावारगमाइ वोसिरइ" त्ति, ततोऽसौ जिनार्चनं साधुवन्दनं वा करोति, ततश्च सामायिकं, सामायिकं च त्यक्तसावद्यकर्मणो मुहूर्त्तं यावत्समताभावो, यदाहुः—"सावज्जजोगविरओ, तिगुत्तो छसु संजओ। उवउत्तो जयमाणो, आया सामाइअं भवे ॥ १ ॥ जो समो सव्वभूएसु, तसेसु थावरेसु अ। तस्स सामाइअं होइ, इइ केवलिभासिअं ॥ २ ॥" सामायिकशब्दार्थश्च त्रिधाश्चतुर्धा, यदाह निर्युक्तिकृत्–"साम १ समं च २ सम्म ३ इग मिइ सामाइअस्स एगट्ठा। नाम ठवणादविए भावमि अ तेसि निक्खेवो ॥ १ ॥ महुरपरिणामसामं १ समं तुला २

सम्म स्रीरम्मकुई । वोरे हारस्स चिंई इगमेआइ तु वयमि ॥ २ ॥ आवचमाइ परवुक्खसमकरणं १ रागवो समज्झत्थ २ । नाणाइत्तिगं ३ तस्साइ पोअणं भावसामाई ॥ ३ ॥" तच "करेमि भंते ! सामाइअं"मित्यादि दण्डकोच्चारपूर्वकं कर्त्तव्यं, उक्तं चावश्यकनिर्युक्तिबृहद्वृत्तौ सामायिकाधिकारे श्रीहरिभद्रसूरिभिः—"गृहस्थोऽपि गृहस्थसामायिकं "करेमि भंते ! सामाइअं सावज्जं जोगं पच्चक्खामि जाव नियमं पज्जुवासामि दुविहं तिविहेणं" इत्येवं कुर्यादिति, ननु त्रिविधं त्रिविधेन प्रत्याख्यानस्य को दोषः ?, उच्यते, पूर्वप्रवृत्तकृष्यादिकर्मारम्भेष्वनुमत्यनिषेधेन भङ्गप्रसङ्ग एव, नन्वागमे त्रिविधत्रिविधेनापि गृहस्थप्रत्याख्यानमुक्तं तत्किंविषयम् ?, उच्यते, अतिस्थूलसावद्ययोगविषयमेतत्, तथा च महाभाष्यकारः—"जइ किंचिदप्पओअणमप्पप्पं वा विसेसिउं वत्थु । पच्चक्खेज्ज ण दोसो सयंभुरमणाइमच्छुव्व ॥ १ ॥" सामायिकदण्डके च सामान्येन नियमग्रहणेऽपि विवक्षातः पूर्वाचार्यपरम्पराप्रामाण्याच्च जघन्यतोऽपि घटिकाद्वयमानं तत्कर्त्तव्यं, तथा च प्रतिक्रमणसूत्रचूर्णिः— "जाव निअमं पज्जुवासामित्ति जइवि सामण्णवयणमेअं तहावि जहण्णओवि अंतोमुहुत्तं नियमे ठायव्वं, परओवि समाहीए चिट्ठउ" त्ति । कलिकालसर्वज्ञश्रीहेमाचार्यैरप्युक्तम्—"त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्त्तं समता या तां, विदुः सामायिकव्रतम् ॥ १ ॥" न चाशठपूर्वाचार्यपरम्परा न प्रमाणं, आगमेऽपि तस्याः प्रामाण्यसमर्थनात्, यदुक्तं सूत्रकृताङ्गनिर्युक्तौ—"आयरिअपरंपराए आगयं जो उ आणुपुव्वीए (छेयबुद्धीए) । कोवेइ छेअवाई जमालिनासं स नासिहिई ॥१॥" एवंविधस्य सामायिकव्रतस्यातिचारपञ्चकनिम्ननायाह—

तिविहे दुप्पणिहाणे अणवट्ठाणे तहा सइविहूणे । सामाइय वितहकए पढमे सिक्खावए निंदे ॥ २७॥

'तिविहे' इति 'त्रिविधे' त्रिप्रकारे 'दुप्पणिहाणे' मनोवाक्कायानां दुष्टप्रयोगः सावद्यव्यापार इत्यर्थः, तत्र मनसा गृहहट्टादिसावद्यव्यापारचिन्तनं मनोदुष्प्रणिधानं प्रथमोऽतिचारः १, आहुश्च—"सामाइअं तु काउं घरचिंतं जो अ चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइअं ॥ १ ॥" तथा वाचा कर्कशादिसावद्यभाषणं वाग्दुष्प्रणिधानं २, कायेनाप्रतिलिखिताप्रमार्जितभूमौ निषदनादि पादप्रसारणादि वा कायदुष्प्रणिधानम् ३, अनवस्थानम्—मुहूर्त्तावधिवेलावधेरपूरणं यथाकथञ्चित्सामायिककरणं वा, यद्वा प्रतिनियतवेलासद्भावेऽप्यनादरात्सामायिकाकरणमनवस्थानं, सामायिकं हि क्षणिकेनावश्यं कर्त्तव्यम्, अन्यथा प्रमादः, आह चावश्यकचूर्णिकृत्—"जाहे खणिओ ताहे सामाइअं करेइ" त्ति ४, तथा 'स्मृतिविहीनम्' इति निद्रादिप्रमादाद्व्याक्षेपादिचिन्तावैयग्र्याद्वा शून्यतया मया सामायिकं कृतमस्ति न वा ? इति इयं वा मम सामायिकवेलेत्यादि यदा न स्मरति तदा स्मृतिविहीनत्वं पञ्चमोऽतिचारः, स्मृतिमूलत्वान्मोक्षसाधनानुष्ठानस्य, तथा चाहुः—"न सरइ पमायजुत्तो जो सामइअं कया य कायव्वं । कयमकयं वा तस्स हु कयंपि विहलं तयं नेअं ॥१॥" ५, एतेषां पञ्चानामपि जीवस्य प्रमादबहुलतयाऽनाभोगादिनाऽतिचारत्वम्, एतेषु सत्सु 'सामाइअ'त्ति सप्तमीलोपात्सामायिके प्रथमे शिक्षाव्रते 'वितथकृते' सम्यगननुपालिते योऽतिचारस्तं, अथवा प्रथमे शिक्षाव्रते यद्वितथं कृतं तन्निन्दामि, आ

उ– सामायिके द्विविधस्य त्रिविधेन प्रत्याख्याते रोद्धुमशक्येन मनसा दुष्प्रणिधानसम्भवात्सामायिकाभाव एव व्रतभङ्गजनितं च प्रायश्चित्तं स्यादतस्तदङ्गीकारादनङ्गीकार एव श्रेयान्, मैवं वोचः, सामायिकप्रतिपत्तौ हि सावद्यं मनसा न करोमि १ न कारयामि २ वाचा न करोमि ३ न कारयामि ४ कायेन न करोमि ५ न कारयामीति ६ षण्णियमास्तेष्वनाभोगादिनैकतरभङ्गेऽपि शेषसद्भावान्न सर्वथा सामायिकाभावः, मनोदुष्प्रणिधाने च मिथ्यादुष्कृतेनैव शुद्धिभणनाच्च सामायिकास्वीकारः श्रेयस्करः, अन्यथा सर्वविरतेरप्यस्वीकार्यताप्रसङ्गात्, यदा विधिकृतादनुष्ठानादकृतमिति केचिद्वदन्ति तदप्ययुक्तं, यदुक्तम्–"अविहिकया वरमकयं असूअवयणं भणंति समयन्नू। पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं ॥ १ ॥" किञ्च सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति, अभ्यासो हि कर्मणां कौशलमावहति न हि प्रथमत एव धनुर्द्धरादीनाप्यमोघकर्मत्वं, अभ्यासे सत्येव तद्भावात्, यथा कणार्जनादीनां, लिखनपठनगीतनृत्यादिकला अप्यभ्यासेनैव प्रायः प्रकर्षं प्राप्नुवन्ति, न हि सकृत्पातमात्रेणोदबिन्दुरपि ग्राव्णि निम्नतामादधाति, अतः सम्यग्मनःशुद्ध्यादौ प्रयत्नपरेण यथाक्षणं पुनः २ सामायिकं कर्त्तव्यं, तथा चागमः–"सामाइअम्मि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ १ ॥ जीवो पमायबहुलो बहुसोवि अ बहुविहेसु अत्थेसुं । एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ २ ॥" आवश्यकचूर्णावप्युक्तम्–"जदा सव्वसामाइअं काउमसक्को तदा देससामाइअंपि ताव बहुसो कुज्जा' इति, तथा 'जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वत्थ सामाइअं

सामायिक विधेयमिति यत्केचिन्नियमयन्ति तदपास्त मन्तव्यं, निर्व्यापारताया
करेइ'त्ति, एवं च द्विसन्ध्यमेव सामायिक विधेयमिति यत्केचिन्नियमयन्ति तदपास्तं मन्तव्यं, निव्यापारतायाः ननु 'निद्यावारो
दिनमध्ये बहुशोऽपि सम्भवात्, विशेषयुक्तिमात्र पूज्यप्रणीतविचारामृतसङ्ग्रहादवगन्तव्या, ननु 'निद्यावारो
जाव नियम
सवरूप करेइ' इत्युक्त, यदा च निर्व्यापारताऽर्द्धघटिकादिमात्रमेवास्ति नतु घटीद्वय यावत्तदा 'जाव नियम
पज्जुवासामी' त्येव सामायिक कथ कुर्यात् ?, नियमस्य जघन्यतोऽपि घटीद्वयमानतयोक्तत्वात् ?, सत्य, तत्सा-
मायिक दण्डकोच्चारकादि विनैव समताभावमात्ररूप संभाव्यते, तत्त्व तु बहुश्रुतगम्य, सामायिकफल चै
वमाहुः–"दिवसे २ लक्ख देइ सुवण्णस्स खंडिअ एगो । इअरो पुण सामइअ करेइ न पहुप्पए तस्स ॥ १ ॥
सामाइअं कुणतो समभाव सावओ अ घडिअदुग । आउ सुरेसु बंधइ इत्तिअमित्ताइं पलिआइं ॥ २ ॥ बाणवई
कोडीओ लक्खा गुणसट्ठि सहस पणवीस । नवसय पणवीसाए सतिहा अडभाग पलिअस्स ॥३॥" अङ्कतोऽपि-
९२५९२५९२५। ।३॥ तिव्वतवं तवमाणो जं नवि निट्ठवइ जम्मकोडीहिं । त समभाविअचित्तो खवेइ कम्म खणद्धेण
॥ ४ ॥ जे केवि गया मोक्ख जेवि अ गच्छति जे गमिस्सति । ते सव्वे सामाइअमाहप्पेण मुणेअव्वा ॥ ५ ॥
न कुप्येत न तप्येत, वीयेत वा न किञ्चन । अहो ! अमूल्यक्रीतेय, साम्यमात्रेण निर्वृतिः ॥ ६ ॥" इति सप्तवि
शगाथार्थः ॥ २७ ॥ अत्र प्रते व्यवहारिपुत्रधनमित्रज्ञात यथा—
सत्थं च अइमहत्थ न पुणो सत्थ वऽणत्थसत्थकरं । खुपसत्थसत्थिअसम सत्थिअपुरमत्थि पुहवीए ॥ १ ॥
सयसीकयअरिविंदो अरविंदो नाम नरवरिंदो अ । इहीइ सुरवरिंदो गरिमाए गिरिवरिंदो अ ॥ २ ॥ जस्स

पयायपईवो पय पयगस्स देइ सपूम। चित्तं तु तप्पिअंछुमसससिलेहिं पज्जलइ अहिअं ॥ ३ ॥ मयणपइा पमुहाओ इयस्स य तस्स आगमहिसीओ। अट्ठ पसिद्धा एय पेय सया आसि वइआओ ॥ ४ ॥ विविहेहिं उवापहिं जाओ तणओ य तस्स इक्कोवि। तो मज्झ रज्जसिरिं सो विउल उच्छुलहिंइ य ॥ ५ ॥ सिद्धी विसिट्ठ तणओ घणओ अयरोय नामओ घणओ। घसइ तहिं जस्स सय कोडीओ कणगस्सेय ॥ ६ ॥ जिणधम्ममा चिपण न केवल धम्मओ घणाओवि। नेगमअइहिमसहसो जेण कओ अप्पणो सरिसो ॥ ७ ॥ तस्स घण स्सिरिनामा गिहिणी गिहिणीइनिउयामइविहया। सुविहाइ घणसिरीए सो सोहइ अणुवमत्तेण ॥ ८ ॥ तप्पुत्तो घणमित्तो अविणयचित्तो अ दुण्णयपसत्तो। सुपिसिद्धसिद्धिकुलविहिदोसपविसेइणस्स वा ॥ ९ ॥ बालत्त- णओवि इमो पइदियह पिउगिह परिमुसतो। चोरव घोरकम्मो वव सयपि चिफलेइ ॥ १० ॥ अणयाओ जणयाईहिं बहुपरिसेहिओ हिअत्थीहिं। सो अ विवरीअसिक्खिअहयय अहिअ पयट्टेइ ॥ ११ ॥ बालिआइक छाओ सुसिक्खिअमाओवि तेण न हु कलिआ। चोरिआइकलाओ असिक्खिआओवि अक्खलिअ ॥१२॥ जुवण मणुपत्तो पुण जाओ वसणेसु सत्तसु पसत्तो। कलिओ खलु निंबरसो अइकडुओ चेव जायइ ॥ १३ ॥ सत्ताइ वेइ नरयद्दाराणि व गिहवईण गेहेसु। गिण्हेइ तेसि सव वव पावव पवक्स ॥ १४ ॥ जूअं अणत्थमूलं अइप्प मूअ य नरयगइमूलं। लिबइ सिस्सिइपस्सो सोऽणओ दुम्मइरसओ ॥ १५ ॥ बेसावसणपसत्तो मज्ज मसंपि र- क्खसो इव सो। मक्खेइ किं अमक्खं पणंगणासंगयाण वा? ॥ १६ ॥ सो मग्गइ जत्ताण तिअसवर चोरिअं

च कामधुहं । नयरंगण च अमरंगण च मज्झाइ अमयं व ॥ १७ ॥ सुअनाणविरुद्धपि हु निद्धम्माण पमाणणिज्ज
ही । अन्नेसि कुच्छणिज्ज साणाण भक्खणिज्जं हि ॥ १८ ॥ अन्नदिणमि स दुसयकारी चोरीइ कत्थवि पविट्ठो ।
पाविट्ठो छुहु गहिओ केणवि कोलुव वाहेण ॥ १९ ॥ बंधिअ नीओ नरवइ पुरओ सो जाणिओ अ सिट्ठिसु-
ओ । तो रन्ना इक्कारिअ घणओ सिट्ठी इम सिट्ठो ॥ २० ॥ वज्झोवि तुज्झ पुत्तोत्ति अन्नाणन्नो इमो मए मु
क्को । नेव पुणो मुचिस्सं जमिक्कसिं चेय वक्खियं ॥ २१ ॥ यतः–"स्थान सर्वस्य दातव्यमेकवारापराधिनः । द्वि
तीयपतने वन्ता, चक्रेणापि विवार्जिताः २२ ॥" ववहारिओवि साहइ महापसाओ इमो नवरि एसो । वच्चुसि
विस्सओवि न मुअइ अणय दारव दारस्स ॥ २३ ॥ ता एस न मे पुत्तो अहपि न पिऊ इमस्स अज्जदिणा ।
दूरीकओ हु कुक्कुरोव एसो अकज्जकरो ॥ २४ ॥ यतः—"दुष्टः सुतोऽपि निर्वास्यः, स्वामिना न्याय-
गामिना । महपञ्चेर्महाधीशः, शनिमन्तो न्यवीविशत् ॥ २५ ॥" रन्नावि साहु साहुत्ति वन्निओ मन्निओ अ
पहुसिट्ठी । किंच न कज्जविऊण सपज्जइ उचिअकज्जाओ ॥ २६ ॥ यतः–"आवेयत्यमसंस्तुतेऽपि हि जने चित्ता
रयत्यञ्जसा, दुर्व्यसानपि सान्त्वयत्यवनिभृत्प्रायानपायोपसान् । त सवर्गयति त्रिवर्गमिह वाऽमुत्रापि वस्मा
च्छुभ, किं वा तन्न तनोति यत्सुकृतिनामौचित्यचिन्तामणिः ॥ २७ ॥" अह घणयसुओ तइआ रन्ना मुक्कोवि
चिंतिउं दुक्को । अह जइ रन्नो हत्थे चडिओ ता मारिओ चेव ॥ २८ ॥ न य आजम्मविणिम्मिअअछम्मपि
म्माइ चोरिआइ विणा । सक्को इक्कपि दिण ठाउ पाणप्पिआइव ॥ २९ ॥ पल्लीओ वेलाए फलति सयत्ताओ

चोरिया व सया । तक्कालमेव जायइ जीइ महिड्ढी दरिद्दोवि ॥ ३० ॥ ता किं करिस्समिण्हिं अहवा ज होइ होउ
त सव । चोरिं मुयामि कह जीए विलसामि सच्छंद ? ॥ ३१ ॥ अजणमदिस्सकरण जइ वा दिव्व कहंपि पावे
मि । ताऽहं होमि कयत्थो पूरेमि मणोरहे निअए ॥ ३२ ॥ इअ चिंततो अंतो नयर सइरं परिब्भमंतो सो ।
एगत्थ जोगसिद्धं कलासमिद्धं निहालेई ॥ ३३ ॥ त तह चमुचणदाणेणावज्जइ सो जहा लहु देइ । त अजण
मणदिव्व निअय किं वा न दाणाओ ? ॥ ३४ ॥ जओ–"दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति
नाशम् । परोऽपि बन्धुत्वमुपैति दानात्, ततः पृथिव्यां प्रवर हि दानम् ॥ ३५ ॥" सीहो व चक्खरहिओ पच्चक्ख
इओ विसहरो व सो दुसहो । चिंतापत्तोव रवी आओ तेणंजणेण जणे ॥ ३६ ॥ तत्तो सो सच्छंद गिण्हइ
दविणाणि सव्वभवणाणि । परिमुसिउ २ चोरो अवरोव रोहिणिओ ॥ ३७ ॥ परइत्थिओवि भुजइ गिहंतरे
पतरूव पविसित्ता । एव सो अदिस्सो लोअं विनडेइ सव्वमवि ॥ ३८ ॥ तेणासक्कगिरिस्स व गुरुगुरुब्भतरे पर
घणोहिं । विहिओ निअभंडारो पच्चक्खो पावभंडारो ॥ ३९ ॥ जीवुव अप्पविहओ सुहुमो वाउव संचरतो सो ।
गारुपयत्तपरेहिवि निउणेहिंवि न मुणिओ कहवि ॥४०॥ नरवइणो वयणाओ तह चिंतणो चोरिआ मए बत्ता ।
इअ भणिरो इब्भो इव निवसहाए सया पइ ॥ ४१ ॥ जो तक्करस्स गरिहं करेइ त पयरिउ पइम वा । सो
मुसइ तस्स गिहं रुड्ढ विव व सव्वंपि ॥ ४२ ॥ अणुमाणेण तेण त जाणताव्वि पुव्वचिट्ठाए । रायाई नहु भणिउ
सक्का इत्थे अंजणाओ ॥ ४३ ॥ अइगरुं दुहुमपिडु अत्थ तत्थस्स पयडपति विऊ । पयड पोढपि इम न को

मा भूवन् भवन्तः सर्वाभीष्टसाधकधर्मनिरपेक्षाः, यतः—"बुभिक्खा किं खु जरा नट्ठा रोगा य किं गयं मरणं । ठइअं च नरयदारं ? जेण जणो धम्मनिरविक्खो ॥ १ ॥ मा सुअह जग्गिअव्वे पलाइअव्वमि कीस वीसमह ? । तिन्नि जणा अणुलग्गा रोगो अ जरा य मच्चू अ ॥ २ ॥" तस्माद्यतिधर्माशक्तत्वे श्राद्धधर्मे सम्यग्यतितव्यं, विशिष्य च तत्परमसारभूते पौषधव्रते तत्सान्निध्यानुमोदनादौ च, यतः—"कर्तुः स्वयं कारयितुः परेण, तुष्टेन चित्तेन तथाऽनुमन्तुः । साहाय्यकर्तुश्च शुभाशुभेषु, तुल्यं फलं तत्त्वविदो वदन्ति ॥ १ ॥" स्पष्टं दृष्टं च सर्वैर्देवकुमारप्रेतकुमारयोः पौषधादिसान्निध्यासान्निध्यफलं निस्तुलं, एवं धर्मदेशनया प्रतिबुद्धः प्राक्कृतधर्मसान्निध्यवशात्सञ्जातहर्षभरः श्राद्धधर्मप्रतिपत्त्यादिकमवशमती प्रतिपद्यते स्म देवकुमारः क्ष्मापः, तादृक्सत्पुत्रप्रसादेन मुखेऽपि सर्वार्थसिद्धंमन्याः प्रज्ञाकरादयश्च पर्वसु सर्वदा प्रतिपूर्णपौषधाराधनं न्यक्षकर्मक्षयसाधनं, धन्य श्रेष्ठी तु सश्रेष्ठिनीकसारकपुत्रभवस्थानुप्रवादिश्रवणादुःखगर्भवैराग्यात्तदैव परिव्रज्य क्रमात्प्राज्यशिवसाम्राज्यभागभूत्, अन्येऽपि यथाशक्ति धर्मे तत्सान्निध्यादौ च प्रयतन्ते स्म, व्यन्तर्यपि प्राप्तसम्यक्सम्यक्त्वा सम्यग्धर्मसान्निध्यविधिसावधानाऽभवत्, मन्त्रितनूजस्तु तादृग्दुःखवर्गोऽपि बहु विदग्धोऽपि प्राग् धर्मान्तरायकरणात् सम्यग्धर्मे विशिष्य च पौषधग्रहणादौ सर्वथैव नोत्सेहे, प्राग्भवसम्बन्धाद्बन्धवादिभिर्भृशमुत्साहितोऽपि प्रत्युतोष्ट्र इव द्राक्षावणे विमेषमात्रवे पौषधे श्राद्धकुलोत्पन्नोऽपि, अहह ! जीवस्य तादृक्समग्रसामग्र्यामपि धर्मदुष्प्रापत्वं, क्व वा धर्मार्थं वसन्तेऽपि वा करीरे पत्रोद्गमः ?, तदुक्तम्—"पत्ते वसंतमासे रिद्धिं पावंति सयलवणराई । ज

न करीरे पत्तं ता किं दोसो वसतस्स ? ॥ १ ॥" ततः क्षित्यधिपादिभ्यः प्रसभं पोषधादिविधापनभीतः स दुर्विनीतस्तस्याज नगरमपि सर्वभेयोभिः सह, एवं धर्मशर्मबहिर्मुखः सर्वतोमुखयोगैस्यमान्यपरामवादि महादुःखः स क्रमान्मृतस्तिर्यग्नरकादिषु भवेषु भ्रान्तश्च, अहह दुःसहःकोऽपि धर्मविघ्नकरगिरां निष्फलाना मपि विपाकः, अथ देवकुमारनरेन्द्रः सुरेन्द्र इवोर्व्यां विहितावतारः पर्वण्यर्याग्दिने पर्वघोषणापूर्वं सर्वसाम न्तामात्यादैः सम पोषधाराधनाविना कृतैकातपत्रार्हतधर्मविस्तारश्चिरं राज्यं चकार, कदाचिद्न्यथमिश्रीणः स परिश्रीरमणः स्वयम्भूरमण इवोद्वेल प्रासवान् शत्रुदेशसीमान्तं, ततः शत्रुनृपोऽपि सर्वाभिसारेण निस्ससार सङ्ग्रामार्थं समुखः, इतश्चागतमष्टमीपर्व तद्दिने च युद्धारम्भं निवार्य मन्त्र्यादिभिर्भृशं निवार्यमाणोऽपि मही पतिरग्रहीन्महीयः पापौषधं पौषधं, मत्स्यरूपं ज्ञात्वा छलान्वेषिणा द्वेषिणा नवीनेनेव चतुरङ्गबलेन वेलाकूल मिव वेलाजलेन सर्वतः परिवेष्टयते स्म तत्सैन्यं, ततः समस्ता अपि विहस्ताशया अनन्यगतिकास्तत्सैनिका नृतमागत्य प्रणम्य च सत्यस्वरूपप्ररूपणपूर्वं राज्ञो विज्ञपयामासुः—देव ! युद्धाय संनह्यतां यद्वा सदावेशो दीयतां आः किमिदमप्रस्तावे पुण्यकृत्याचरणं रणनिवारणं च सर्वेपामपि कदर्थनाकारणं ?, नहि कफप्रकोपे शर्कराऽप्या दरणीया भवति, एवमत्यन्तविषादिभिः सचिवादिभिरपि शुभाशुभोक्तिभिर्भृशमुक्तोऽप्यसौ नैवेषदपि स्वपौ षधं विराधयामास मनसाऽपि, प्रत्युत दृढतया कथयामास सचिवादीन्—भो भो मुग्धबुद्धयः ! को नाम विदग्धः सन् ऐहिकमात्रकृते पारत्रिककुसीदं सीदत्तमं कुर्यात्, मा च मन्निमित्तं कश्चित्क्लेशलेशमपि स्वीकुर्यात् स्वर-

क्षार्थं च यथाऽपि युष्माभिर्वैरिभिर्मिलनाद्यावपि न क्षूण मनागपि मन्ये, न चास्य छलकृतोऽपि द्रोहाकरणं मन-
साऽप्यनुमन्ये, सम्प्रति यतिरिवैकोऽहं न कुर्वे क्वचेऽपि मोहं किं पुन स्वजने परिजने धने वा ?, यतः—
प्राणान्तेऽपि न भङ्क्तव्यं, गुरुसाक्षिकृतं व्रतम् । व्रतभङ्गोऽशुभाय, प्राणा जन्मनि २ ॥ १ ॥" एवं राज्ञो
निस्सङ्गां गिरं श्रुत्वा किंकृत्यजडा यावत्सर्वेऽप्यभूवंस्तावद्वारिपूरवद्दुर्निवारं वैरिबलं तत्सैन्यान्तः सर्वतोऽपि
प्रविष्टं महाक्रोधाधिष्ठं, प्रनष्टाश्च झटिति दिशोदिशं निर्नायका इव सञ्जातास्तत्सैन्याः, राजा तु स्वजीवितेऽपि
निरपेक्षस्तथानुप्रेक्षालब्धफलस्तथैव धर्मसंस्तारकस्थस्तस्थौ, यावच्च विद्वेषिनृपस्तत्सुटाश्च गोष्ठश्वा इव क्षुब्धा
धराधिप विप्रकर्तुमुपायुधा द्वाविरे तावत्तद्धर्ममाहात्म्यसन्निहितावहितया शासनदेवतया सर्वाङ्गस्तम्भं स्तम्भ्य
न्ते स्म ते तथा यथा सर्वाङ्गव्यथाभयामिर्षअधरद्दसम्पुटनिपीड्यमानजलमानुपवद्वस्युत्कैरारवक्रन्दुः—अहो !
महो ! इहापि तात्कालिकः अपुण्यपापविपाकः, तत आः किमिदमाकस्मिकमेतेषां जातमित्युल्लसदसाधारणकरुण-
रसप्रसरः स नरेश्वरस्तद्देवताकृतं सम्भाव्य तां प्रत्याह—धर्मसान्निध्यार्थमागते हे देवते ! मा मन्निमित्तमेतांस्तप-
स्विनः स्वल्पमपि विध्यथाः, मा मामेव धर्मे सांनिध्यमपि यमय, किं तेन सांनिध्येन येन परः परितप्येतेति,
ततः पापभीरुत्वसूक्ष्मेक्षिकाचमत्कृतया देवतया देवकुमारवद्वेषस्य यावज्जीवसेवकताप्रतिपादनपूर्वं मुक्तास्ते
तस्य वशो बभूवुः, मिलिताश्च तत्कालमेव विस्मितमुदिततराः सर्वे भूधराः, तादृग्धर्मैकाग्र्यतुष्ट्या तया च
मादायि तस्मै सर्वव्याधिविषापहारकं सर्वभूतादिदोषनिवारकं धाजन्यजलाग्निश्वापदादिदुष्टस्तम्भनममूल्य-

नेकाश्चर्यकारक विस्मयरसमेक पोषपूरणानन्तर, प्रथमाजन्मनिर्वाहितनिष्कलङ्कपोषधाभिग्रहः पुण्यप्रभावा-
दपगतसिद्धदुर्भिक्षशत्रुनिग्रहः प्राप्तविस्मयरसभरः स स्वनगरभागस्य तेन निःसममहिम्ना मणिनाऽनेकप्रकारान्
स्वपरोपकारानकरोत्, इति भवरोगसर्वौषधपोषधविधिनाऽवनीधवो व्यधुनात्। निजकर्मरजः प्रबलमप्यनेनेव
निचितमपि ॥१॥ स्तेनं स्तेनजनन्यां श्यामरजन्यां कदाचिदिभ्यगृहे। सात्र दत्त्वा कोऽप्यादवे धन चिनिर्मथे
नेव ॥२॥ निर्गत्य ततो यान्तं मार्गे मृगधूर्तवद् द्रुतगतिं तम्। दृष्ट्वा पृष्ठे व्याधा इव नृपयोधा अधाविषत ॥३॥
सोऽप्यल्पस्तद्रुततरगतिः प्रणश्यन् विनिर्गतो नगरात्। बहिरुद्याननिकुञ्जे प्रविष्टवांश्चौररीतिरियम् ॥ ४ ॥
दस्युभिया तत्रान्तः प्रसृमरतिमिरे प्रवेष्टुमसमर्थैः। रिपुभिः पुरमिव परितोऽप्यवेष्टि तत्तैः प्रभूततरैः ॥ ५ ॥
दस्युस्तस्तत्र तु शममिव साक्षाद्वीक्ष्य मुनिमेकम्। अशरणामय शरणागतस्य मे वेहि वेहिहितम् ॥ ६ ॥
ऋषिराख्यद्यदि दीक्षां कक्षीकुरुषे तदैव तव न भयम्। न ह्यन्यथा कथञ्चिद्विना न वैराग्यमभयं हि ॥ ७ ॥
तदुक्तम्–"भोगे रोगभयं सुखे क्षयभयं वित्ते च भूभृद्भयं, माने म्लानिभयं गुणे खलभयं देहे कृतान्ताद्भयम्।
शौर्ये शत्रुभयं जये रिपुभयं वंशे कुयोषिद्भयं, सर्वं नाम भयं भवेदिह महो! वैराग्यमेवाभयम् ॥८॥" श्रुत्वेति
सदासोऽपः कृतलोचः शासनाधिदेवतया। दत्तयतिवेष एष प्राप्ताजीवहह! जीवगतिः ॥ ९ ॥ प्रातस्तं प्रव्र
जितं ते प्रेक्ष्यारक्षका नृपायाख्यन्। सोऽपि सुधीरतिविस्मितचित्तस्तं नन्तुमागतवान् ॥ १० ॥ नत्वा च स्तावि
तवान् विभो! भवानेव सात्त्विकप्रवरः। अपि दुर्नयेन येन प्रापि प्राक् त्रिजगदर्च्यत्वम् ॥ ११ ॥ एष पौरजने

रम्यत्यन्तचमत्कृतौ कृती स पतिः । प्रणतः प्रभुसम्भोषैर्द्वयोरप्यहह स्वकृतफलम् ॥ १२ ॥ वर्षीशोऽवधिविलप
टद्ध्वनिना पर्वघोषणापूर्वम् । पोषधशाले पोषधमाधात्त्रिधिना कवाचिदथ ॥ १३ ॥ कायोत्सर्गं कृतवान् धृत
वान् सद्ध्यानमेव निशि यावत् । स्मृतवांस्तावत्तस्करमुनिमुखैर्धर्ममृतं स्मरति ॥ १४ ॥ भावितवांश्च ततोऽसौ
श्लाघ्यश्लाघायुजामपि स एव । यः परितापितपौरश्चौरः सन्नाददे दीक्षाम् ॥ १५ ॥ अहमहह ! मन्दभाग्यः
सम्यग्धर्मस्वरूपमपि जानन् । विद्धारधलमूलामिव मुमुक्षुतां न क्षमे धर्तुम् ॥ १६ ॥ धिग् मां कातरमातुरम
नर्सं सांसारिकेषु सौख्येषु । सम्यग्धर्माराधनविमुखं स्पृहयालुममृतसुखम् ॥ १७ ॥ भवजलधियानपात्रं पात्रं
परसंविदां दुरितदात्रम् ।। चारित्रं चिन्तामणिमिव कथमाप्ताऽस्मि रङ्कः सन् ? ॥ १८ ॥ सेवं शुभभावनया
पावनया घातिकर्मसङ्घहरणात् । केवलमलभत पोषधफलममृतसुखकैः किञ्चित् ॥ १९ ॥ सन्निहितावहितसुरैः
कृतमहिमा स भवस्तपसिद्धिः । बीक्षितपित्रार्यैः सह सिद्धः प्रतिबोध्य बोध्यजनान् ॥ २० ॥ सान्निध्यासा-
न्निध्ययोः पौषधादौ, तन्मालिन्ये तदुद्दाराधने च । इत्थं श्रुत्वा किञ्चिदुच्चैः फलं भोस्तत्सान्निध्याराधनादौ
यतध्वम् ॥ २१ ॥

॥ इति पोषधव्रते देवकुमारप्रेतकुमारकथा ॥

---

उक्तमेकादशं व्रतमथातिथिसंविभागाख्यं द्वादशं शिक्षाव्रतं तुर्यं, तत्र तिथिपर्वादिलौकिकव्यवहारपरिवर्जको भोजनकालोपस्थायी अतिथिरुच्यते, स च श्रावकस्य साधुः, उक्तञ्च–"तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥" तस्यातिथेः सङ्गतः–आधाकर्मादिद्विचत्वारिंशद्दोषविरहितो विशिष्टो भागः–पश्चात्कर्मादिदोषपरिहारार्थांशदानरूपोऽतिथिसंविभागः, अयमर्थः–न्यायार्जितानां प्रासुकैषणीयानां कल्पनीयानां चान्नपानवस्त्रादीनां देशकालश्रद्धासत्कारक्रमपूर्वकं परया भक्त्या आत्मानुग्रहबुद्ध्या दानमतिथिसंविभागः, तत्र शाल्यादिनिष्पत्तिभाग् देशः १ सुभिक्षदुर्भिक्षादिः कालः २ विशुद्धचित्तपरिणामः श्रद्धा ३ अभ्युत्थानासनदानवन्दनानुव्रजनादिः सत्कारः ४ यथासम्भवं पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः ५ तत्पूर्वकं देशकालाद्यौचित्येनेत्यर्थः, यदाह–"पहसंतगिलाणेसुं आगमगाहीसु तह य कयलोए । उत्तरपारणगमि अ दिन्नं सुबहुप्फलं होइ ॥१॥" आवश्यकचूर्णिपञ्चाशकचूर्ण्योस्तूक्त इह चायं विधिः–श्रावकेण पोषधपारणके नियमात्साधुभ्यो दत्त्वा भोक्तव्यं, कथं ?, यदा भोजनकालो भवति तदाऽऽत्मनो विभूषां कृत्वा प्रतिश्रयं गत्वा साधून्निमन्त्रयते–भिक्षां गृह्णीतेति, साधूनां च तत्र का सामाचारी ?, उच्यते, तदैकः पटलकमन्यो मुखानन्तकमपरो भाजनं प्रत्युपेक्षते माऽन्तरायदोषाः स्थापनादोषा वाऽभूवन्निति, स च यदि प्रथमायां पौरुष्यां निमन्त्रयते अस्ति च नमस्कारसहितप्रत्याख्यानी ततस्तद्गृह्यते, अथ नास्त्यसौ तदा न गृह्यते यतस्तद्वोढव्यं भवति, यदि पुनर्घनं लगेत्तदा गृह्यते संस्थाप्यते च, यो वोद्घाटपौरुष्या पार-

यदि पारणकवानन्यो वा तस्मै तद्दीयते, पश्चात्तेन श्रावकेण समं सङ्घाटको व्रजति, एको न युज्यते प्रेषयितुं, साधुः पुरतः श्रावकस्तु मार्गतो गच्छति, ततोऽसौ गृहं नीत्वा तावदासनेनोपनिमन्त्र्यते, यदि निविशते तदा भव्यं अथ न निविशते तथाऽपि विनयः प्रयुक्तो भवति, ततोऽसौ भक्तं पानं च स्वयमेव ददाति भाजनं वा धारयति स्थित एव वाऽऽस्ते यावद्दीयते, साधू अपि पश्चात्कर्मपरिहरणार्थं सावशेषं गृह्णीतः, ततो वन्दित्वा विसर्जयति अनुगच्छति च कतिचित्पदानि ततः स्वयं भुङ्क्ते, यच्च साधुभ्यो न दत्तं तच्छ्रावकेण न भोक्तव्यं, यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयति यदि साधवोऽभविष्यंस्तदा निस्तारितोऽहमभविष्यमिति, एष पोषधपारणके विधिः, अन्यदा तु साधुभ्यो दत्त्वा भुङ्क्ते भुक्त्वा वा ददाति, एवं चान्यपारणादावपि यथार्हं ज्ञेयं, यदाह धर्मदासगणिः—"पढमं जईण दाऊण अप्पणा पणमिऊण पारेइ । असई अ सुविहिआण भुंजेइ अ कयदिसालोओ ॥ १ ॥ साहूण कप्पणिज्जं जं नवि दिन्नं कहिंचि किंपि तहिं । धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥ २ ॥ वसहीसयणासणभत्तपाणभेसज्जवत्थपत्ताई । जइवि न पज्जत्तधणो थोवाऽवि थोवयं देइ ॥ ३ ॥" अन्यत्राप्युक्तम्—"अर्हद्भ्यः प्रथमं निवेद्य सकलं सत्साधुवर्गाय च, प्राप्ताय प्रविभागतः शुचिधिया दत्त्वा यथाशक्तितः । देशापातसधर्मचारिभिरलं सार्द्धं च काले स्वयं, भुञ्जीतेति सुभोजनं गृहवतां पुण्यं जिनैर्भाषितम् ॥ १ ॥" एतत्कृताराधना चैवं प्रथमं श्रावकेण 'फासुएण एसणिज्जेण' इत्यादिना गुरूणां निमन्त्रणं क्रियते ॥ अत्रातिचारान्निन्दितुमाह—

सच्चित्ते निक्खिवणे पिहिणे ववएस मच्छरे चेव । कालाइक्कमदाणे चउत्थे सिक्खावए निंदे ॥ ३० ॥

'सचित्ते' इति देयस्यान्नपानादेरदानबुद्ध्याऽनाभोगसहसाकारादिना वा सचित्ते-मृदादौ निक्षेपणं प्रथमोऽतिचारः १, एवं सचित्तेन पिधानं-स्थगनं सचित्तपिधानं २, स्वकीयस्याप्यदानबुद्ध्यादिना परकीयत्वाभिधानं परकीयस्यापि वा दानबुद्ध्या स्वकीयत्वाभिधानं परव्यपदेशः, यद्वा विद्यमानमपि किञ्चिद्वस्तु याचितोऽमुक श्रेष्ठ्यमस्ति तत्र गत्वा मार्गयत यूयमित्यभिधत्ते अथवाऽस्य वा परेण दापयति मृतस्य जीवतो वा परस्य पुण्यं भूयादिति परोद्देशेन ददातीति वा परव्यपदेशः ३, मत्सरः-कोपो यथा मार्गितः सन् कुप्यति, सदपि वा मार्गितं न ददाति, यद्वा परोन्नतिवैमनस्यं मत्सरः, यदुक्तं हैमेऽनेकार्थसङ्ग्रहे-"मत्सरः परसम्पत्त्यक्षमायां मद्वति क्रुधी"ति, ततः केनचिच्छिद्रेनापि दानं दत्तं दृष्ट्वा किमेतस्मादप्यहं हीन इति मात्सर्याद्दान चतुर्थम् ४, उचितभिक्षावेलामतिक्रम्य सम्प्रत्येते न ग्रहीष्यन्तीति धिया साधूनां निमन्त्रणे कालातिक्रमस्तत्र दानं कालातिक्रमदानं, कोऽर्थश्च तेन दानेन ?, यतः-"काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं । तस्सेव अथक्कपणामिअस्स गिण्हतया नत्थि ॥ १ ॥" 'पहेणयस्स'त्ति लम्भनकस्येत्यर्थः, 'अथक्कपणामिअस्स'त्ति अनवसरदत्तस्य, एषु च मया निमन्त्रणादिना दीयमानमस्ति नवरं साधव एव न गृह्णन्तीति यदि बुद्ध्या मनसापेक्षत्वाद्दानान्तरायदुष्कर्मणा च मायाकरणादतिचारता, यदुक्तं-"सइ फासुअंमि दाणे दाणफल

तह य दुक्खई अउल । बमचेराइक्कुर्त्त पत्तपि अ विक्रए तस्स ॥ १ ॥ दाउं नयरि न सकाइ दाणविघायस्स कम्मुणो उदए । दाणतरायमेअं रसो भडारिअसमाणं ॥ १ ॥" तस्सचूल्या तु भक्त एव, यत –"दाणतराय दोसा न देइ दिअतयं च धारेइ । दिजे वा परितप्पइ किविणत्ता सो भवे भगो ॥ १ ॥" अतिक्रमादिना चातिचारता भावनीया ॥ एते च ये प्रतिव्रत पञ्च पञ्चातिचारा उक्तास्ते उपलक्षणमतिचारान्तराणां न त्वेतावन्त एवेत्यवधारण, यदाहुः–"पंचपचातिचारा उ, सुत्तमी जे पदसिआ । ते नावधारणद्वाए, किं तु ते उवलक्खणं ॥ १ ॥" तेन स्मृत्यन्तर्धानादयोऽनुक्ता अप्यतिचारा यथासम्भव सर्वव्रतेषु ज्ञेयाः, 'चउत्थे'त्यादि व्याख्या पूर्ववत्, एतद्व्रतफलं दिव्यभोगसमृद्धिसाम्राज्यतीर्थकृत्त्वादि श्रीशालिभद्रमूलदेवाधन्याईद्दत्तादीनामिव सर्वं प्रसिद्ध, वैपरीत्ये तु दास्यदौर्गत्याद्यपीति त्रिंशगाथार्थः ॥ ३० ॥ अत्र व्रते मिश्रद्वयसविमानमेवम्—

जम्बूद्वीपाभिधे द्वीपे, प्राग्विदेहविभूषणम् । विजयः सर्वविजयश्रीपुष्कला पुष्कलावती ॥ १ ॥ तस्यां शस्याश्रित श्रेषा, विशालत्वान्वित विधा । पुमर्थमूत्तद्राऽऽस्ते, जयस्थलपुरं पुरम् ॥ २ ॥ यथार्थस्तत्र यथासम यथसमस्थितिः । अमून्महेभ्यश्चिर्भ्रं तु, न पङ्कजकसङ्गभाक् ॥ ३ ॥ देवकी देवकीवास्य, देवकीर्तितसद्गुणा । भजनीर्ष्याभरजनीजनी सार्वजनीनहृत् ॥ ४ ॥ जज्ञेऽर्जितनयः स्फीतविनयस्तत्तयोऽनयोः । मार्ग्यैकधाम सान्वर्थनामधारी गुणाकरः ॥ ५ ॥ पित्रोर्मनोरथैः सार्द्धं, वर्द्धमानः क्रमेण सः । कलावानिव जग्राह, लीलया

सकलाः कलाः ॥ ६ ॥ तपः क्षमागुणेनेव, विवेकेनेव वैभवम् । लावण्यलक्ष्म्येव वपुराभरणेव भोजनम् ॥ ७ ॥
श्रुत मत्येव भक्त्येव, स्तवः शक्त्येव शान्तता । श्रद्धयेव च धर्मः सोऽलञ्चक्रे यौवनश्रिया ॥ ८ ॥ युग्मम् ॥
यस्य रूप निरूप्यासित्स्मररूपं सुराङ्गनाः । नराङ्गनास्समीहन्ते, तद्रूपेऽन्यभवेऽपि च ॥ ९ ॥ औदार्यमस्य
चातुर्यधुर्यैरप्युच्यतां कियत् । यच्छिक्षितस्येव गीर्वाणतर्वोप्या ददतीप्सितम् ॥ १० ॥ शारदागुरुशुक्राणां, धुर्ये
चातुर्यधुर्यधीः । स एव वर्ण्यतां प्राज्ञैरन्यो वा दर्श्यतां क्वचित् ॥ ११ ॥ बाल्यादपि वदान्यस्य, सर्वेभ्योऽपि
यथेप्सितम् । सोऽभूल्लोकप्रियः प्रोच्चैः, क न दाताऽभवत् प्रियः ? ॥ १२ ॥ इतश्च–तत्रैव वेश्यवस्य, मित्रं पात्रं
गुणश्रियाम् । जज्ञे धनञ्जयः श्रेष्ठी, दीपेन्धनधनञ्जयः ॥ १३ ॥ विश्वेऽप्यप्राप्तविजया, जया जायाऽस्य सद्गुणा ।
तयोर्गुणधरः सूनुर्नाम्नैव न तु तत्त्वतः ॥ १४ ॥ स निर्भाग्योऽपि भाग्याढ्यमन्यः पुण्यपराङ्मुखः ।
सुखी पित्रोः प्रसादेन, प्रपेदे यौवनं क्रमात् ॥ १५ ॥ गुणाकरस्य निस्तुल्या, बाल्यादप्यमुना समम् । गुरो
रङ्गारकेणेव, मैत्र्यभूत् प्राग्भवोद्भवा ॥ १६ ॥ गुणाकरस्य मित्रत्वान्मान्यः सोऽपि जनेऽजनि । वाह
नत्वान्महेशस्य, मत्तः शण्ड इवोक्षकैः ॥ १७ ॥ महत्त्वं महतां सङ्गादमहानप्यवाप्नुयात् । रजोऽपि पूज्यते
तीर्थपथिकसङ्गतं न किम् ? ॥ १८ ॥ तौ तुल्यवयसौ तुल्यशृङ्गारौ तुल्यचारिणौ । गुणैस्त्वतुल्यौ वृषतुस्तुलौ
हंसबकोटयोः ॥ १९ ॥ सुवाऽन्यदा भ्रमन्तौ तौ, पुरान्तः स्वैरचारतः । प्राप्तौ क्वचिन्मठेऽम्भोष्ठौ, सूक्ते सूक्ते
बुधैरिमे ॥ २० ॥ जलकार्जिता विभूतिर्भगिनीति सुनीतिवेदिभिः सद्भिः । सत्पात्र एव योज्या न तु भोग्या

यौवनाभिमुखैः ॥ २१ ॥ त्वन्य मन्मनवचन चापलमपहेतु हास्यमत्रपताम् । शिशुरेवार्हति पांशुक्रीडां भुक्तिं
च पितुलक्ष्म्याः ॥ २२ ॥ तन्निशम्य निज मित्र, पुणाति स्म गुणाकरः । न नो युक्तः पितुर्लक्ष्म्या भोगः स्वल्पोऽ-
प्यतः परम् ॥ २३ ॥ यतः–"सुचिअ सूहवो सो चेव पण्डिओ सो विअक्खणाणो । जो निअसुअवज्जिअ
लच्छीइ वच्चए किंति" ॥ २४ ॥ तदर्जयावस्तां कापि, यावस्तदर्जनाय च । ननूपायेन केन प्राक्, सा स्वेष्टा
कोटिशोऽर्ज्यते ? ॥ २५ ॥ आर्य ! नो पूर्यते मान्यकमलासिसूते मम । कौतुकं दानभोगादे, स्नानादेरिव
दन्तिनः ॥ २६ ॥ मित्रोदितमिति श्रुत्वा, श्मानी स्वमनीषया । जगौ गुणधरः श्रीणां, भ्रातौ चिन्ता वयस्य !
का ? ॥ २७ ॥ लीलयाऽप्यर्जयिष्यावो, लक्ष्मीर्वाणिज्यनैपुणात् । वणिग्वराणां वाणिज्यमेवत्रयी कामधुग् ध्रुवम्
॥ २८ ॥ प्रवीणता वणिज्यास्तु, स्वकक्रम उपक्रमः । न निर्वेदश्च कुत्रापि, त्रयः प्रतिभुवः श्रियः ॥ २९ ॥
तदुक्तम्–"लक्ष्मीर्वसति वाणिज्ये, किञ्चिदस्ति च कर्षणे । अस्ति नास्ति च सेवायां, भिक्षायां न कदाचन
॥ ३० ॥" निशम्येत्थं समीपस्थो, सलक्षणविचक्षणः । कोऽप्याचचक्षेऽधिक्षेपपूर्वं तन्मुखसंहृते ॥ ३१ ॥ रे वणिग्
जात ! मा कार्षीर्गर्वमेवमसर्वगीः । परोपजीवीव परमस्त्येवासि यत्सुखी ॥ ३२ ॥ लीला निर्लक्षणस्यापि, तवैषा
मित्रसन्निधेः । शिलाऽपि तप्रकाधाराश्च किं तरति वारिणि ? ॥३३॥ न प्रेक्षे लक्षण तादृग्, निर्लक्षण ! तवाङ्गके ।
स्वल्पामपि श्रियं येन, भोक्ष्यसे स्वसमार्जिताम् ॥३४॥ अय तु ते सुहृद्भाग्यैरन्यूनः पूर्णलक्षणः । लीलामात्रा
र्जिता भोक्ता, विभूतिर्भुवनाद्भुता ॥ ३५ ॥ तत्त्वयाऽस्य मृगाङ्कस्य, मृगेणेवानुगामिना । श्रेयस्कामेन न क्वापि,

जातु त्याज्यः सुसन्निधिः ॥ ३६ ॥ यतः—"गुणिनः समीपवर्ती पूज्यो लोके हि गुणविहीनोऽपि । विमले
क्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥ ३७ ॥" श्रुत्वा सामुद्रिकस्येत्थ, गिरं गुणधरस्तदा । अन्तर्दूनोऽपि मौनेन,
स्थितवान् लोकलज्जया ॥ ३८ ॥ अचिन्तयच्च चित्तान्तरेतस्याशु वचोऽन्यथा । करिष्ये दर्शयिष्ये च, सर्वेषां
स्वशुभोदयम् ॥ ३९ ॥ एष गर्वाङ्कुरेणाथ, सार्द्धं गुणधरेण सः । गुणाकरः समुत्तस्थौ, तन्मठाद्वशठाशयः
॥ ४० ॥ क्रीडन्क्रीडन्समासन्नं, दृष्ट्वा धर्ममिवाश्रिनम् । धर्मदेवगुरुं हृष्टः, पृष्टवान्नतिपूर्वकम् ॥ ४१ ॥ प्रभो!
प्रसीदादिश मे, सद्यः स्वेष्टश्रियोऽर्जना । केनोपायेन जायेतेत्यथो यावद्गुरुर्वदेत् ॥ ४२ ॥ तावत्तुच्छतयी
स्तुच्छचारी गुणधरोऽभ्यधात् । ननु मया व्यवसायादिरुपायः प्राक्प्रबोधितः ॥ ४३ ॥ गुणाकरोऽगृणान्मित्र!,
मयाऽपि ज्ञायते त्वदः । प्रश्नोऽय तु विशेषार्थं, विशेषज्ञा हि साधवः ॥ ४४ ॥ वाच वाचयमेन्द्रोऽपि, प्रोचे
भो! स्थिरचेतसौ । शृणुतं वच्मि यो तत्त्वं, तत्त्ववाचो हि साधवः ॥ ४५ ॥ तथैवम्—धर्मो धनादेर्व्यभि
चारवत्यो, बीजं फलस्येव हि मुख्यहेतुः । उपक्रमाद्याः सहकारिणोऽम्भःसेकादिवत्ते व्यभिचारिणोऽपि
॥ ४६ ॥ दृश्यन्ते सुधियोऽपि हि महोद्यमा अप्यमुद्रदारिद्र्याः । अधियोऽप्यलसा अपि च श्रीपतयः श्रीवि
लासेन ॥ ४७ ॥ उक्तञ्च—"समास्तुल्य विषमास्तु तुल्य, सतीष्वसत्याप्यसतीषु सत्य । फल क्रियास्वित्यथ यन्नि
मित्त, तदेहिनां सोऽस्ति तु कोऽपि धर्मः ॥ ४८ ॥ तद्धर्म एव यत्नो विधीयतां धीयतां च हृदि सैव । यः सर्वा
अपि दत्ते चित्तेप्सितसम्पदः सपदि ॥ ४९ ॥ यतः—"धर्मोद्भव धनत एव समस्तकामाः, कामेभ्य एव सकले

त्रियर्ग सुखं च । कार्यार्थिना हि खलु कारणमेषणीयं, धर्मो विधेय इति तत्त्वविदो वदन्ति ॥ ५० ॥ चतुर्धा
स च दानादिस्तत्र दानं चतुर्विधम् । अभयज्ञानधर्मोपष्टम्भेतरविभेदतः ॥ ५१ ॥ मृत्योर्भीतस्य यत् त्राणं,
प्राणिनः प्रीणनं परम् । स्मृतं तदभयं दानं, प्रधानं सर्वदानतः ॥ ५२ ॥ सुशास्त्रपाठनं व्याख्यानपुस्तकाद्यर्पणा
विना । साहाय्यदानमपि च, ज्ञानदानमुदाहृतम् ॥ ५३ ॥ साधोः श्राद्धस्य वा यत्तु, धर्मनिर्वाहहेतुकम् ।
धर्मोपष्टम्भदानं तदन्नदानाद्यनेकधा ॥ ५४ ॥ पात्रार्हत्वादिदं पात्रदानमप्युच्यते बुधैः । त्रैधं दानमिदं मोक्ष
फलं भोगानुषङ्गिकम् ॥ ५५ ॥ तुर्यं दानं दयाकीर्त्यौचित्यादिभिरनेकधा । तत्रापि च दया दानं, धर्माङ्गमिति
गीयते ॥ ५६ ॥ कीर्त्यौचित्यत्रपाप्रेमप्रीतिदानादिकानि तु । शेषाणि कीर्त्यौचित्यादिमासिमात्रफलानि हि
॥ ५७ ॥ यद्येतेष्वपि दानेषु, धर्मोपष्टम्भधीः क्वचित् । संभवेत्कर्हिचित्क्वापि तद्वेद्मोक्षफलाऽपि तत् ॥ ५८ ॥
शीलमब्रह्मणस्त्यागः, सर्वतो देशतोऽपि वा । देशात्स्वदारसन्तोषोऽन्यस्त्रीत्यागश्च तद्द्विधा ॥५९॥ बाह्यं चोदाऽऽ-
न्तरं चोदेत्युक्तं द्वादशधा तपः । दुस्साध्यसाधकं तीव्रकर्मणामपि घातकम् ॥ ६० ॥ अनित्याशरणत्वादिभेदै-
र्भावधर्ममेवमृतं । जीवितं सर्वधर्माणां, भावना भवनाशकृत् ॥ ६१ ॥ आराधयंश्चतुर्धाऽमुं, धर्मं सम्यक्त्वपूर्व
कम् । प्राप्नोत्यामोक्षसौख्यर्द्धीः, सुधीस्तत्र यतेत तत् ॥ ६२ ॥ विशिष्य पात्रदानादौ, यतनीयं धनार्थिना ।
नादत्तं लभ्यते क्वापि, नानुप्तमपि लूयते ॥ ६३ ॥ धनलाभेऽपि सन्तोषपोषादेव सुखं नृणाम् । न तं विना तु
तच्चक्रिशक्रयोरपि कर्हिचित् ॥ ६४ ॥ इत्थं देशनया गुरोः, शुभगुणश्रेण्याकरः । कर्मणीमिव सम्यक्त्वाख्या

साय मुमुक्षेतमाम् ॥ ६५ ॥ अभव्यानस्वसम्यक्त्वतया गुणधरस्य सा । प्रत्यभास्पिस्पृतिफास्यस्येव तिक्ततया
सिता ॥ ६६ ॥ एकमेव मुनेर्वाक्य, तयोः पात्रकुपात्रयोः । पीयूषविषतां प्राप, परिणत्याऽम्बुवारिवत् ॥ ६७ ॥
उक्त च–"सा साई तपि जल पत्तविसेसेण अंतर गरुअं । अहिमुहि पडिअं गरल सिप्पउडे मुत्तिअं होइ॥६८॥"
आपस्तवापि दानाद्यौ, प्रावर्त्तत विशेषतः । सतां हि शिष्टैराविष्ट, पटपीआयते ह्यपि ॥ ६९ ॥ मतिः प्रस
रति स्मास्य, दानादिषु यथा यथा । पुरान्तरे कीर्त्तिरपि, स्पर्द्धयेव तथा तथा ॥ ७० ॥ परस्तु परयन्मित्रेऽप्युग्र-
च्छत्परमत्सरः । चिन्तया चिन्तयामास, तुच्छया तुच्छधीरिति ॥७१॥ चित्तक्रीतीव जनता, समग्राऽपि गुणा-
स्यहो । गुणान् गुणाकरस्यैव, भाग्यसौभाग्यमुक्यकान् ॥ ७२ ॥ न पुन' कश्चन भ्रान्त्याऽप्यधिकस्यापि मे गुणैः ।
लोकः प्रयात्युपतितः, प्रायस्तत्त्वपरिभ्रंशः॥७३॥सहचारेण चैतस्य, लाभः को मम प्रस्तुत ? । महत्त्वहानिर्हीन हि,
प्राप्नुः प्रायः परानुगम् ॥ ७४ ॥ परानुगामी परचक्रवर्ती, परान्नभोजी परचित्तरञ्जी । परप्रयाची परवित्तजीवी,
सर्वेऽप्यमी स्युर्गुणिनोऽपि निन्द्याः ॥ ७५ ॥ तदेनमत्र मुक्त्वाऽऽशु, गत्वा देशान्तरे परः । श्रियोऽर्जयित्वा स्वां
भाग्ययशां कीर्त्ति च दर्शये ॥ ७६ ॥ एतस्मिंश्च सहायाते, चैतदीयक्रयाणकैः । लाभो भूयान्न भावी मे, समर्थे
पशु वस्तु हि ॥ ७७ ॥ मां विनैष च न क्वापि, गन्ता प्रकृतिकातरः । षष्ठेरिवान्यो व्यापारान्ममैष विषरसपम्
॥ ७८ ॥ विना देशान्तरार्त्तिं च, नाप्येषोऽर्जिष्यति श्रियः । तन्महत्त्वं जने भावि, ममैवोपैर्धनार्जनात् ॥ ७९ ॥
धनानामर्जनेनैव, प्रतिष्ठां प्राप्नुयात् पुमान् । कलाधनार्जनादेव, कलावानपि पूज्यते ॥ ८० ॥ ध्यात्वेति सखी-

मूपाशु, मित्रस्याशातमेव सः। भृत्वा पथ्यैरनोराजिं, मनोऽपि च मनोरथैः ॥ ८१ ॥ चचाल प्रीतिपाथालब्ध लपयचलामपि। प्रियोऽर्जयितुमत्युत्कः, काऽपीर्ष्योऽहो ? सुहृत्स्वपि ॥ ८२ ॥ युग्मम् ॥ साय श्रुत्वा स्वमि त्रस्य, चलन मेलन सत्कृत्। इच्छस्तमन्वगात्तूर्णं, गौरिव प्राग् गुणाकरः ॥ ८३ ॥ न विमृश्यमतिप्रेम्णीत्येका पयेप पुराहतिः। स क्रामप्रतिपक्राम, चरमं यावत्क्वास्किपत् ॥८४॥ तावत्तमोऽसुहृर्मित्रदोर्मनस्यमिव स्फुटम्। तत्राऽभ्यापान्तमध्वन्यमेक सोऽपृच्छदुत्सुकः ॥ ८५ ॥ युग्मम् ॥ कियद्दूरं गत सार्थः, पान्थ ! पान्थोऽप्यथाऽ भ्यधीत्। इयत्कालेनातिदूरं, यातः सार्थः कथ मिलेत् ? ॥ ८६ ॥ तत्पश्चादेव चलन, साम्प्रत साम्प्रत तव। असत्या न मदोषे हि, प्रदोषे संमुखे भजेत् ॥ ८७ ॥ इत्युक्त्वा स पुरं प्राप, कुमारोऽपि व्यचिन्तयत्। आः किं मे दुर्दैव इव, सुहृदेव न्यवेदि न ? ॥८८॥ किं मया काप्यय दूनः, किं वा व्युद्ग्राहितः परैः ?। किं वाऽन्तः कृत्रिमप्रेमा, पद्मा मामप्यसासहि ॥ ८९ ॥ किमनल्पैर्विकल्पैर्वा, ध्रुव देशान्तराश्रितः। असौ कुशलकोटीरः, कोटीरप्यर्जिता श्रियः ॥९०॥ कथङ्कारं पुनरहं, करिष्ये द्रविणार्जनम्। विना नीवीं न वाणिज्य, नीवी नैव च काऽपि मे ॥ ९१ ॥ द्रव्यार्जने पितुर्नीव्या, भवेद्भुक्तिः पितुःश्रियः। न पुत्रस्य तथा मे तु, तत्यागैकाग्रचेतसः ॥ ९२ ॥ स्वीकार परनीव्यास्तु, परामवपद परम्। वित्ताय यः परवित्तावर्जी धिक्तं नराधमम् ॥९३॥ तावदेव पुमान् श्लाघ्यस्तावदेव गुणाश्रयः। नैव यावत्परमुख, प्रेक्षते स्वात्मनः कृते ॥ ९४ ॥ अनर्जित्वा श्रियः स्वेष्टा, अकृत्वा पात्रसाच ताः। अहत्वा चान्यदैन्यानि, कथ च स्यां गुणाकरः ? ॥ ९५ ॥ इतस्तत्रैव तपू पास्पाम्यचरयं

स्वगृह यदि । स्वदेशपोगात्कथमप्यार्जिष्यामि कियद्धनम् ॥ ९६ ॥ विचिन्त्यैव स्वदेष स, परीक्षितुमनीर्ष्येऽभूत् । पक्षो पतीव शून्ये तत्रैव, स्थितवांस्तां निशीथिनीम् ॥ ९७ ॥ इतश्च कश्चित्तत्रास्ति, यक्षराट् निकटे वटे । यक्षो मुजिष्योऽमुष्यैकः, कुतोऽप्यागात्सकौतुकः ॥९८॥ कोऽयं विप्रो विधुर्विधाधातारीदिति विस्मिते । स्थिते गुणाकरे गुप्त, स स्व स्वामिनमिल्लयक ॥ ९९ ॥ इतोऽस्ति योजनशतात्परतः श्रीपुर पुरम् । त्रिधाऽपि कापि यत्रा मूर्च्छापा कोटिध्वजध्वजैः ॥ १०० ॥ अष्टौ मुख्या महेभ्यानां, मधेभ्याः सन्ति तत्र च । विश्वाभारतयाऽऽख्याता, दिग्गजेन्द्रा इवापरे ॥ १ ॥ धनाकरो धनपतिर्धनधर्मो धनेश्वरः । धनसारो धनगुरुर्धनाख्यो धनसागरः ॥ २ ॥ इति तथ्याभिधानानां, प्रधानानां नरेशितुः । भाग्जातामात्रपुत्राणां, पुत्र्येकैका क्रमादभूत् ॥ ३ ॥ गुणावली गुणवती, सुगुणा गुणमालिनी । गुणमाला गुणलता, गुणश्रीर्गुणसुन्दरी ॥ ४ ॥ अष्टदिक्कोणसौभाग्य सारैरिव विनिर्मिताः । अष्टापदीष्ठाः पित्रोस्ताः, प्राणेभ्योऽप्यधिक पुनः ॥ ५ ॥ अष्टदिग्वर्त्तिनां यूनां, संमोहनलता इव । चतुःषष्टिकलावासास्ताः, क्रमाद्यौवनमासदन् ॥ ६ ॥ तासां समानवयसां, समानमनसां सदा । समानगुणशीलानां, समानरूपसम्पदाम् ॥ ७ ॥ विप्रतीनां परप्रीतेरैकात्म्यमिव शैशवात । इति प्रतिज्ञा तुल्यैवाभूद्वियोगभिया मिथः ॥ ८ ॥ युग्मम् ॥ शीतांशुरिव ताराणामेक एव वरोऽस्तु नः । विश्वविश्वप्रशस्यश्च, सोऽपि कोऽपि हि नापरः ॥ ९ ॥ गृहवासः कारावासः, स्वेष्टयोग विना स किम् ! । उच्छिष्टाश च स्वं च, कः सुधीर्भोक्तुमिच्छति ! ॥ १० ॥ ततस्तज्जनकास्तादृग्वरप्राप्त्यै कृतादराः । नैमित्तिकमित्यपृच्छन्,

को न्वासां भविता वरः ? ॥ ११ ॥ नैमित्तिकोऽपि निमित्तनिपुणः प्रणमाण तान् । मा स्म चिन्तातुरा भूवन्, भवन्तोऽल्पमपीह भोः ! ॥ १२ ॥ युष्माकमेकगोत्राणां, गोत्रदेव्येव भक्तितः । तुष्टा शिष्टावसर्संप्राग, वरं सम्भमपिष्यति ॥ १३ ॥ श्रुत्वेति ते तपःपूजाविधिभिः स्वां गोत्रदेवताम् । तोषयामासुरानन्दं, पोषयामासुरात्मनः ॥ १४ ॥ तयाऽपि तुष्टया स्पष्टमादिष्टमिति तान् प्रति । चिन्तैवरानिर्विष्टशिष्टलग्नदिनोपरि ॥ १५ ॥ सममामपि सामग्रीमभ्यग्रीभूय भूयसा । कुरुतोपक्रमेणाशु, तद्विवाहोत्सवाय भोः ! ॥ १६ ॥ युग्मम् ॥ प्राप्तायां समयेलायां, ऐष्याऽपि मया रयात् । वरः सुरसुरूपश्रीः, कुतोऽप्यानेष्यते ध्रुतम् ॥१७॥ इति गोत्रसुरी वाक्यहृष्टास्कुस्तथैव ते । तुष्टेवतयाऽऽदिष्टे, कः सन्देग्धि विवग्धधीः ? ॥१८॥ इदानीं च सुदानीताः, पितृभिर्मणिमण्डपे । कन्या अद्यापि निर्माप्य, स्नानभूषादिकक्रियाः ॥ १९ ॥ सुवासिन्यः प्रीतिरसैरुल्लासिन्यः समन्ततः । गायन्त्य सन्ति तन्नोभैरुत्कल्लोलैरुल्लभिः ॥ २० ॥ प्रत्यासन्नाऽमवल्लग्नवेलाऽपि न पुनर्वरः । प्रादुरासीत् पुरस्तासु, न जाने किं भविष्यति ? ॥ २१ ॥ विना वरमहो ! चित्रमुद्वाहः कोऽप्ययं नवः । इत्युच्चैर्विस्मयन्ते स्म, नरास्तत्र सुरा अपि ॥२२॥ तवेतत्कौतुकालोककृते त्वरयत प्रभो ! । प्रसृमाहातुमेवास्मि, समायातः समुत्सुकः ॥ २३ ॥ ग्रस्यमप भोक्यमपूर्वं प्राप्य किंचन । स्मरेत् प्रसुमभीष्ट वा, न यः स सुजनः कथम् ? ॥ २४ ॥ निशम्येत्युत्सुपाताशु, यक्षः स्वे समुज्जिष्ययुक् । तत्पुरं प्रति पन्थानं, कुमारस्येव वर्णयन् ॥ २५ ॥ तत्र यक्षोक्तमुत्कर्णमाकर्ण्य वीणाकरः । व्याजहारनिवहो ? धन्यः, कस्तासां भविता वरः ? ॥ २६ ॥ तावत्ता

अपि सन्त्येके, कौतुक पुरुषोत्तमाः । मादृशा अपि केचिच्च, धनार्जनेऽप्यल न ये ॥ २७ ॥ यद्विवाहेऽत्र नीचै
र्माळोकनेनाफलेन किम् ? । स्वस्वैवशादेव, सर्वेषामपि सम्पदः ॥ २८ ॥ किन्तु तत्कौतुक प्रेक्षे, कथञ्चिद्यदि
तद्दूरः । शक्या न भोक्तुं भूपाग्राभेद्रुमपि तर्हि किम् ? ॥ २९ ॥ प्रांशुप्राप्यफल प्राप्तु, वामनस्येव मेऽथवा ।
तत्र गन्तुमशक्तस्य, वृथैवैष मनोरथः ॥ ३० ॥ यद्वा चिन्तितं यद्वा, तत्तथा यस्य सिद्ध्यति । स भाग्यवान्
द्वयमिति, प्रवदन्ति विदांवराः ॥ ३१ ॥ तदद्य भाग्यवत्तां स्वां, परीक्षिष्येऽत्र निश्चितम् । मद्भाग्यशातकु-
म्भस्य, घर्षेव कषपट्टिका ॥ ३२ ॥ ध्यात्वैवेत्यसौ तेषां, गोधवेषतया ययौ । उद्वाहमण्डप निन्ये, स्वैव
कृतिनां फलम् ॥ ३३ ॥ अथ वरः स्फुरत्कान्तिर्द्विधाऽपि हि गुणाकरः । दृश्य पन्चिमधुपुरुष, पुष्पवृष्टिमसृष्ट
सा ॥ ३४ ॥ स तत्र सहसोद्वीक्ष्य, तदास्योत्पन्नवेपथत् । कन्यास्तज्जनकाश्चाम्ब, सर्वे मुमुदिरेतराम् ॥ ३५ ॥
तास्तेन कन्याजनकैर्जनकैरपिणीन्दुना । विवाह्य भूपाद्विधिर्षि, पर्यणाय्यन्त कन्यकाः ॥ ३६ ॥ मनोऽभीष्टवर
प्राप्त्या, तुष्टाः कन्याऽष्टकस्य ते । महान्तमुत्सवमहं, महोत्साहतया व्यधुः ॥ ३७ ॥ हिरण्य कोटीमेकैकामेकै
कमथ गोकुलम् । द्वात्रिंशत्पात्रसम्बद्धमेकैक दिव्यनाटकम् ॥ ३८ ॥ एवं सर्वेऽपनिःशेषभूपारैभाजनादिकम् ।
जात्याश्वशय्याविस्तुरासनमञ्चासनादि च ॥ ३९ ॥ सगृहोपस्करावासवासवास्यादि चोचकैः । तेऽष्टावपि वधु
स्तस्मै, पाणिमोक्षणपर्वणि ॥ ४० ॥ त्रिभिर्विशेषकम् ॥ उदारमनसां दानलीला स्वाभाविकी किल । जामाता च
स तादृक्षस्तद्दान स्वल्पमेव तत् ॥ ४१ ॥ स विमानसमानेषु, रम्यहर्म्येष्वमंस्थत । अष्टाभिर्विलसत्ताभिरष्ट

रूप इवाष्टमी॥४२॥ मेरुः कुलाचलश्रीभिर्दिग्भिर्भानुरिवाष्टभिः। अष्टमहिषीभिरिन्द्रोऽष्टाभिः सिद्धश्च सिद्धिभिः
॥ ४३ ॥ अष्टाभिर्मूर्तिभिः शम्भुरिव कान्ताभिरष्टभिः। अवियुक्तोऽनिशं नानाक्रीडारसनिमग्नहृत् ॥ ४४ ॥
मानुवितास्वमप्येषोऽपिवन् वैषयिकं सुखम् । संसारसुखसर्वस्व, कियत् समयमन्वभूत् ॥ ४५ ॥ त्रिभिर्वि
शेषकम् ॥ अथ तस्यां निशीथिन्यां, सूनोः सद्मन्यनागमात् । गुणाकरस्य पितरौ, जज्ञाते भृशमातुरौ ॥ ४६ ॥
रात्रौ प्रातश्च सर्वत्र, शोधनेऽप्यनवाप्य तम् । पाणिच्युतचिन्तामणिमिवास्मानमशोचताम् ॥ ४७ ॥ अन्यदा च
तदास्थां तौ, ज्ञान्तौ ज्योतिर्विदांवरम् । पप्रच्छतुः सपुत्रस्य, श्रेयः स्वस्यागमादिकम् ॥ ४८ ॥ पृच्छालग्न
च लग्नांशा, सम्यग् निर्णीय सोऽप्यवक् । मुधैव मा स्म खिद्येथां, श्रेयसी वां यतः सुतः ॥ ४९ ॥ लीलार्जि
तमहर्द्धिश्च, दानभोगैः प्रसिद्धिभाक् । महासौख्याब्धिलीनश्च, पर दूरेऽस्ति स कचित् ॥ ५० ॥ किञ्च प्राप्स्या
मितः सोऽस्ति, भास्वानिव मघोद्गपी । वर्षेण स्थानविज्ञान, द्विषर्षोवास्य सङ्गमः ॥ ५१ ॥ तद्गिरा सुखवाते
तौ, मासपुत्रावियोगकैः । इष्टस्य हि शुभा शुद्धिरपि तत्सङ्गमायते ॥ ५२ ॥ ततः प्रतिदिनं पित्रादीनां
तस्यानशोधिनाम् । कथञ्चिदतिचक्राम, वर्षं वर्षशतायितम् ॥ ५३ ॥ अथैकः श्रीपुरपुराद्वन्दी बन्दीकृतद्विषः ।
राज्ञः पर्षदि तत्रागाद्भाकीर्त्त्यस्येव नारदः ॥५४॥ गुणान् गुणाकरस्योच्चैर्वर्णयामासिवांश्च सः। वणिजोऽपि नृपस्याग्रे,
महा हि स्वेष्टसंस्तुताः ॥ ५५ ॥ तदाऽन्यवादीत्सुधाशाको वक्रोष्टिकां सृजन् । शृगालं श्लाघसे मेऽग्रे, किं
सिंहस्येव वाणिजम् ? ॥ ५६ ॥ महोऽप्याचष्ट भूजास्मा, देवसेवकवत्सलः । सर्वाङ्गीणगुणैरेव, वणिग् व्याप

पर्यंतेऽत्र सः ॥ ५७ ॥ धानेयमिति सत्पुत्र, शिरस्यारोप्यते न किम् ? । मृगनाभिर्मृगनाभिमवाऽपीप्स्येत किं न
वा ? ॥ ५८ ॥ भाग्यवान् वेयतादिष्टकन्याऽष्टकवरः स हि । लीलया लक्षदायी च, कल्पद्रुरिव जङ्गमः ॥ ५९ ॥
तन्निशम्य चमत्कारभाजि सामाजिकव्रजे । गुणाकरस्य जनकः, स्थितस्तत्रेत्यचिन्तयत् ॥ ६० ॥ ध्रुव मे तनयः
सोऽय, संभवेयत्कुतोऽन्यतः । प्रोल्लासः कोऽपि हृदि मे, धाराहतकदम्बवत् ॥६१॥ प्रोक्तं ज्योतिषिकेणापि, पञ्चर्षान्ते
सुतस्य ते । स्थान विज्ञास्यते तेनास्मिन्नर्थे संशयोऽस्तु कः ? ॥६२॥ एतच्च तदपि व्यवस्या, पृच्छामीति विमृश्य
सः । पत्रिवृन्दारक घृष्ट्वा, स पुत्र निभिकाय तम् ॥ ६३ ॥ उत्कण्ठितस्ततः पुत्राह्वानाय प्रजिघाय सः ।
अ-योरिकगर्भसन्दर्भमेशुभ्रक्षेमकरं नरम् ॥ ६४ ॥ द्रुत गत्वाऽर्पितं तेन, लेखमेष गुणाकरः । प्रेम्णा सम समु
न्मुद्र्य, वाचयामास तद्यथा ॥ ६५ ॥ स्वस्तिजयस्थलनगरात् पत्रः प्रणयाद्गुणाकर स्वसुतम् । आदिशति यथा
श्रीजिनगुरुप्रसादेन नः कुशलम् ॥ ६६ ॥ सकलकुशलकिंवदन्ती ज्ञाप्या नः प्रीतये त्वयाऽपि रयात् । अथ
कार्यमार्य ! भवतोऽद्भुता श्रुता काऽपि परमर्द्धिः ॥ ६७ ॥ सुचिरं त्वद्विरहमहावुस्सहदुर्भिक्षदुःखितानां नः ।
तेने तेनेदानीं नन्यमृतप्रातराशसुखम् ॥ ६८ ॥ किन्तु भवदङ्गसङ्गमसुखाय निखिलेष्टभोजनाय वयम् । उत्कै
रत्वरामहे तत्त्वरस्य तस्मिन्नुपायविधौ ॥ ६९ ॥ किञ्च—पितराद्युपेक्ष्य वत्सः श्वशुरौकसि तस्थुषः स्थिरतया ते ।
सत्पुरुषपथः कथमिव भावीति विचिन्त्यमेतदपि ॥ ७० ॥ इति वाच्यवाचनातः प्रेमार्द्रमना मनाग् भवेद् याव-
त् । तावत्तसल्लेखान्ता पुरतः सोऽभ्योकिमद्राक्षीत् ॥७१॥ सा चैवम्—गाङ्गेय ! गेयगरिमादिगुणाढ्यकाम ! विश्वैक-

मूपण ! विमूपण ! सौख्यहेतोः । सन्मानतोऽन्यजनताजनितामि जातु, मातुः स्मरस्यपि चिरास्विन्नु तसथाई-
म् ? ॥७२॥ माभ्रा मात्राधिकप्रेम्णेत्यन्योक्त्या शिक्षितेऽमया । सोऽमुनोर्वीव भिन्नोऽन्तर्गन्तुमस्यौत्सुकायत ॥७३॥
कथञ्चनाप्यनुज्ञाप्य, श्वशुरांश्चलितस्ततः । परीवारपरीताभिः, कान्ताभिः शोभितोऽष्टभिः ॥ ७४ ॥ प्रतिग्राम
प्रतिपुरं, चमत्कारं श्रिया सृजन् । स्वल्पैरेव दिनैः प्राप, स राजेव निजं पुरम् ॥ ७५ ॥ युग्मम् ॥ प्रवेशितस्य
पित्राद्यैः, पुरान्तः प्रवरोत्सवैः । आभूपगोप सर्वेभ्यः, श्लाघाश्लेतमवासवान् ॥ ७६ ॥ परीक्षितस्वभाग्यर्द्धिरित्य
सेद्वार्थलाभतः । शिलीधाम्यस्य मित्रस्यागम सोऽचैक्ष्वेक्षत ॥ ७७ ॥ देशान्तरे व्यवहरन्नथो गुणधरः क्रमात् ।
पितुर्नीव्या पितुर्मार्गैरार्जिजत् प्रोर्जिताः श्रियः ॥ ७८ ॥ अहो भाग्यं मम महत्, सहसैव श्रियोऽर्जनात् ।
इत्यन्तश्च जमर्षोचैस्तुच्छोऽल्पेनापि दृप्यति ॥७९॥ यतः—"पगेणवि वीहिणा उंदुरस्स जइ होंति पावका हत्था ।
तह मन्नुगियपरमत्था थेवेणवि उत्तणा हुंति ॥ ८० ॥" तुष्टः स लाभतस्तस्मादसन्तुष्टश्च लोभतः । कन्याभि
चार्थोऽन्यदेश, वस्तुस्त्रस्थे ततोऽप्यगात् ॥ ८१ ॥ तत्रापि लेभे लाभ स, भूयांसं व्यवसायवित् । वाणिज्यनैपुण
प्रायः, साधनं हि धनार्जने ॥८२॥ असर्वगर्वसोत्कर्षहर्षः स्वकपुरं प्रति । ततः प्रतिनिवृत्ते, भूरिभाण्डभरेण सः
॥८३॥ सोऽनर्पसार्थपथ्वी, प्रासश्चैकां महाटवीम् । दावानलश्च प्रलयानलवत् प्राज्वलत्तराम् ॥८४॥ तं मेक्षितुमिवो-
त्तालकालजङ्घागुपैव सः । सहस सद्भूतं यत्रा, तस्य दावानलस्य च ॥ ८५ ॥ ततस्त्वरयतस्तूर्णं, हाहाकारपरा
यणोः । कथञ्चिद्भृतकैः सार्द्धं, जीवनाश ननाश सः ॥ ८६ ॥ चाक्चोक्षाप्यशेष प्राक्, तस्य पश्यत एव तु । बभूव

भस्मसात्तस्मात्तपः कोपोद्यादिव ॥ ८७ ॥ निर्भाग्य एष निर्भर्त्स्य, इतीव भृतकैरपि । इतस्ततः स विभ्रस्तैर्वि-
ध्वस्तैरपि तत्यजे ॥८८॥ घनेचर इवारण्ये, शून्ये शून्येन चेतसा । सम्भ्रमी बम्भ्रमीति स्म, सोऽपि निर्वेदमेदुरः
॥ ८९ ॥ प्रतप्तसप्तरात्रेण, क्षुत्तृडार्त्तः कथञ्चन । विवेश सन्निवेशं स, बम्भ्रम्यन्नम्बिकावतीम् ॥ ९० ॥ तत्र च
भैक्ष्यसौ दैवयोगाद्येकेन योगिना । प्रकृत्या सानुकम्पेन, सकम्पेन तदर्त्तितः ॥ ९१ ॥ पृष्ट्वा विज्ञातवृत्तेन, तत
स्तेन निजालये । नीत्वाऽशनाद्यैः पित्रेव, स्वपुत्रः पोष्यते स्म सः ॥ ९२ ॥ विविधौषधिवैदग्धीलब्धिनाऽथ
कृपाब्धिना । भूभृन्नितम्बे नीत्वा स, प्रादर्श्यैका महौषधीः ॥ ९३ ॥ एतां भो ! प्रत्यभिज्ञातां, सम्यक्कुर्या अहा-
र्यधीः । मा मुहः स्मौषधीवृन्देऽज्ञायूथ इव मुग्धधीः ॥ ९४ ॥ रवौ कृष्णचतुर्दश्यामर्द्धरात्रेऽथ भो ! यथा ।
छात्रेणेव गुरुर्विद्या, ग्राह्येऽहमिमां त्वया ॥ ९५ ॥ योगिनेत्युदिते तेनाप्यभिज्ञानादिना तथा । सा निर्ममे
निर्भ्रमेण, स्व एवं ग्राहयेप्सुः ॥ ९६ ॥ अतिक्रान्तेऽथ यामिन्या, यामयुग्मे स योगिराट् । विधायास्य शिखाब-
न्धं, विभयन्धनिबन्धनम् ॥९७॥ अभ्यधान्मम सान्निध्याद्विख्यातमना व्रज । दीप्यमानां दीपशिखामिव दृष्टौषधीं
च ताम् ॥९८॥ युग्मम् ॥ सा चोपरिष्टाद्वामेन, धृत्वा दक्षिणमुष्टिना । तामुत्पाट्यास्तशङ्काऽधश्छेद्या त्वयोऽब्ज
नालवत् ॥ ९९ ॥ दृष्टौषधीमुष्टिबन्धस्त्यक्तान्यप्रतिबन्धधीः । समाश्रयन् सात्त्विकत्वं, पश्चात्काप्यविलोकयन्
॥ २०० ॥ भयङ्करानगणयन्, रौद्ररूपस्वरादिकान् । तामत्रानय योगीश, मानसे ध्यानसम्पदम् ॥ १ ॥ युग्मम् ॥
विध्यातया तया सिद्धरसेनेव वशो भृशम् । भाविनी स्वर्णसिद्धिस्ते, भाग्यसिद्धिरिवाङ्गिनी ॥ २ ॥ जातया च

तथा वत्स !, छाययेवातपो ध्रुवम् । विघ्नोऽप्यस्यप्रमुग्नोऽपि, वारिप्रोपद्रवस्तव ॥ ३ ॥ इति योगिगिरं श्रुत्वा, सात्त्विकी सात्त्विकाग्रणीः । गत्वा स उक्तविधिना, तां जग्राह महौषधीम् ॥ ४ ॥ दृष्टश्च चुक्षुभत् स्पष्टदृष्टदुष्ट-विचेष्टितान् । भूतान् प्रभूतान् प्रेतानप्युपेतान् परितोऽधिकम् ॥ ५ ॥ महाट्टहासीकरसान्, राक्षसानप्यसह्यधाः । शिवादिद्युम्नधरवान्, भैरवानपि भूरिशः ॥ ६ ॥ परीषहानिव मुनिः, स सर्वानवहेलयन् । क्रमात्क्षमायक्षमानो निःसमानोत्साहसाहसः ॥ ७ ॥ द्विधाऽपि विषमां प्रव्यभावाभ्यां भूधरावनीम् । दुर्लङ्घ्यां लङ्घयामास, भव स्थितिमिव व्रती ॥ ८ ॥ चतुर्भिः कलापकम् । जितकाशी ततोऽयासीद्रव्यतो भावतोऽपि सः । समामुर्वीं सुखे नैव, पावनगरमार्गवत् ॥ ९ ॥ तावदुर्वेपर्यस्त, इव स्रस्तोऽग्रिमृक्तः । प्रस्तरस्तरसाऽकस्मादेकस्तत्पृष्ठतोऽपतत् ॥ १० ॥ तनुमपत्स्फटमवाकारात् रासभसारिणा । संभ्रान्तचेताः सहसा, स पश्चात्पर्यलोकयत् ॥ ११ ॥ तत्क्षणादस्य कष्टेष, दृष्टेर्नष्टा महौषधी । स्थिरीस्यात्तादृशां वस्तु, तादृशस्य करे कथम् ! ॥ १२ ॥ विषण्णः सन् स निःशेष, तद्व्यथा योगिनो जगौ । योगिनाऽप्येष जगदे, जगदेकहितात्मना ॥ १३ ॥ अतुच्छ वत्स ! ते सत्त्व-मुपक्रमश्च निस्तमः । न परं प्राकृत पुण्यं, तद्विना ते तु निष्फलम्॥१४॥ यतः—"विकटा भट पर्वताटवीस्तर वार्धीन् भज भूपतीनपि । अपि साधय मन्त्रदेवता, ननु सौख्यं सुकृतैर्विनाऽस्ति ते ॥ १५ ॥" धनार्जने कथाणां तद्रुप-पास्योपास्यतां त्वया। सन्तोष एव येन स्यात्, त्रैलोक्येऽप्यतिशायिता ॥१६॥ तेनेत्युक्तोऽपि लोभान्धः, स बभ्राम सर्वं भृशम् । चित्तार्थिनां हि चित्तानि, न निर्विण्णन्ति कर्हिचित् ॥ १७ ॥ स भ्राम्यन् मलयग्राममभिराममुपे

पिपासुः । प्रेक्षाप्रवके परिव्राजा, विभ्राजा दम्भविभ्रमैः ॥ १८ ॥ पृष्ट्वा ज्ञात्वा च तद्वृत्तं, तेनेत्यूचे स साञ्जसम् ।
व्यपनेष्यामि ते दुःखं, मा विषीद वसीव च ॥ १९ ॥ कुहीमहीरुहं रक्तक्षीर नीरन्ध्रमादरात् । काप्यन्वेषय
येनाशु, दारिद्र्यं द्रावयामि ते ॥ २० ॥ महोत्साहेन तेनापि, काप्यन्वेषयता सता । सोऽप्यापि कल्पद्रुरिवोपक्र-
मार्त्तिः न वाप्यते ? ॥ २१ ॥ व्यज्ञापि च परिव्राजे, तेन सोऽप्यथ हृष्टवत् । सिद्धिकृत्सिद्धियोगाद्धि, तेनामा
तत्पथ ययौ ॥ २२ ॥ ततोऽभिमन्त्र्य स पूर्वसङ्गृहीतौषधीयुतम् । चाक्चक्यगणैर्विश्वक्, परिव्राट् पर्यवेष्टत
॥ २३ ॥ कपटैकपटुस्तत्र, ज्वालयामास चानलम् । शिखापन्थमिषात्त चाजुहाव निजसन्निधौ ॥ २४ ॥
उपेत्य नीचैर्भूत न, ततः स चपलश्छली । केशपाशे इव मूर्ध्नि, धृतवानिव तस्करम् ॥२५॥ ऊर्ध्वमुत्क्षिप्य च क्षिप्रं,
पापात्मा न हुताशने । आहुतीकुरुते यावच्छागं यज्वेव निर्घृणः ॥२६॥ मार्गे नूनमनार्येणेत्युच्चस्तीर्थः प्रसभ सः ।
दुष्कर्मणः स्वमात्मैव, तावत्तस्मादभूद्गत ॥२७॥ युग्मम् । ततस्तौ क्रोधविधुरौ, योधाविव सुदुर्धरौ । प्रक्षेप्तुमन्तर्वह्नं,
दुढौकाते परस्परम् ॥ २८ ॥ दुःसहं कलहं वीक्ष्य, न तयोः प्रेतयोरिव । पृथक्कुरुवकैर्गोपा, भयोद्भ्रान्ततया रयात्
॥ २९ ॥ शुश्राव दुःश्रव तव, तत्रासन्नमहापुरात् । मृगयामागतः क्ष्मामृत्कुमारः स्फारविक्रमः ॥ ३० ॥ तेजः-
सारः स सान्वर्थाभिधानः सधनुःशरः । द्रुत तत्राययौ युम्यां, क्षमन्ते क्षत्रियाः कथम् ? ॥ ३१ ॥ परिव्राजक
पापस्य, दुराशस्य दुरात्मनाम् । श्रुत्वा गुणधरेणोक्तौ, तस्मै चुक्रोध सोऽधिकम् ॥ ३२ ॥ वह्नाविन्धनसाधके,
प्रतिस्पुत्पाद्य न च सः । दुष्टशिक्षा शिष्टरक्षा, रीतिर्नीतिविदां खलु ॥३३॥ स चाभिवग्धः समभूदिव्यः सोष

णपूरुपः । यथया चिन्त्यतेऽन्यस्मै, तत्तथा स्वयमाप्यते ॥ ३४ ॥ तस्मादाकस्मिकाञ्ञामामुष्य भूपस्तुवोऽभवत् ।
आनन्दः कोऽपि यन्माने, त्रैलोक्यमपि सङ्कटम् ॥ ३५ ॥ सुगोप गोपतेः पुत्रस्तत्रैव निधिवच्च तम् । यथा तथा
कथ तादृग्, वस्तु पित्रः प्रकाशयेत् ? ॥ ३६ ॥ किञ्चित्पथ्यदनमाप्य, प्रदाय कृपया धनम् । वनीपकमिवापेन,
विससर्जायनीशसूः ॥ ३७ ॥ श्वेष लेखनमात्रेण, तावन्मात्रेण तुष्टिभाक् । स्थानात्ततः सोऽपि गच्छंस्तुच्छमि
न्तामिति व्यधात् ॥ ३८ ॥ जागर्यपापि मे भाग्यमङ्कुरमहो ! महत् । छुटितोऽस्मि प्रदिव्यस्माप्यमाङ्किकट
सङ्कटात् ॥ ३९ ॥ इयद्वित्तमपि प्राप, स्वयमेवामुनाऽर्पितम् । तत्काप्यधापि सुमाप, मया मूनं घन मङ्क्षु ॥ ४० ॥
अतः परं निजपुरं, गच्छन्नस्म्यर्जिताऽस्म्यहम् । सुषमिष्ट धनं दैवेऽनुकूले किं न सिध्यति ? ॥ ४१ ॥ ध्यायन्निति
प्रयस्थितः, स्वपुरं प्रति दुर्मतिः । एकस्य मन्त्रसिद्धस्य, मिलितश्चान्तराऽध्वनि ॥ ४२ ॥ गोष्ठीं गरिष्ठां तन्वानः,
सम तेन स मन्दधीः । प्रापदुद्यानमेकस्य, सन्निवेशस्य सन्निधौ ॥ ४३ ॥ भोजनावसरे तत्र, मन्त्रसिद्धोऽस्य
पृच्छ तम् । भो भद्र ! भोज्यं तेऽभीष्टं, वद सम्पादयामि किम् ? ॥ ४४ ॥ प्रभूतान् सुरभीभूतान्, कर्पूरैः सिद्ध-
केशरान् । देहि मे देहिकल्पद्रो !, मोदकान् मोदकारकान् ॥ ४५ ॥ तेनेति शिष्टे हृष्टेन, ध्यानमापूर्य सोऽपि
तान् । तादृशानानिनाय प्राक्, पूर्वं सज्जीकृतानिव ॥ ४६ ॥ अविदस्तौ ततस्तौ तान्, बुभुजाते यथारुचि ।
यथाऽभ्यातिथ्ये दृष्टा, सुष्ठो रीतिरियं सताम् ॥ ४७ ॥ एव विकाले लण्डापूर्णतपूरान् प्रपूरितान् । द्विती-
येऽह्नि प्रगे सर्पिःशर्करामिश्रपायसम् ॥ ४८ ॥ आलापानि च सायाह्ने, ह्यपलाप्याम्यनेकशः । तृतीयेऽह्नि पुनः

प्रात', शाखिवालिभुनादिकम् ॥ ४९ ॥ सायदिने च लपनोल्लासिनी लपनमियम् । तुर्ये प्रान्तमेण्डकायान्, साय
नैका सुस्वादिका ॥ ५० ॥ चतुर्भि कलापकम् ॥ इति प्रतिदिन प्रेक्ष्य, शार्कि तस्य स विस्मितः । धुव महानु
भावोऽयमिच्छतेति चिन्तयन् ॥ ५१ ॥ छन्दानुवृत्तिप्रणतिश्लाघाविश्रामणादिभिः । दुर्विनीतोऽपि शश्वत्,
सिषेवे सुविनीतवत् ॥ ५२ ॥ युग्मम् ॥ यतः—"परगुणगहण छन्दाणुवत्तण विअमककसं वयणं । निच्चमवोस
रगहण अमूलमंत वसीकरण ॥५३॥" सोऽन्यदा त मुदा भक्त्यावर्जित दम्भवर्जितम् । यच्छेह कृत शक्ति,
कल्पद्रोरिव ते विभो ! ॥ ५४ ॥ सिद्धोऽप्यभिदधे भद्र !, दारिद्र्योपद्रुतो भृशम् । अयम्भ्रम सुख प्रव्यसम्भ्रम
विभ्रदाशये ॥ ५५ ॥ कृपालुमेक चैकत्रालोक्य कापालिकोत्तमम् । प्रणेमिवान् प्रोचिवांश्च, दारिद्र्योपद्रवं निजम्
॥ ५६ ॥ दीनार्सवत्सलस्स्यकच्छल' सोऽपि कृपापरताम् । नेता वेतालमन्त्र मे, गुरुस्तस्यमिवादिशत् ॥ ५७ ॥
तन्मन्त्रसाधनादद्रीत्त्मेऽत्र' पुनः किपत् । कर्ताऽस्मि सर्वसम्पत्तिं, सपद प्राप्नुयास्तु ते ॥ ५८ ॥ ततः स
तुष्टिपुष्टात्मा, सार्द्ध सिद्धेन भूत्यवत् । दिनानि कानिचिन्मार्गे, न्यूढः मोढघनाशया ॥५९॥ सिद्धोऽन्यदा जगादे
तस्तव देशोऽस्ति वामतः । आसन्नोऽह पुनर्दूरं, गन्ता दक्षिणत' सखे ! ॥ ६० ॥ यद् तत्सम्पद् सम्पादये ते
भद्र ! कीदृशीम् ? । ईशोऽह हन्त ! वित्तस्य, दातु कोटीरपि स्फुटम् ॥ ६१ ॥ कोटीभिरप्यसन्तुष्टस्ततो गुण
परोऽप्यवात् । त मन्त्रमेव मे देहि, बीज यः सर्वसम्पदाम् ॥ ६२ ॥ सिद्धः प्रोवाच याचस्व, स्वर्णकोटिशता
न्यपि । महाकष्टैकयत्नेण, किं मन्त्रेण प्रयोजनम् ? ॥ ६३ ॥ यदेष विषमः प्रोक्तैः, प्राणसंशयकृत्सुणाम् । चेत्पर

वेताल', करालः कालरूपभृत् । सत्त्वेनानेन रे क्लीब !, मां वशीकर्तुमीहसे ? ॥ ८० ॥ स्वकर्मणः फल भुङ्क्ष्व,
मत्सेयसिति त क्रुधा । सगुडैस्ताडयामास, सत्यमूलकषमृशाम् ॥ ८१ ॥ युग्मम् ॥ आरारटत्कटुरवैर्भूपीठे च
व्यलोलुठत् । सोऽसासहीमारफीव, दुःखं धिग् मन्दभाग्यताम् ॥ ८२ ॥ भूरिप्रहारसंमूर्च्छनम्रच्छोविपच्छाय
विग्रहः । कथञ्चित्सुषुपे तेन, निश्चेष्टीकृत्य काष्ठवत् ॥ ८३ ॥ प्रातस्तन्मातुलस्तत्रान्वेषयंस्त समाययौ । श्मशाने
शायपरमेक्ष्य, पतितं प्रविपेदिवान् ॥ ८४ ॥ कृच्छ्रेण प्रगुणीकृत्य, सत्कृत्य च ततः कृती । शून्यचित्तं कथञ्चित्स,
पुरं निन्ये जयस्थलम् ॥ ८५ ॥ आश्वास्यतैव च प्रीतिप्रतिपन्नविधायिना । गुणाकरेण सुहृदा, सतां दुःखेऽप्य
हो ! कृपा ॥ ८६ ॥ गुणाकरस्य सुहृदस्तां समृद्धिं तथाऽपि सः । श्रुत्वा दृष्ट्वा च दध्वान्तरदन्दह्यत सामिवत्
॥ ८७ ॥ अन्येद्युर्गोप्यमारोप्य, रैनरं भासुरं रथे । महापुरपुरासन्नेऽपरस्नेरपतेर्नराः ॥ ८८ ॥ ते च राजानमा
स्थानस्थास्तुमेव व्यजिज्ञपत् । अस्माकं स्वामिनः स्वामिस्तेजःसारस्तनूरुहः ॥ ८९ ॥ रैनरस्तस्य सिद्धोऽभूत्राज्य
योगेन किन्तु सः । स्वधाम्नि याचक्रान्निन्ये, स्वभे तापवृथाप तम् ॥ ९० ॥ परिव्राजा साधनायारब्ध सिद्धश्च
ते तु मो ! । परं गुणाकरस्यैव, गृहे स्थाताऽस्मि सुस्थिरः ॥ ९१ ॥ जयस्थलपुरस्थायी, स च पद्ममहेभ्यभूः ।
कस्तस्माद्भाग्यवानन्यस्तेजस्वीव दिवाकरात् ॥ ९२ ॥ पद्मस्मादृशानां च, तारकेवार्हति द्युतम् । कल्पते कल्पवृ
क्षाणां, स्थाम किं नन्दनाद्विना ? ॥९३॥ तन्मां नय नयश्रेष्ठ !, श्रेष्ठिनस्तस्य मन्दिरम् । को वा गुणाकरस्थान,
नेहते स्थितिमर्पयित् ॥ ९४ ॥ विध्योक्त्यैव व्यवकपाऽथ, प्राग् नः सार्धेन भूपभूः । स प्रेपीदिव्यवस्तूनां, सेच्छया

हि गतिस्थिती ॥ ९५ ॥ तत्राय ! रैनरः सोऽयं, सपस्तस्मै प्रसाघताम् । राजार्पितं प्रजानां हि, प्रमाण दिव्यव
स्त्वपि ॥ ९६ ॥ ततो राज्ञा विवेकेन, आगाकार्यं गुणाकरम् । रैपुमान् प्रवदे तस्मै, याच कोऽत्येति दैवतीम् ?
॥९७॥ सोल्लास सौषमाषासमाशु सोऽपि नृपाज्ञया । प्रौढोत्सवैस्समानीय, तदीयफलमग्रहीत् ॥९८॥ तदा तदा
सितस्तस्य, सर्वेभ्योऽप्यतिशायिता । निश्चिक्ये सकलैर्विष्णोरिव कौस्तुभलाभत ॥ ९९ ॥ ततस्तद्भाग्यविभव
श्लाघाकर्मणि निर्ममे । एकान्तवाद पयोधैरपि स्याद्वादवादिभि ॥ १०० ॥ बुधन् गुणधरः किन्तु, सेवाक्रीत
नृपत्कृपीः । तदाऽपि पत्तद्विभूते, धिगहो ! तस्य सौहृदम् ॥ १ ॥ ततोऽय दुर्धियां धुर्यो, निर्भाग्यवर्गपुङ्गवः ।
मिथ्याऽभिमानिमाणिक्यमप्रष्टव्यमुखाग्रणीः ॥ २ ॥ वाचाटकोटिमुकुटः, समस्तरशिरोमणिः । निर्लज्जजन
मूर्द्धन्यो, धृष्टप्रष्ठः खलाग्रिमः ॥ ३ ॥ अधमेभ्योऽधमः काय, कोत्तमेभ्य स उत्तमः । अनयोः सङ्गत धिग्
धिक्, शक्रविट्कीटयोरिव ॥ ४ ॥ इत्यादि सर्वतः सर्वैर्नागरैः स निरन्तरम् । सोपहास गर्ह्यते स्म, लोकः प्रक
टवाग् यतः ॥ ५ ॥ कलापकम् ॥ कृतहत्यादिपाप्मेव, स्वास्य दर्शयितु ततः । कस्याप्यशाक स व्रीडापीडितो
द्विग्नमानसः ॥ ६ ॥ स्वयमेव समुद्बध्य, स्वात्मघाठुरनात्मवित् । तत्याज दुस्त्यजान् प्राणान्, धिग् धिग् भवाभि
नन्दिनाम् ॥ ७ ॥ युग्मम् ॥ बभूव तिर्यग्नरकदुःखलक्षनिभ सः । अत्रामुत्रापि निर्धर्म, सौख्यभागी भवे
त्कुतः ! ॥ ८ ॥ तादृग्व्यतिकर दुःखाकर ज्ञात्वा गुणाकरः । निर्विवेद भवे तत्त्वं, धर्ममेव विवेद च ॥ ९ ॥
तत्राय समवासार्षीद्, धर्मधर्मधर्विराट् । केवली वृषलीर्वाञ्छिरिव गौतमकेवली ॥ १० ॥ विधिना वन्दनाय

मेवेशनास्तुतिपूर्वकम् । तमभाक्षीत् मागमच स, सौहृत् च गुणाकरः ॥ ११ ॥ उवाचार गुरुः सोऽपि, मम्रात्रैव
पुरे पुरा । अभूतां भ्रातरौ विप्रः, सुपिष्टश्चेति वाणिजौ ॥ १२ ॥ सत्रापैकरतिर्दुष्टमतिर्विष्टस्तयो पुनः । दुष्ट-
हारादिव जनव्यवहारावपि त्रसेत् ॥१३॥ सन्मानयति नो जातु, स्वजनान् दुर्जनानिव । सुखाकुर्योस्परीवारमप्य
ग्रर इवैष न ॥१४॥ अमित्रानिव मित्राणि, नैवोपकुरुते क्वचित् । न चानुकम्पते क्वापि, दुःस्थितान् सुस्थितानिव
॥ १५ ॥ निर्धर्मानिव सद्धर्मान्, दुष्कर्मा नार्चयेत् क्वचित् । निवारयति भिक्षार्थिप्रवेशमपि वेश्मनि ॥ १६ ॥
नाग्रभोगेऽपि सोद्योग, सदाहारेऽप्यपस्पृहः । सदैव वैधहसकः, कुचेलमलिनाङ्गकः ॥१७॥ हीस्यमानः स्वकजनै
स्तर्ज्यमानश्च सज्जनैः । निन्द्यमानः स्पृच्छकैर्हस्यमानश्च भोगिभिः ॥ १८ ॥ वित्ते सत्यपि सौख्यानां, निमित्ते
निस्वनिःस्ववत् । दुःखैकमय समप, निर्भोग्यो गमयत्ययम् ॥१९॥ शिष्टश्रेष्ठः सुपिष्टस्तु, सुसन्तुष्टविशिष्टधीः ।
सदा सदाचारपर, परेषामुपकारकृत् ॥ २० ॥ अर्थिप्रार्थितकल्पद्रुरनल्पगुणभूषण । सोदर्येऽपि तयोरेव, भेदोऽ-
भून्मणिलेष्टुवत् ॥ २१ ॥ यतः–“अवसुरवीण खीर कक्करस्यणाइ पत्थरा चेवि । परवकप्पतरुणो स्वस्सा पुण
मातर गरुअं ॥ २२ ॥” तौ मिथः प्रीतिकलितौ, मिलितौ तिष्ठतोऽनिशम् । छायातपाविव पर, प्रकृतिं न व्यतो
यतुः ॥ २३ ॥ एकोऽन्यदा सुपिष्टस्यावासमासन्नसिद्धिकः । तपस्वी पाचयामास, मासक्षपणपारणे ॥ २४ ॥
अहो ! अभ्रं विना वृष्टिरहो ! पुष्पं विना फलम् ! यदेष जङ्गम तीर्थमागमन्मम सद्मनि ॥ २५ ॥ इत्युच्चैर्भावना
सोऽन्तर्भावयन् स च पाचयन् । अष्टौ विविधान् शिष्टात्मा, प्रासुकान् मोदकान् वशी ॥ २६॥ स कोऽपि पर-

मानन्वसत्वा तेनान्वभूयत । जाने यस्योपमाने स्याद्विश्वस्यापि दरिद्रता ॥ २७ ॥ विस्तादित्रिकयोगोऽस्य,
भाग्ययोगेन कोऽप्ययम् । सर्वसिद्धिप्रदश्चैषा, सिद्धियोग इवाभवत् ॥ २८ ॥ यत'–"केसिंचि होइ चित्तं वित्तं
अन्नेसिमुभयमन्नेसिं । चित्तं वित्तं पत्तं तिन्निवि केसिंचि धन्नाण ॥ २९ ॥" यद्व भोगफलं किञ्चित्तदानीं तेन
निस्तुलम् । सुपात्रदानवृक्षस्य हि, सपक्वाः सुखश्रियाः ॥ ३० ॥ निकृष्टचेता विप्रस्तु, प्रेताविष्ट इव स्वयम् ।
हसित्वा किञ्चिदित्यूचे, यथः स्वोचितमुत्सुकैः ॥ ३१ ॥ अहो ! अखण्डपाखण्डैः, पाषण्डासक्तलायितैः । पर
पेश्मानि मुष्यन्तो, धूर्तैरिव वृथा कथम् ? ॥३२॥ इव हि मस्मनिहुत, यथाहेमूत्रित किल । एषां दत्तेन दानेन, किं
फल स्यात्परम् ? ॥ ३३ ॥ ययन्वे तीव्रबन्धेन, तेनैव वदताऽसता । घोरं दुष्कर्म तत्तादृग्, यद्वत्स्यैव स वेदिता
॥ ३४ ॥ तस्यामूवद्गुमायेव, मुनेरपि समागमः । दशोरानन्दाय भूकस्य, सहस्रांशोरिवोदयः ॥ ३५ ॥ भिक्षु-
र्भिक्षामथादाय, यावद्याति निज पदम् । तावत्पृष्ठगतस्तस्य, सुधिष्ठः श्रेष्ठानमुम् ॥ ३६ ॥ कथिराद्द महा
भाग !, निषिद्धा हि महात्मनाम् । गोचरैकाग्रपर्यायां, स्थित्वा धर्मकथाग्रथा ॥ ३७ ॥ तस्मादुपाश्रये तत्र,
श्रोतव्यं समये त्वया । समये सोऽपि तत्रैत्य, नत्वा किं तत्त्वमित्यवक् ॥३८॥ साधुरप्यभ्यधात्तस्य, धर्म एव द्विधा
च सः । साधुधर्मश्राद्धधर्मभेदाद्वाद्यस्तु दुष्कर' ॥ ३९ ॥ द्वितीय' सुकरः सोऽपि, सम्यक्त्वगुणपूर्वकः । द्वादश
व्रतरूप' सन्, यथाशक्ति विधीयते ॥ ४० ॥ इत्यादि विस्तरात्प्रोक्ते, श्राद्धधर्मे महर्षिणा । सदा स दानैकर-
सिकस्तत्र वचन यथा॥४१॥ व्रतेभ्यो द्वादशभ्योऽपि, सुकरं द्वादश व्रतम् । तन्मया नियमाश्रित्य, पाल्यं तयो

गसम्भये ॥ ४२ ॥ च पयस्व यस्य धर्मे धी , साधुनेस्युपबृंहितः । ततः प्रमुदितः प्राप, स मन्दिरमुदारहृत् ॥४३॥
तदारभ्य स साधुभ्यः, साधुधीः समयेऽन्वहम् । शुश्रूषे भक्त्या प्रदायैव, सतां प्रोक्तं हि नान्यथा ॥ ४४ ॥ एव
त्रिवर्गसामग्रीसमग्रीकृतनृस्थितिः । चिरमायुः प्रपूर्य स, मृतः स सुखमृत्युना ॥ ४५ ॥ प्रापोत्तरकुरुक्षेत्रे,
क्षेत्रेऽनुसरसम्पदाम् । युगलित्वं त्रिपल्यायुरतुल्याद्भुतभाग्यभाक् ॥ ४६ ॥ दशप्रकारकल्पद्रुकल्पितानल्पकल्पि
तः । ततोऽसौ धर्ममाहात्म्यात्सौधर्मस्वर्गमागमत् ॥ ४७ ॥ चिरं तत्र चिदशस्य, त्रिदशस्त्रीनिषेवितः । पल्य-
मेकं सुखौकमैकवशोऽप्यनुबभूव सः ॥ ४८ ॥ ततश्च्युत्वा पुरेऽत्रैव, देवकीपद्मदेवयोः । तनयस्समभूद्भूरिभाग्यः
प्राक्कृतपुण्यतः ॥ ४९ ॥ चस्त्वया प्राग् यती प्राप, प्रादापि मोदकाष्टकम् । तेनाजनिष्ट सत्कन्यास्वर्णकोट्यष्टकादि
ते ॥ ५० ॥ यस्त्वयाऽतिथिसभागमतं स्वीकृत्य नित्यशः । पालित तेन निस्पर्द्धिः, प्राप्तः सौवर्णपूरुषः ॥ ५१ ॥
चिटस्तु दुष्टधीः साधुदाननिन्दाविधानतः । काले कालगतो जज्ञे, कुक्कुरः पाम्पिठक्षुरः ॥५२॥ तद्वेश्मैव स पूर्व
स्वाद्म्यासाद्योगियसिधिः । प्रसभ्य परिगृह्यास्यात्, केनाप्यकृतसत्कृतिः ॥५३॥ स कृष्णभ्रूजीवितः कीटभक्षितः
क्षतवान् मृतः । दकरालो पिडालोऽभूत्, तस्मिन्नेव च वेश्मनि ॥५४॥ आहारयन् रसवतीं, नानारसवतीं रसात् ।
सोऽन्यदा सूपकारेण, कृष्णभ्रूमारेण मारितः ॥ ५५ ॥ तेनाथ जातं मातङ्गजन्मन्याजन्मदुःखिनि । कृत्वा च जीव
हिंसादि, मृत्वाऽथ नरके गतम् ॥ ५६ ॥ चतुष्पल्यां दुःखखानौ, स तस्मिंस्तिमिरप्रभे । कथञ्चित् गमयामास,
दा । प्राग्दुष्कर्मदुष्टताम् ॥ ५७ ॥ सत उद्धृत्य तज्जीवः, किञ्चिद्द्रयानुभावतः । धनञ्जयस्य धनिनः, सूनुर्गुणध-

रोऽभनि ॥ ५८ ॥ प्राचीनप्रेमतस्तेन, सञ्चा मैत्र्यभवत्तव । प्रीतिविपादयः प्रायः, प्रागभवाभ्यासवासजाः ॥५९॥ निनिन्द मुनिवान पश्चिवान सोऽखिलश्रियाम् । तेन तस्य भृशा क्लेशोऽप्यासीन्न श्रीः कथञ्चन ॥ ६० ॥ दुःखानि दुःसहान्येव, प्रत्युत प्राप्तवांश्च सः । नामापि शर्मणां कुत्र, पूर्वं चाकृतधर्मणाम् ? ॥६१॥ निन्दाऽन्यदपि निर्दिश्य, निषिद्धाऽनेकदुःखकृत् । अनन्तदुःखकृत्धोधेर्धर्ममुद्दिश्य किं पुनः ? ॥६२॥ प्रेपवानेव विप्रेष, यद्धर्मे प्राग्भवे ततः । प्रेष्योऽभूदत्र सर्वेषां, फलं बीजानुसारि यत् ॥ ६३ ॥ प्रागुष्कर्ममहाव्याधस्तेनाथापि पोतवत् । चीतपार स संसारपारावार चिर भ्रमी ॥ ६४ ॥ एष पूर्वभवं तस्य, सुहृच्च निशम्य स । सुबुद्धिः प्रतिबुद्धात्मा, धर्मे एव स्थिर दधौ ॥ ६५ ॥ ततः सर्वां स सौवर्णैः, स्वर्णाद्रिमिरिवापरे । अलङ्कृतेऽर्हच्छ्रिखरैस्तारैरिव वियत् सुषम् ॥ ६६ ॥ दुःस्था अवस्था दुःस्थानामृणार्त्तानामृणानि च । आकाशकुसुमोपम्य, दानिना तेन निन्यिरे ॥ ६७ ॥ मात्रातीतास्तीर्थयात्रा, विधाय विधिना पुनः । सङ्घाधिपत्यमत्यन्तदुर्लभं लभते स्म सः ॥ ६८ ॥ सप्तक्षेत्र्यां सोऽवपित्, वाप वापमपापधीः । साफल्यं सम्पदोऽवाप, धर्मिकौटुम्बिकाग्रणीः ॥ ६९ ॥ आराध्यैवं गृहिधर्मं, सुचिरं शुचिरङ्गभाग् । समये समयज्ञोऽसौ, यतिधर्ममुपाददे ॥ ७० ॥ तमप्याराध्य दुःसाध, निराबाध विपद्य सः । गतवानच्युतस्वर्गं, च्युतश्च शिवमीयिवान् ॥७१॥ वृत्तं निशम्येति यपस्यपोर्द्वयो , शुभाशुभोत्कूटफलाश्रितम् । भो भावकन्तोऽतिविशेषविभागसङ्गते यतध्वं यदि वः शिवस्पृहा ॥ ६७२ ॥

॥ इति द्वादशमते गुणाकरगुणधराख्यानम् ॥

अथास्यातिथिसंविभागव्रतस्य न केवलमेत एव प्रदर्शितरूपा अतिचारा निन्दार्हाः किन्त्वन्येऽपि सन्तीत्याह–

सुहिएसु अ दुहिएसु अ जा मे अस्संजएसु अणुकम्पा ।
रागेण व दोसेण व तं निंदे तं च गरिहामि ॥ ३१ ॥

'सुहिएसु' इति साधुष्विति विशेष्यमनुक्तमपि संविभागव्रतप्रस्तावाद् व्याख्येयं, ततः साधुषु कीदृशेषु ?- सुष्ठु हितं ज्ञानादित्रयं येषां ते सुहितास्तेषु, पुनः कथम्भूतेषु ?–'दुःखितेषु' रोगेण तपसा वा ग्लानीभूतेषु उपधि-रहितेषु वा, पुनः कीदृक्षु ?–न स्वयं स्वच्छन्देन यता–उद्यता अस्वयतास्तेषु गुर्वाश्रयेण विहरत्स्वित्यर्थः, या मया कृताऽनुकम्पा–कृपाऽन्नपानवस्त्रादिदानरूपा भक्तिः, अनुकम्पाशब्देनात्र भक्तिः सूचिता, यथोक्तम्–"आयरिअ अणुकम्पाए गच्छो अणुकंपिओ महाभागो । गच्छाणुकंपणाए अव्वुच्छित्ती कया तित्थे ॥ १ ॥" 'रागेण' स्वजनमित्रादिप्रेम्णा न तु गुणवत्त्वयुक्त्या, तथा 'द्वेषेण' इह द्वेषः–साधुनिन्दारूपो यथा धनधान्यादिरहिता ज्ञातिजनपरित्यक्ताः क्षुधार्त्ताः सर्वथा निर्गतिका अमी उपष्टम्भार्हा इत्येवं निन्दापूर्वं याऽनुकम्पा साऽपि निन्द्ये व अशुभदीर्घायुष्कहेतुत्वात्, यदागमः–"तहारूवं समणं वा माहणं वा संजयविरयपडिहयपच्चक्खायपाव-कम्मं हीलित्ता निंदित्ता खिंसित्ता गरहित्ता अवमन्नित्ता अमणुन्नेणं अपीइकारगेणं असणपाणखाइमसाइमेणं पडिलाभित्ता असुहदीहाउअत्ताए कम्मं पगरेइ" त्ति, यद्वा सुखितेषु दुःखितेषु वा असंयतेषु–पार्श्वस्थादिषु शेषं

तथैव, परं द्वेषेण "वगपाणं पुप्फफल अणेसणिज्जं" इत्यादितत्तत्वोपवर्णनान्मत्सरेण, अथवा असयतेषु-षड्जिवजीववधकेषु कुलिङ्गिषु रागेण एकदेशग्रामगोत्रोत्पन्नत्वादिप्रीत्या द्वेषेण जिनप्रवचनप्रत्यनीकतादिदर्शनोत्थेन, ननु प्रवचनप्रत्यनीकादेर्दानमेव कुतः ?, उच्यते, तत्कृतभूपत्यादिभयात्, सर्वमपीदं दानं निन्दामि गर्हे च, यत्तु नरोचितत्वेन दीनादीनां दानं तदप्यनुकम्पादानं, यतः-"कृपणेऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते। यद्दीयते कृपार्थमनुकम्पा तद्भवेद्दानम् ॥ १ ॥" समर्थदेहस्यापि प्रार्थनाकारिणो दरिद्रप्रायस्यादानं अनुकम्पादानं तच्च न निन्द्यं, जिनेन्द्रैरपि वार्षिकदानावसरे तस्य दर्शितत्वात्, उक्तञ्च-"इय मोक्षफले दाने, पात्रापात्रविचारणा। दयादानं तु सर्वज्ञैः, कुत्रापि न निषिध्यते ॥१॥" तथा "दानं यत्प्रथमोपकारिणि न तत्प्यासः स एवार्प्यते, दीने याचनमूल्यमेव दयिते तत्किं न रागाभयात् ?। पात्रे यत्फलविस्तरप्रियतया तद्वार्धुषीकम किं, तद्दानं यदुपेत्य निःस्पृहतया क्षीणे जने दीयते ॥ १ ॥" इत्येकत्रिंशगाथार्थः ॥ ३१ ॥ अधुना साधुसंविभाग प्रतीत्य कृत्याकरणप्रतिक्रमणायाह—

साहूसु संविभागो न कओ तवचरणकरणजुत्तेसु। सते फासुअदाणे तं निंदे तं च गरिहामि ॥३२॥

'साहू'इति, तपो-बाह्याभ्यन्तररूपं द्वादशधा, यतः-"अनशनं १ मौनोदर्यं २ वृत्तेः सङ्क्षेपणं ३ रसत्यागः ४। कायक्लेशः ५ संलीनतेति ६ बाह्यं तपः प्रोक्तम् ॥१॥ प्रायश्चित्तध्याने २ वैयावृत्य ३ विनयौ ४ वथोत्सर्गः ५। स्वाध्याय ६ इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥ २ ॥" तपोविशेषव्याख्यादि मत्कृतार्थदीपिकाया ज्ञेयं, चरण

सप्ततिभेद, यत—“वय ५ समणधम्म १० संजम १७ वेआवच्च च १० बंभगुत्तीओ ९ । नाणाइतिअं ३ तव १२ कोहनिग्गहाई ४ चरणमेअं ॥ १ ॥” तत्र श्रमणधर्मो दशधा, यतः—“खंती १ अज्जव २ मद्दव ३ मुत्ती ४ तव ५ संजमे अ ६ बोद्धवे । सच्च ७ सोअं ८ आकिंचणं च ९ बंभं च १० जइधम्मो ॥ १ ॥” ‘मुत्ति’त्ति मुक्तिः निर्लोभता ‘सोअं’ति शौचं संयमं प्रति निरुपलेपता, सा चादत्तादानपरिहाररूपा, लोभार्त्तो हि परधनं जिघृक्षन् संयमं मलिनयति, लौकिका अप्याहु—“सर्वेषामपि शौचानामर्थशौचं परं स्मृतम् । योऽर्थेषु शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ॥१॥” संयमः सप्तदशधा, यतः—“पञ्चाश्रवाद्विरमणं ५ पञ्चेन्द्रियनिग्रहः १० कषायजयः १४ । दण्डत्रयविरतिः १७ श्चेति संयमः सप्तदशभेदः ॥ १ ॥” यद्वा—“पुढवि १ दग २ अगणि ३ मारुअ ४ वणस्सइ ५ बितिचउपणिंदि ९ अज्जीवे १० । पेहो ११ पेह १२ पमज्जण १३ परिठवण १४ मणो १५ वई १६ काए १७ ॥ १ ॥” व्याख्या—पृथिव्यादिनवविधजीवानां रक्षेति नवधा, अजीवसंयमः सत्त्वोपघातहेतूनां पुस्तकादीनामग्रहणरूपः, यतः—“जइ तेसिं जीवाणं तत्थगयाणं तु सोणिअं हुज्जा । पीलिज्जंते धणिअं गलिज्ज तं अक्खरे फुसिउं ॥ १ ॥” दुष्पमादोषात्प्रज्ञायुर्हीनशिष्यानुग्रहार्थं यतनया प्रतिलेखनाप्रमार्जनापूर्वं ग्रहणरूपो वा १०, प्रेक्षासंयमः प्रत्युपेक्ष्य प्रमार्ज्य च स्थित्यादिकरणम् ११, उपेक्षासंयमः सीदतां संयतानां चिन्ता असंयतानां तु न १२, प्रमार्जनासंयमः सागारिके सति रजोहरणेन पादयोरप्रमार्जनं (असति तु प्रमार्जनं) १३, परिष्ठापनासंयमस्त्याज्यस्य विधिना त्यागः १४, मनसो द्रोहाभिमानेर्ष्यादिभ्यो निवृत्तिः धर्मध्यानादिषु च प्रवृत्तिर्मनःसंयमः १५, वाचो

तथैव, पर द्वेषेण "वणपाण पुप्फफल अणेसणिज्जं" इत्यादितद्वचोपदर्शनान्मत्सरेण, अथवा असंयतेषु-षड्वि-
धजीववधकेषु कुलिङ्गिषु रागेण एकदेशग्रामगोत्रोत्पन्नत्वादिभीत्या द्वेषेण जिनप्रवचनप्रत्यनीकतादिदर्शनोत्थेन,
ननु प्रवचनप्रत्यनीकादेर्दानमेव कुतः ?, उच्यते, तत्कृतनृपत्यादिभयात्, तदेवंविधं दानं निन्दामि गर्हे च, यत्पु-
नरौचित्येन दीनादीनां दानं तदप्यनुकम्पादानं, यतः—"कृपणेऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते ।
यद्दीयते कृपार्थमनुकम्पा तद्भवेद्दानम् ॥ १ ॥" समर्थदेहस्यापि प्रार्थनाकारिणो दरिद्रप्रायस्यादानं अनुकम्पा-
दानं तच्च न निन्द्यं, जिनेन्द्रैरपि वार्षिकदानावसरे तस्य दर्शितत्वात्, उक्तञ्च—"इय मोक्षफले दाने, पात्रा
पात्रविचारणा । दयादानं तु सर्वज्ञैः, क्वापि न निषिध्यते ॥१॥" तथा "दानं यत्प्रथमोपकारिणि न तत्प्रासः
स एवार्प्यते, दीने याचनमूल्यमेव दयिते तत्किं न रागाश्रयात् ?। पात्रे यत्फलविस्तरप्रियतया तद्वार्धुषीक
न किं, तद्दानं यदुपेक्ष्य निःस्पृहतया क्षीणे जने दीयते ॥ १ ॥" इत्येकत्रिंशगाथार्थः ॥ ३१ ॥ अधुना साधुसं-
विभाग प्रतीत्य कृत्याकरणप्रतिक्रमणायाह—

साहूसु संविभागो न कओ तवचरणकरणजुत्तेसु । संते फासुअदाणे तं निंदे तं च गरिहामि ॥३२॥

'साहू'इति, तपो—बाह्यान्तररूपं द्वादशधा, यतः—"अनशनं १ मौनोदर्यं २ वृत्तेः संक्षेपणं ३ रसत्यागः ४। कायक्लेशः ५ संलीनतेति ६ बाह्यं तपः प्रोक्तम् ॥१॥ प्रायश्चित्तध्याने २ वैयावृत्त्य ३ विनयौ ४ अथोत्सर्गः ५। स्वाध्याय ६ इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥ २ ॥" तपोविशेषव्याख्यापि मत्कृतार्थकौमुद्या ज्ञेया, चरण

हिंस्रपरुषादिभ्यो निवृत्तिः शुभभाषायां च प्रवृत्तिर्वाक्संयमः १६, कायस्य धावनवल्गनादिभ्यो निवृत्तिः शुभ-क्रियासु च प्रवृत्तिः कायसंयमः १७, एष सप्तदशप्रकारः प्राणिदयारूपः संयमः। वैयावृत्त्यं दशधा, यतः—"आयरिअ १ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहे अ ६। साहम्मिअ ७ कुल ८ गण ९ संघसंगय तमिह कायव्वं १० ॥ १ ॥" ब्रह्मगुप्तयो नव प्रागुक्ताः, शेषाश्चरणभेदाः सुगमाः। करणमपि सप्ततिभेदं, यतः—"पिंडविसोही ४ समिई ५ भावण १२ पडिमा य १२ इंदिअनिरोहो ५। पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ॥ १ ॥" तत्र पिण्डविशुद्धिश्चतुर्धा, यतः—"पिंड १ सिज्जं २ वत्थं च ३, चउत्थं पायमेव य ४। अकप्पिअं न इच्छिज्जा, पडिगाहिज्ज कप्पिअं ॥१॥" भावना द्वादश, यतः—"पढमं अणिच्चभावं १ असरणयं २ एगयं च ३ अन्नत्तं ४। संसार ५ मसुहम त्तिअ ६ विविहं लोगस्सहावं च ॥ १ ॥ कम्मस्स आसव ८ संवरं च ९ निज्जरण १० मुत्तमे अ गुणे ११। जिणसासणंमि बोहिं च दुल्लहं १२ चिंतए मइमं ॥ २ ॥" प्रतिमा द्वादश, यतः—"मासाई सत्तंता पढमा ८ बिअ ९ तइअ १० सत्तराइदिणा। अहराइ ११ एगराइअ १२ भिक्खुपडि-माण बारसगं ॥ १ ॥" एतद्व्याख्या आवश्यकवृत्त्यादेर्ज्ञेया। प्रतिलेखनाः पञ्चविंशतिः, यतः—"दिट्ठिपडिलेहएगा १ पप्फोडा तिन्नि तिन्नि अंतरिआ ७। अक्खोडा पक्खोडा नव नव २५ इअ पुत्तिपणवीसा ॥१॥" अभिग्रहाश्चत्वारो द्रव्य १ क्षेत्र २ काल ३ भाव ४ भेदात्, शेषाः करणभेदाः कण्ठ्याः, एतेन मूलोत्तरगुणाः प्रद-र्शिताः, एष तपश्चरणकरणगुणेषु साधुषु सति प्रासुकदाने वैयधिकरण्योरभेदोपचारादुपलक्षणत्वाच्च प्रासुकैषणी

यद्येवग्रहणे सति यत्तपोविभागो न कृतस्तत्किमिति गर्हे चेत्यन्वयः, इह च चरणमध्ये तपसः सङ्ग्रहे सत्यपि पृथगुपादानमनेन निकाचितान्यपि कर्माणि क्षीयन्ते इति प्राधान्यख्यापनार्थं, यत्परमार्षम्—“कडाण कम्माण पुव्विं दुच्चिन्नाण दुप्पडिक्कंताण वेइत्ता मुक्खो नत्थि अवेइत्ता, तवसा वा झोसइत्ता ” इति द्वात्रिंशगाथार्थः ॥ ३२ ॥

॥ इतिश्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ शिक्षाव्रताधिकारश्चतुर्थः ॥ ४ ॥ श्री ॥

एवं द्वादशव्रतातिचारान् प्रतिक्रम्य संलेखनातिचारान् परिजिहीर्षुस्तत्प्रथमं प्रार्थनामाह—

इहलोए परलोए जीविअमरणे अ आससपओगे। पंचविहो अइआरो मा मज्झं हुज्ज मरणंते ॥३३॥

‘इहलोए’ इति, आशंसाप्रयोग इति सर्वत्र योज्यं, प्रतिक्रामकमाश्रित्येहलोको—मनुष्यलोकस्तत्राशंसा-अभिलाषः प्रेत्य मानुषः स्यां राजा वा श्रेष्ठी वेत्यादिरूपस्तस्याः प्रयोगो—व्यापार इहलोकाशंसाप्रयोगः १, परलोको-देवभवादिस्ततो देवो देवेन्द्रो वा भवेयमित्यादि परलोकाशंसाप्रयोगः २, तथा कश्चित्कृतानशनः प्रतिदिन नानानगरग्रामसमागच्छच्चतुर्वर्णश्रीसङ्घविधीयमाननि 'समानमहोत्सवपरम्परानिरीक्षणादनेकनागरिकलोकप्रारम्भितसूत्रकलापकौशलसमुद्भूतप्रभूतशोभानि मालनान्मृदङ्गवंशवरवेणुवीणापटुपटहप्रमुखसुखकारिवाद्यमाननानाविधवाद्यध्वनिनादाकर्णनाद्बहुश्राद्धिकापूर्वकविवेकिजननिकरनिरन्तरक्रियमाणव्यतीतप्रमाणवर्णमालाद्विसत्का

रस मानवन्दनाप्यवलोकनात्सुविहितगीतार्थयतिप्रारब्धभीसिद्धान्तपुस्तकवाचनाविधुमानाभिमावनाद्भूयोभू यःसम्भूयभूयस्तरधार्मिकधुरीणप्रवीणसाधर्मिकश्रेणिप्रणीयमानसद्गुणोपबृंहणाश्रवणाच्चैवं मन्यते—यथुत प्रतिप न्नानशनस्यापि मम जीवितं सुचिरं श्रेयो यतो मामुद्दिश्यैवंविधा समृद्धिरिति जीविताशंसाप्रयोगः ३, तथा कश्चित् कर्कशक्षेत्रे कृतानशन प्राघुक्तपूजाद्यभावात् क्षुद्बाधार्त्तो वा चिन्तयति—कदा म्रियेऽहमिति मरणाशंसाप्रयोगः४, चशब्दात्काममोगाशंसाप्रयोगः, तत्र कामौ—शब्दरूपे भोगा—गन्धरसस्पर्शास्तेषामाशंसाप्रयोगो यथा ममास्य तपसः प्रभावात् प्रेत्य रूपसौभाग्यादि भूयात् ५, एष पञ्चविधोऽतिचारो मा मम भूया मरणान्ते चरमोच्छ्वास मपि यावन्निरवर्धः, उपलक्षणं चैतत् तेन सर्वस्मिन्नपि धर्मानुष्ठाने ऐहलौकिकी पारलौकिकी वा सर्वथाऽप्या- शंसा वर्जनीया, यत्सूत्रं—"नो इहलोगट्ठयाए आयारमहिट्ठिज्जा नो परलोगट्ठयाए आयारमहिट्ठिज्जा नो कित्ति वण्णसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा नन्नत्थ आरिहंतेहिं हेऊहिं आयारमहिट्ठिज्जा।" तथा—"आशंसया विनिर्मुक्तोऽनुष्ठानं सर्वमाचरेत्। मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः ॥ १ ॥" आशंसां कुर्वाणो हि प्रकृष्टधर्माराधकोऽपि हीनमेव फलं लभते, धर्मस्य चिन्तामणेरिवाशंसारूपतुच्छमूल्येन विक्रीतत्वात्, आह च— "सीलव्वयाइं जो बहुफलाइं हन्तूण सुक्खमहिलसइ। धिइदुब्बलो तवस्सी कोडीए कागिणिं किणइ ॥१॥" अत एव निदानान्यर्हद्भिः सर्वथा निषिद्धानि, तानि च नव, यथाऽऽह—"निव १ सिट्ठि २ इत्थि ३ पुरिसे ४ परपवि- आरे अ ५ सपवियारे अ ६। अप्परयसुर ७ दरिद्दे ८ सड्ढे ९ दुन्ना नव निआणा ॥१॥" व्याख्या—कश्चित्साध्वा-

दिर्निदान कुर्यात् देवाः केन साक्षाद् दृष्टाः ? इमे राजान एव देवास्ततो यदस्ति तपोऽनुष्ठानादीनां फलं तदागद राजा भवेय, स स्वर्गं गतश्च्युत्वा राज्य लभते, नतु सम्यक्त्वादिधर्मं, एवं दुर्लभबोधिः स्यात् १, एवं बहुचिन्ता बहुव्यापारा राजानस्ततः श्रेष्ठ्यादिकुले भवेयं २, पुमान् बहुव्यापारः सङ्ग्रामादिदुष्करकारी चेति स्त्रीत्वमा वास्ते ३, एव स्त्री नित्य पराधीना परामयपद चेति पुंस्त्वम् ४, अशुभा नृभोगास्ततो ये देवा अन्य देव देवीं वा आत्मान वा देवदेवीरूप विकुर्व्य प्रविचरन्ति तथाऽहमपि स्याम् ५, आत्मानमेव देवीरूपं विकुर्व्य ये प्रविच-रन्ति तथा स्यां ६, निर्विण्णकामभोगत्वाद् यत्र न प्रविचारणा तत्र स्यां, स ततश्च्युतः सम्यग्दर्शन लभते, नतु देशविरत्यादि ७, तत एवात्मा मे सुनिस्तारः स्यादिति दरिद्रः स्यां, स स्वर्गादागतो दरिद्रीभूय प्रव्रज-त्यपि न तु सिध्यति ८, एव श्राद्धत्व साधियसि श्राद्धः स्यां, स सर्वविरतिं नाप्नोति ९, सौभाग्यादिनिदाना न्यपि नवस्वेतेष्वेवान्तर्भाव्यानि, निदानकृच प्राग्भवाराद्धप्रकृष्टधर्मोऽपि प्रायो नरकादिदुर्गतिदुःखभागी स्यात् सप्तमपृथिवीप्राप्तसुभूमब्रह्मदत्तादिवत्, तदुक्त—"सुपवुपि तव विन सुवीरमवि पालिअ सुसामन्नं । तो काऊण निआण सुहाइ हारिंति अत्ताण ॥ १ ॥ उड्ढगामी रामा केसव सवेवि ज अहोगामी । तस्थवि निआण कारण मओ अ मइम इमे पओ ॥ २ ॥" इति त्रयस्त्रिंशगाथार्थः ॥ ३३ ॥ उक्ताः संलेखनातिचाराः, तपोवीर्याचारयो रतिचारास्तु "जो मे वयाइआरो" इति द्वितीयगाथायां चशब्दसूचितत्वेन सामान्यतः प्राक् प्रतिक्रान्ताः, विशे-

पतस्वस्पवक्तव्यस्वामिना नोक्ता, एवं ज्ञानाचाचारपञ्चकमाश्रित्य चतुर्विंशतातिचाराणां श्रावकं प्रति प्रतिक्रमणमुक्तम्, अथ सर्वेऽप्यतीचारा मनोवाक्काययोगसम्भवा अतस्तांस्तैरेव प्रतिक्रामन्नाह—

काएण काइअस्सा पडिक्कमे वाइअस्स वायाए। मणसा माणसिअस्सा सव्वस्स वयाइआरस्स ॥ ३४ ॥

'काएणे'ति कायेन च यथाविकारिणा कृतः कायिकस्तस्य, आर्षत्वादत्र दीर्घः, कायेन-गुरुव्रततपःकायोत्सर्गाद्यनुष्ठानपरेण देहेन इत्यादिक्षपातकस्तुत्यवचिनिषिद्धसर्वाहारषण्मासीकायोत्सर्गसिद्धरत्नमहारिवत् १ तथा वा-सहसाऽभ्याख्यानसामादिरूपया कृतो वाचिकस्तस्य वाचैव मिथ्यादुष्कृतभणनादिलक्षणया श्रीगौतमवत् यथाऽनशनस्थानन्दश्राद्धेन पूर्वापरदिक्त्रये योजनपञ्चशतीसुदीर्घ्यां स्वाहिमाचलापूर्वमासौधर्मकल्पावधो रत्नप्रभायां आ लोलुपान्तमावधिज्ञानं इत्युक्तः, सहसा श्रीगौतमेनोक्त-गृहस्थस्येयान् अवधिर्न स्यादतोऽस्य स्थानस्यालोचय, आनन्दोऽप्यूचे-सद्भावोक्तौ किमालोचना स्यात् ?, नो चेद् यूयमेवालोचयत, ततः स साशङ्कः श्रीवीरं पृष्ट्वाऽऽलोच्यानन्दं क्षमयामास, एष वाचिकस्य वाचा २, तथा मनसा देवतस्यादौ शङ्कादिकालुष्येण कृतो मानसिकस्तस्य मनसा-हा दुष्कृतमित्यात्मनिन्दापरेण, मनसैवार्जितसप्तमनरकयोग्यकर्मक्षणान्तरोत्पन्नकेवलप्रसन्नचन्द्रराजर्षिवत् ३, "तुः पुनरर्थे" इत्युक्त श्रीअकलङ्कदेवसूरिकृतवृत्तौ तेन "माणसिअस्स उ" इति पाठः समाप्यते, पाठान्तरं वा तत्, सर्वस्य व्रतातिचारस्य प्रतिक्रमामीति योगः, पञ्चम्यर्थेऽत्र षष्ठी, ततः कायेन

कायिकात् वाचा वाचिकात् मनसा मानसिकात् सर्वस्मादतीचाराभिवर्तेऽहमित्यर्थः, पठन्ति च—"मनसा मानसं कर्म, वचसा वाचिकं तथा । कायेन कायिकं तद्वभिस्तरन्ति मनीषिणः ॥ १ ॥" इति चतुस्त्रिंशगाथार्थः ॥ ३४ ॥ सामान्येन योगत्रयं प्रतिक्रम्य विशेषतस्तदेव प्रतिक्रमितुमाह—

वदणवयसिक्खागारवेसु सन्नाकसायदंडेसु । गुत्तीसु अ समिईसु जो अइआरो य तं निंदे ॥ ३५ ॥

'वंदणे'त्ति वन्दनं-चैत्यवन्दनं गुरुवन्दनं च, तत्राद्य द्रव्यतः पालकस्य भावतः शाम्बस्य, द्वितीयं द्रव्यतो वीरकस्य भावतः श्रीकृष्णस्य, दशत्रिकादिचतुःसप्तत्यधिकद्विसहस्रीमितद्वाररूपश्चैत्यवन्दनाविधिर्द्विनवत्यधिकचतुःशतीद्वाररूपो गुरुवन्दनविधिश्च भाष्यादेरभ्यूह्यः, तथा व्रतानि—अणुव्रतादीनि पौरुष्यादिप्रत्याख्यानरूपाणि नियमा वा, शिक्षा ग्रहणासेवनरूपा द्वेधा, तत्र ग्रहणशिक्षा सामायिकादिसूत्रार्थग्रहणरूपा, यदागमः—"सावगस्स जहन्नेणं अट्ठप्पवयणमायाओ उक्कोसेण छज्जीवणिआ, सुत्तओऽवि अत्थओऽवि, पिंडेसणज्झयणं न सुत्तओ अत्थओ पुण उल्लावेण सुणइ"त्ति १, आसेवनशिक्षा तु नमस्कारेण विबोध इत्यादि दिनकृत्यलक्षणा २, गौरवाणि—जात्यादिमदस्थाना यष्टौ, यत —"जाइ १ कुल २ रूव ३ बल ४ सुअ ५ तव ६ लाभे ७ सरिय ८ अट्ठमयमत्तो। एआइ चिअ बधइ असुहाइ बहु च ससारे ॥ १ ॥" मेतार्यहरिकेशिबलमरीच्यादयोऽत्र ज्ञातानि, यद्वा त्रीणि गौरवाणि ऋद्धि १ रस २ सात ३ गौरवभेदात्, तत्र प्रभूतधनस्वजनादिभिर्गर्वकरणमृद्धिगौरव एवमेव लाघवाय

यथा दशार्णभद्रस्य सर्धपरमर्द्ध्यां श्रीवीर विवन्दिषोः १, रसेषु-मधुरान्नपानादिषु गार्ध्यं रसगौरवं महादोषाय यथा मथुरामङ्ग्वाचार्यादेः, स हि यक्षभूतो रसलौल्यात्रिर्धमनवासी मृत्वा पुरनिर्द्धमने यक्षोऽजनि २, मृदुशय्यासनादीष्टविषयासक्तिः सातगौरवं दुर्गतिपाताय यथा शशिराजादेः, स हि वेश्यालालनैकरसस्तृतीयनरकगतः ३, ततो धन्यन च मनांसि येषामपि द्वन्द्वस्तेषु, तथा सञ्ज्ञा–आहार १ भय २ मैथुन ३ परिग्रह ४ रूपाश्चतस्रो दश या पञ्चदश षोडश वा प्रोक्ताः श्रुते, तत्र दशसञ्ज्ञा यथा–'आहार १ भय २ परिग्गह ३ मेहुण ४ तह कोह ५ माण ६ माया य ७ । लोभ ८ लोगो ९ हसन्ना १० दसमेआ सव्वजीवाणं ॥१॥" एता दशापि द्वीन्द्रियादीनां प्रायः प्रतीताः, एकेन्द्रियाणां तु भाव्यते–तत्राहारसञ्ज्ञा वनस्पतीनां जलाहारत्वात् १, भयसञ्ज्ञा ऊर्ध्वमुपस्थिते सूत्रधारादौ वृक्षाणां कम्पदर्शनात्सङ्कोचनिकायाश्च भयेन सङ्कुचनात् २, परिग्रहसञ्ज्ञा वल्लीभिर्वृक्षादीनां वेष्टनात् ३, मैथुनसञ्ज्ञा कुरुबकाशोकादीनामङ्गनाऽऽलिङ्गनपादप्रहारादिभिः पुष्पोद्गमात्, उक्तञ्च–"कुरुपयतरुणो फुल्लति जस्स आलिंगणेण(णाणि) तरुणीण १। तरुणिपयोहरलुद्धा असोअतरुणोवि विअसंति२॥१॥ तरुणीमहुरागधेण तोसिआ केसराचि कुसुमति ३। चपयतरुणो फुल्लति सुराहि जलदोहलेहिं च ४॥२॥ विअसति तिलयतरुणो तरुणिकडक्खेहिं पविद्दया जस्स ५। फुल्लंति विरहरुक्खा सोऊण पंचमुग्गार ६ ॥३॥" पारदस्यापि सञ्ज्ञाराज्ञ्यातास्र्लरसस्पर्शो कृपादृष्टिः समन्तादुल्लसनाद्भ्रमणान्मैथुनसञ्ज्ञा सम्भवति, क्रोधसञ्ज्ञा पादे लग्ने कोकनदस्य कन्दो हुङ्कारान् मुञ्चति ५, मानसञ्ज्ञा मयि सत्यां किं लोकदुःस्थमिति मानाद्रुदन्तीनामौषधी

मिमूलन् भवति यत्सया वल्ल्या सुवर्णसिद्धिः स्यात् ६, मायासञ्ज्ञा वल्ली फलानि पत्रैराच्छादयति ७, लोभसञ्ज्ञा बिल्वपलाशावयो मूलानि निधानोपरि क्षिपन्ति ८, लोकसञ्ज्ञा कमलानि रात्रौ कैरवाणि तु दिवा सङ्कुचन्ति ९, ओघसञ्ज्ञा वल्ली मार्गं त्यक्त्वा वृतिवृक्षाद्यारोहति १०। पञ्चदश सञ्ज्ञा यथा—"आहार १ भय २ परिग्गह ३ मेहुण ४ सुह ५ दुक्ख ६ मोह ७ वितिगिच्छा ८। तह कोह ९ माण १० माया ११ लोभे १२ सोगे अ १३ धम्मो १४ घे १५ ॥ १ ॥" एता एव लोकसञ्ज्ञया सह षोडश, तल्लक्षणा चाचाराङ्गवृत्त्यन्तर्गता यथा—आहारसञ्ज्ञा—आहाराभिलाषः, सा च तैजसशरीरनामकर्मोदयादसातोदयाच्च भवति १, भयसञ्ज्ञा त्रासरूपा २, परिग्रहसञ्ज्ञा-मूर्च्छारूपा ३, मैथुनसञ्ज्ञा-स्त्र्यादिवेदोदयरूपा, एतास्तिस्रो मोहनीयोदयात् ४ सुखदुःखसञ्ज्ञे सातासातानुभवरूपे वेदनीयोदयजे ६, मोहसञ्ज्ञा-मिथ्यादर्शनरूपा मोहोदयात् ७, विचिकित्सासञ्ज्ञा चित्तविप्लुतिरूपा मोहोदयाज्ज्ञानावरणीयोदयाच्च ८, क्रोधसञ्ज्ञा अप्रीतिरूपा ९ मानसञ्ज्ञा-गर्वरूपा १० मायासञ्ज्ञा वक्रतारूपा ११, लोभसञ्ज्ञा गृद्धिरूपा १२, शोकसञ्ज्ञा-विप्रलापवैमनस्यरूपा १३, एताः पञ्च मोहोदयजाः, लोकसञ्ज्ञा स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता, यथा—"न सन्त्यनपत्यस्य लोकाः, श्वानो यक्षाः विप्रा देवाः, काकाः पितामहाः, बर्हिणां पक्षवातेन गर्भः" इत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्च भवति १४, धर्मसञ्ज्ञा-क्षमाद्यासेवनरूपा १५, ओघसञ्ज्ञा—वल्लिवितानारोहणादिलिङ्गा ज्ञानावरणीयादिकर्मक्षयोपशमोत्था प्रष्टव्या १६। तथा कषाः—संसारस्तस्यायो—लाभो येभ्यस्ते कषायाः क्रोधमानमायालोभलक्षणाः,

तदुक्तं—"कम्म कस भवो वा कसमाओ सिं जओ कसायाउ । संसारकारणाणं मूलं कोहाइणो ते अ ॥ १ ॥" चत्वारोऽपि ते प्रत्येकमनन्तानुबन्धिनोऽप्रत्याख्याना: प्रत्याख्यानावरणा: सञ्ज्वलनाश्चेति षोडश तद्भेदा:, एषां स्वरूपं चैवमाहु:—"जाजीव १ वरिस २ चउमास ३ पक्खगा ४ नरय १ तिरिअ २ नर ३ अमरा ४। सम्मा १-णु २ सवविरई ३ अहखायचरित्त ४ घायकरा ॥ १ ॥ जलरेणु २ पुढवि ३ पव्वयराई ४ सरिसो चउविहो कोहो । तिणिसलया १ कट्ठ २ ट्ठिअ ३ सेलत्थंभोवमो ४ माणो ॥ २ ॥ मायावलेहि १ गोमुत्ति २ मिंढसिंग ३ घणवंसमूल ४ समा । लोहो हलिद्द १ खंजण २ कद्दम ३ किमिराग ४ सामाणो ॥३॥" ननु यदि संज्वलनादय: क्रमेण देवनरतिर्यग्नरकगतिहेतवस्तत्कथं सङ्गमादयो नित्यानन्तोदयिनोऽपि स्वर्गं श्रेणिकादयस्तु द्वितीयकषायोदयिनोऽपि नरकं जग्मु: ?, सत्यम्, एतेऽनन्तानुबन्धिक्रोधादय: षोडशापि यथास्वं चतुश्चतूरूपत्वाच्चतु:षष्टिर्भवन्ति, यथाऽनन्तानुबन्धी क्रोधोऽनन्तानुबन्धिक्रोधप्रतिरूपोऽत्यन्ततीव्रतमत्वात्, अनन्तानुबन्धी क्रोधोऽप्रत्याख्यानावरणक्रोधप्रतिरूप: किञ्चिन्मन्दत्वात्, तथा स एव प्रत्याख्यानावरणक्रोधप्रतिरूपो मन्दत्वात्, स एव च संज्वलनक्रोधप्रतिरूपो मन्दतरत्वात्, एवमप्रत्याख्यानक्रोधादयोऽपि प्रत्येकमनन्तानुबन्धिक्रोधादिप्रतिरूपतया चतुर्द्धा वाच्या:, एवं क्रोध: षोडशधा, एवं मानादयोऽपि प्रत्येकं षोडशधा वाच्या:, तदेवं कषायाश्चतु:षष्टि:, तत: सङ्गमकादयोऽनन्तानुबन्धिभिरपि संज्वलनप्रतिरूपै: स्वर्गं श्रेणिकादयस्त्वप्रत्याख्यानैरप्यनन्तानुबन्धितुल्यैर्नरकं जग्मु:, एते च सर्वथा परिहार्या:, यत:—"जं अज्जिअं चरित्तं देसूणाए वि पुव्वकोडीए । तंपि कसाइयमित्तो

हारेइ नरो मुहुत्तेण ॥ १ ॥ उदयस्सेव निरोहो उदयप्पत्ताण वाऽफलीकरण । ज एत्थ कसायाण कसायसली णया एसा ॥ २ ॥ तम्हमिण सारमिण कुशलसंगीइ एस परमत्थो । ज भवभमणसहाया इमे कसाया चइज्जति ॥ ३ ॥ ज अइदुक्खं लोए ज च सुहं उत्तमं तिहुअणंमि । त जाण कसायाण वुड्ढिक्खयहेउअं सव्वं ॥ ४ ॥" परेऽप्यूचिरे—"यत्क्रोधयुक्तो जपति, यज्जुहोति यदर्चति । तत्सर्वं स्रवते तस्मादामकुम्भादिवोदकम् ॥ १ ॥" क्रोधे करटोत्करटयोर्ज्ञातं—तौ महर्षी पुरनिर्द्धमने वर्षाचतुर्मासीं कायोत्सर्गे स्थितौ, तदाशातनाभिया पुरान्तर्नीय माधजनैराकृष्टौ क्रुद्धौ प्राहतुः—'वर्षे मेघ ! कुणालायां, दिनानि दश पञ्च च । मुशल [युग] प्रमाणधाराभिर्यथा रात्रौ तथा दिवा ॥ १ ॥" तथैव जाते पुराद्युपप्लवान्नरके गतौ । माने वर्षं कायोत्सर्गस्थबाहुबल्यादिः मायायां श्री मल्लिः लोभे सोमादित्यश्रेष्ठी प्रियैकपुत्रमपि वञ्चयित्वा रात्रौ श्मशानावधः कोटिनिधिं संगोप्य कथञ्चिद्दृष्टमासो न्नमियता स केनाप्यासो भावीत्यत्यन्तार्त्यैव दाहज्वराक्रान्तो मृतो दग्धिपोऽहिर्जातस्तन्निधौ, एवमेकैकोऽप्यनर्थहेतुः किं पुनः समुदिताः ?, तथा दण्ड्यते धर्मधनापहारेण प्राणी यैस्ते दण्डा—अशुभमनोवाक्कायरूपाः मनोदण्डे ज्ञातं—श्रीगौतमनिर्धामितः सुभद्रो द्वारास्फलनोत्थखभार्यामालम्बनाध्यां तत्रैव कृमीभूतः १, वाक्कायदण्डयोर्लौकिकमहर्षिण्यर्थं प्रति सम्यग्मृगगत्युक्त्या नरकं गतः कौशिकः २, प्रागजापालत्वे यूकाशूलाभोतनात् भवशतं निर्मन्तुत्वेऽपि शूलाञ्चितो माण्डव्यश्च ३, माया १ निदान २ मिथ्यादर्शन ३ शल्यरूपा वा त्रयो दण्डास्तेषु, तथा गुप्तिष्वशुभमनोवाक्काययोगनिरोधरूपासु तिसृषु, तथा ईर्या १ भाषा २ एषणा ३ आदाननि

क्षेपण ४ पारिष्ठापनिकासु ५ पञ्चसु समितिषु चशब्दात्सम्यक्त्वप्रतिमापरोपधर्मकृत्यपरिग्रहः, एतेषु निषिद्धकरणादिना योऽतिचारस्सर्कं निन्दामीति पञ्चत्रिंशगाथार्थः ॥ ३५ ॥ नन्वेव सर्वेऽप्यतिचाराः सामान्येन व्यस्तया च प्रतिक्रान्ता परं पुनर्गृहस्थः षट्कायारम्भादिपापेष्वेव प्रवर्त्तते इति निरन्तरबहुलघुकर्मबन्धकालुष्यसम्भवात्कथं नाम तस्य शुद्धिर्गजस्नानप्रायस्यैव भवनादित्याशङ्कायां सम्यग्दर्शनमहिमानं दर्शयन् नत्युत्तरमाह—

सम्मदिट्ठी जीवो जइविहु पावं समायरइ किंचि। अप्पो सिं होइ बंधो जेण न निद्धंधस कुणइ ॥३६॥

सम्यग्—अविपरीता दृष्टिः—बोधो यस्य स सम्यग्दृष्टिर्जीवः, 'यद्यपि' कथञ्चिन्निर्वाहात् 'पापं' कृष्याद्यारम्भं समाचरति १ 'किञ्चित्' निर्वाहमात्रं, हुशब्दस्तथाऽपीत्यर्थे अव्ययानामनेकार्थत्वात्, ततस्तथाऽप्यल्पः—प्रथमगुणस्थानत्रयापेक्षया स्तोकः 'सिं'त्ति तस्य श्रावकस्य भवति बन्धो ज्ञानावरणादिकर्मणामिति शेषः, हेतुमाह—येन कारणेन 'निद्धंधसं' निर्दयमिति क्रियाविशेषणं, 'निद्धंधसे'त्ति पाठे तु 'निर्दन्धसः' निःशूकः सन् कुरुते, जीवदयामूलसम्यग्धर्मोपलम्भेन सर्वकृत्येषु यतनापूर्वमेव प्रवर्त्तनात्, अत एव चैकस्मिन्नपि कृत्ये निर्दयत्वसद्भावसम्पत्तौ चरमविपक्लेश्यारूपपरिणामविशेषेण बहुधान्तरमागमे अम्बूलादकभ्रामवधकरश्चिन्तास्यामभिहितं, तथैवम्—"जह जबुपायवेगो सुपक्कफलभारनमियसालग्गो। दिट्ठो छहिं पुरिसेहिं ते बिंती जम्बु भक्खेमो

॥ १ ॥ कह पुण ते चिंतेंती आरुहमाणाण जीअसव्वेहिं । तो छिंदिऊण मूला पाडिउं ताणि भक्खेमो ॥ २ ॥ बीआइ किमम्हाणं तरुणा छिन्नेण अइमहंतेणे ? छिंदह महल्लसाहा तइओ बेई पसाहाओ ॥ ३ ॥ गुच्छे चउत्थ-ओ पुण पंचमओ बेइ गिण्हह फलाई । छट्ठो अ बेई पडिआ एए चिय सायहा बिंतु ॥ ४ ॥ दिट्ठंतस्सोवणओ छिंदह मूलाओ बेइ जो एवं । सो वट्टइ किण्हाए ? साहमहल्ला य नीलाए २ ॥५॥ हवइ पसाहा काऊ ३ गुच्छा तेऊ ४ फला य पम्हा य ५ । पडिआ य सुक्कलेसा ६ अहवा अन्न उदाहरणं ॥६॥ गामवहत्थं चोरा विणिग्गया एगु बेइ घाएह । जं पिच्छह तं सव्वं दुपयं च चउप्पयं वावि ? ॥७॥ बीओ माणुस २ पुरिसो तइओ ३ साउहे चउत्थो अ ४ । पंचमओ जुज्झंते ५ छट्ठो पुण तत्थिमं भणइ ॥ ८ ॥ इक्कं ता हरह धणं बीअं मारेह मा कुणह एवं । धणहरणमेव कुणह ६ उवसंहारो इमो तेसिं ॥ ९ ॥ सव्वे मारेहत्ति अ वट्टइ सो किण्हलेसपरिणामे । एव कमेण सेसा जा चरिमो सुक्कलेसाए ॥ १० ॥" इति षट्त्रिंशगाथार्थः ॥ ३ ॥ ननु 'स्तोकस्यापि विषस्य विषमा गति'रित्यल्पोऽपि बन्धः संसारस्यैव हेतुरित्याशङ्क्याह—

तंपिहु सपडिक्कमणं सप्परिआवं सउत्तरगुणं च। खिप्पं उवसामेई वाहिव्व सुसिक्खिओ विज्जो ॥३७॥

'तंपिहु से'ति तदपि यत्सम्यग्दृष्टिना कृतमल्पं पापं सद्यं प्रतिक्रमणेन—पञ्चविधावश्यकलक्षणेन वर्तत इति समतिक्रमणं, सपरितापं—हा विरूपं कृतमिति पश्चात्तापसहितं, पकारस्य द्वित्वमार्षत्वात्, 'सप्पडिआर'मिति

पाठे समतिचार, प्रतिचारः–प्रतिचारणा–छात्मार्थेवणिग्वदाधच्यपनोलनया प्रवृत्तिः, तदाह–"कइ कइ करेमि कइ मा करेमि कइ कइ कप पकुकय मे । जो हिअइ सपसारं करेइ सो अइकरेइ हिअं ॥ १ ॥" सोत्तरगुण च गुरूपदिष्टमायश्चित्तचरणान्वित 'क्षिप्र' शीघ्र श्रावकः 'उपशमयति' मिथ्यतापं करोति क्षपयति वा, तुशब्दोऽत्र एवार्थे तत उपशमयत्येवेत्यर्थः, अत्र दृष्टान्तमाह–'व्याधिमिव' साध्यरोग कासश्वासज्वरादिकं यथा सुशिक्षितो–रोगनिदानचिकित्सादिकुशलो वैद्यो वमनविरेचनलङ्घननिपातशायनादिनोपशमयतीति सप्तत्रिंश गाथार्थः ॥ ३७ ॥ दृष्टान्तान्तरेण पूर्वोक्तमेव स्पष्टयति—

जह्वा विस कुट्ठगयं, मतमूलविसारया । विज्जा हणाति मतेर्हि, तो त हवइ निव्विस ॥ ३८ ॥

'जहा वी'ति, विष द्विधा-स्थावर जङ्गम च, स्थावर द्रुमादीनां जङ्गम वृश्चिकसर्पादीनां, ततो यथा विषं 'कोठगतं' उदरगत व्यासशरीरमित्यर्थः मन्त्रा–गारुडादयो मूलानि अपुष्यादीनां, अनेन तन्त्राण्यपि सूचित, तेषु विशारदा–गुर्वाम्नायाभ्यासादिना दृष्टप्रत्ययाः 'वैद्याः' मन्त्रवादिनः 'घ्नन्ति' नाशयन्ति मन्त्रैस्ततस्तस्मात्र निर्विष भवति, यद्यप्यसौ विषार्तस्तेषां मन्त्राक्षराणां न तथाविधमर्थमवबुध्यते तथाऽप्यचिन्त्यो मणिमन्त्रौषधीनां प्रभाव इति-तदक्षरश्रवणेनापि तस्य गुणः संपनीपद्यते, यथा हि स्थविरापुत्रस्य हसस्य कुष्ठाहिदष्टस्य निश्चेष्टस्य मान्त्रिकैस्त्यक्तस्य शोकार्त्तजनन्या मुहुर्मुहुर्हंस । हस । इति पुत्रनामग्रहणपूर्वं रात्रौ नानाविलापकरणे हंसेति

गारुडमन्त्रपीजाक्षरश्रयणादेव सर्वाङ्गविपव्यपगमादि, यथा वाऽज्ञातगुणोऽप्यम्भिः प्रत्यासन्नो पालस्य शीतं व्यपनयति, जल वा पीतं तृष्णां मुष्णाति, इक्षुगुडादिर्वा तस्य सुस्वादुतां तुष्टिं च पुष्णाति, एव मतिमान्द्या विना सूत्राणां सम्यगर्थानवगमेऽपि प्रतिक्रामकस्य कर्मक्षयः स्यादिति भावः, लघुस्तवेऽप्युक्तं–"दृष्ट्वा सम्भ्रम कारि वस्तु सहसा ऐपे इति व्याहृत, येनाकूतवशादपीह वरदे ! विन्दु विनाऽप्यक्षरम् । तस्यापि ध्रुवमेव देवि ! तरसा जाते तवानुग्रहे, वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥१॥" लोकेऽपि श्रूयते कश्चित् केन चित् पृष्टः–आम्राणि लास्यसि राजादनानि वेति, तेनोक्तम्–आम्राणि न राजादनानि, (आंबा ना रायण) एव लोकभाषयाऽन्यार्थेऽपि नारायणनामग्रहणात्तस्य राज्यादिमहाफलमभूत्, इत्यष्टत्रिंशश्लोकार्थः ॥ ३८ ॥ दार्ष्टान्तिक योजयति—

एव अट्ठविह कम्म, रागदोससमज्जिअ । आलोअंतो अ निंदतो, खिप्प हणइ सुसावओ ॥३९॥

'एव'मिति, एवमष्टविध–ज्ञानावरणीय १ दर्शनावरणीय २ वेदनीय ३ मोहनीय ४ आयु ५ नाम ६ गोत्र ७–विघ्न ८ मेदभिन्नं कर्म्म रागद्वेषसमर्जित गुरुपार्श्वे आलोचयन्नात्मसमक्ष निन्दन्न क्षिप्र हन्ति–जीवप्रदेशेभ्यो वियोजयति सुश्रावकः, प्रमादादयोऽपि कर्मबन्धहेतवो भवन्ति रागद्वेषयोस्तूपादान प्राधान्यख्यापनार्थं, यतः–"नेहब्भंगिअतणुणो रेणूए विज्जए जहा देहं । रागदोसाउलमाणसम्मि तह कम्मबंधोवि ॥१॥" सुश्रावक इत्यत्र सुशब्दः पूजार्थः, स च षट्स्थानयुक्तभावश्रावकत्वस्य सूचको, यतः–"कयवयकम्मो १ तह सीलव च २

गुणवं च ३ संस्सुयववहारी ४ । गुरुसुस्सूसो ५ पवयणकुसलो ६ सड्ढ भावओ सड्ढो ॥ १ ॥" इत्येकोनविंशतिर्-शास्त्रोक्तार्थः ॥ १९ ॥ एनमेवार्थं सविशेषमाह—

कयपावोवि मणुस्सो आलोइअनिंदिअ गुरुसगासे । होइ अइरेगलहुओ ओहरिअभरुव्व भारवहो ४०

'कयपावो' इति पापयति—शोषयति पुण्यं पांशयति वा—गुण्डयति जीवमलमिति पापं—अशीतिसङ्ख्याशुभ कर्मप्रकृतिरूपं तद्धेतुकं हिंसाऽनृतादि अपि पापं, ततः कृतजीववधादिपापोऽपि 'मनुष्यः' पुमान् स्त्री नपुंसको वा न तु तिर्यग्देवादि, मनुष्याणामेव प्रतिक्रमणयोग्यत्वात्, 'आलोचितनिन्दितः' सम्यक्कृतालोचननिन्दाविधिः क? इत्याह—'गुरुसकासे' गुरोः समीपे, अगुरोरगीतार्थादेरन्तिके आत्मनैव वा क्रियमाणायामालोचनायां शुद्ध्यभावात्, यतः—"अग्गीओ न विआणइ सोहिं चरणस्स देइ ऊणऽहिअं । तो अप्पाणं आलोअगं च पाडेइ संसारे ॥ १ ॥" स्वयं च तीव्रतपसाऽपि न शुद्धिर्यतोऽशीतितमचतुर्विंशती रूपेन्द्रपुत्री चतुरिकाम्रतवधाऽन्याईदीक्षिता लक्षणार्या चटकयुग्मरतं दृष्ट्वा वध्यो-अर्हता किमेतदनुमतम्?, अवेदोऽसौ वा? इत्यादि, ह्रियाऽनालोचित, तच्छुद्ध्यै दश वर्षाणि विकृतिवर्जं षष्ठाष्टमाद्यैर्द्वे पारणकैर्द्वे षोडश मासक्षपणैर्विंशतिमाचामाम्लैः, एवं ५० वर्षतपस्तपनेऽप्युग्रदुःखाऽसङ्ख्यभवैः पद्मनाभतीर्थे सेत्स्यति, तदुक्तम्—"ससल्लो जइवि कट्ठुग्गं, घोरं वीरं तवं चरे । दिव्वं वाससहस्सं तु, तओवि तं तस्स निप्फलं ॥ १ ॥ जह कुसलोवि हु विज्जो अन्नस्स कहेइ अप्पणो

विम्योऽपि सम्यगालोचन, लक्षणार्थोवेरिव, अत एवास्याभ्यन्तरतपोमेवत्व, यदुक्त निशीथचूर्णौ–"त न दुक्करं अ पडिसेविअइ, त दुक्करं ज सम्म आलोइज्जइ"त्ति, शल्य च महाऽनर्थाय, यतः–"नवि त सत्थं व विसं व दुप्पउत्तो व कुणइ वेआलो । जत च दुप्पउत्त सप्पो व पमायओ कुद्धो ॥ २ ॥ ज कुणइ भावसल्लं अणुद्धिअ इत्य सव्वदुहमूल । दुल्लहबोहीअत्त अणतससारियत्त च ॥ ३ ॥ अप्पपि भावसल्ल अणुद्धिअ रायवणिअतणए-हिं । जाय कडुअविवाग किं पुण बहुआइ पावाइ ॥४॥" 'अप्प'ति अल्प पूर्वभवे प्रव्रज्यानन्तर स्वजायासाध्वी सानुरागावलोकनमात्र 'रायवणिअतणएहिं'ति क्रमावार्द्रकुमारेलापुत्राभ्यां 'कडुअ'त्ति धर्मसिन्धुतिनीचकुला-गमनादि "निद्धविअपावपंका सम्म आलोइउ गुरुसगासे । पत्ता अणतसत्ता सासयसुक्ख अणाबाह ॥ ४ ॥" यथा स्वभगिन्यां स्वस्वामिपत्न्यामासक्तः स्वामिराज्यच्छलग्रहणद्रोहाविकृत्यन्त्रघोरस्वपः सम्यगालोच्य प्रव्रज्य सिद्धस्तस्सम्बन्धो चिचिकोसुचन्तर्गतशुकराजकथातो ज्ञेयः, गुरुस्वं प्रायश्चित्त च सम्यग् बोद्धव्यं, उक्त चालोचनापञ्चाशके–"आलोअणासुदाणे लिंगमिण चिंति मुणिअसमयत्था । पच्छित्तकरणमुचिअ अकरणयं चेव दोसाणं ॥ १ ॥ पक्खिअचाउम्मासे आलोअण निअमसो उ दायव्वा । गहणं अभिग्गहाण य पुव्वगहिए निवेएउं ॥२॥" इति चत्वारिंशगाथार्थ ॥४०॥ सम्प्रति प्रतिक्रमणस्य मोक्षफलप्रापणद्वारेणापि माहात्म्यमाह—

आवस्सएण एएण सावओ जइवि बहुरओ होइ । दुक्खाणमतकिरिअं काही अचिरेण कालेण ४१

'आवस्से'त्ति, श्रावको यद्यपि बहुरजाः—बहुबध्यमानकर्मा बहुरतो वा-विविधसावद्यारम्भासक्तस्तथाऽपीत्य
व्याहाराद्यावश्यकेन-अवश्यकर्त्तव्येन एतेनेति—सामायिक१ चतुर्विंशतिस्तव२ वन्दनक ३ प्रतिक्रमण ४कायोत्सर्ग
५ प्रत्याख्यान ६ रूपेण षड्विधभावावश्यकेन न तु दन्तधावनादिद्रव्यावश्यकेन 'दुःखाना' शारीराणां मानसाना
च 'अन्तक्रियां' क्षयं करोति 'अचिरेण' स्तोकेनैव कालेन तद्भवादिनाऽपीति सटङ्कः, इह च यद्यपि दुःखाना
मन्तक्रियाया अनन्तरहेतुर्यथाऽऽख्यातचारित्र, तल्लाभे एवान्तक्रियाभावात्, तथाऽपि परम्पराहेतुरिदमपि
जायते, अयमर्थः—यतिश्चसर्वोत्कृष्टरूपेण सामायिकाद्यावश्यकेनाभ्यस्यमानेन सात्मीकृत्य सर्वविरतिं तदाराधन-
स्तद्भवेऽपि श्रावकस्य मोक्षः स्यात्, सामायिकाद्यावश्यकेनैव वा गृहिणोऽपि भावविशुद्ध्या भरतचक्रयादेरिव
केवलोत्पत्तिः सम्भवति, श्रूयन्ते च सामायिकादिपदमात्राद्प्यनन्ताः सिद्धा, पठन्त्यपि—"जोगे २ जिणसास
णंमि दुक्खक्खयं पउंजता । इक्किक्कमि अणता वट्टता केवल पत्ता ॥ १ ॥" इत्येकचत्वारिंशगाथार्थः ॥४१॥ अथ
मनोवाक्कायप्रवृत्तीनामतिसूक्ष्मत्वादिन्द्रियवश्यानां घातिचपलत्वात् जीवस्य घातिभावबहुलत्वात्कियन्तोऽप-
राधाः स्मृतिपथमायान्ति?, आलोचनार्हाश्च सर्वे, यदागमश्च—"पायच्छित्तस्स ठाणाइं संखाईयाइं गोअमा !
अणालोइअं तु इक्कंपि ससल्लं मरणं मरइ" अतो विस्मृतातिचारं सामान्येन प्रतिक्रमितुमाह—

आलोअणा बहुविहा न य संभरिआ पडिक्कमणकाले। मूलगुण उत्तरगुणे तं निंदे तं च गरिहामि ४२

'आलोअणे'ति, आलोचना-गुरुभ्यो निजदुश्चरितकथनं, तदुपचारात् तत्कारणभूताऽप्यालोचनोच्यते 'बहुविधा' नानाप्रकारा, तद्धेतूनां बहुत्वात्, अत एवोपयोगपरस्यापि न स्मृता प्रतिक्रमणकाले-आलोचना निन्दागर्हाऽवसरे, प्रतिक्रमणस्य हि द्वौ कालो-सूर्योदयोऽस्तमयनं च, सूर्योदयारम्भाच्च प्रतिक्रमणमुपधिप्रतिलेखनं च यावतो स्यात्तावन्मानं, साध्वावश्यके कृते यथा सन्ध्याविगमः स्यात्, इदं साधुश्राद्धयोरुत्सर्गेण श्रावकस्यापि ज्ञेयं, अपवादेन तु कृतिकर्मक्रियानुरोधेनान्यथाऽपि, यतः-"वित्तीवोच्छेअम्मि य गिहिणो सीअंति सव्वकिरिआउ। निरविक्खस्स व जुत्तो संपुण्णो संजमो चेव ॥ १ ॥" कं विषये आलोचना? इत्याह-मूलगुणे उत्तरगुणे, मूलगुणाः-पञ्चाणुव्रतानि उत्तरगुणाः-सप्त गुणव्रतादीनि, एवं च विस्मृतातिचारस्य सामान्येनापि प्रतिक्रमणेन शुद्धिरित्यावेदितमिति द्वाचत्वारिंशगाथार्थः ॥ ४२ ॥ एवं प्रतिक्रमको दुष्कृतनिन्दादीन् विधाय विनयमूलधर्माराधनार्थं कायेनाभ्युत्थितः सन् 'तस्स धम्मस्स केवलिपन्नत्तस्सेति' भणित्वा मङ्गलमेतद् भणति-

अब्भुट्ठिओमि आराहणाए विरओमि विराहणाए। तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीस ४३

'अब्भुट्ठि०' ॥ तस्य गुरुपार्श्वे प्रतिपन्नस्य धर्मस्य-श्रावकधर्मस्य केवलिप्रज्ञप्तस्य, 'अभ्युत्थितोऽस्म्याराधनायै' उद्यतोऽहं सम्यक्पालनार्थं 'विरतश्च विराधनायाः' निवृत्तः खण्डनायाः 'त्रिविधेन' मनोवाक्कायैः 'प्रतिक्रान्तः' प्रतिक्रमितव्यातिचारेभ्यो व्यावृत्तो वन्दे जिनांश्चतुर्विंशतिं श्रीऋषभादीन्, क्षेत्रकालासन्नोपकारित्वात्; चतुर्वि-

शतिग्रहणात्पञ्चभरतपञ्चैरावतप्रभवानुपलक्षणत्वात्पञ्चमहाविदेहगतांश्च जिनान् वन्दे, एवं 'चउवीसजिणवि णिरगयकहाइ' इत्यत्र प्रान्तगाथान्ते च भाव्यम्, इति त्रिचत्वारिंशगाथार्थः ॥ ४३ ॥ एवं भावजिनान् नत्वा सम्यक्त्वशुद्ध्यर्थं लोकत्रयगतशाश्वताशाश्वतस्थापनाजिनवन्दनामाह—

जावंति चेइआइ उड्ढे अ अहे अ तिरिअलोए अ । सव्वाइ ताइं वंदे इह संतो तत्थ संताइं ॥ ४४ ॥

'जावंती'ति यावन्ति 'चैत्यानि' जिनेन्द्रप्रतिमा 'ऊर्ध्वलोके' स्वर्गादौ 'अधोलोके' भवनपतिभवनादौ 'तिर्यग्लोके' नन्दीश्वराद्यपर्वतादौ च सन्ति सर्वाणि तानि वन्दे इह सन् तत्र 'सन्ति' विद्यमानानि, अत्र स्थितस्तत्र स्थितानीति वा, नित्यप्रतिमासङ्ख्या त्वित्यादि—"सट्ठी लक्खा गुणनवइ कोडि तेर कोडि सय चिंघ भवणेसु १३८९६०००००। तिअ सय वीसा इगनवइ सहस लक्खतिग तिरिअ ३९१३२० ॥ १ ॥ एग कोडिसय सत्त बावन्ना कोडि चउणवइ लक्खा । चउचत्त सहस सगसय सट्ठी वेमाणि बिंबाणि १५२९४४७६० ॥ २ ॥ पनरसकोडिसयाइं दुचत्तकोडीउ अडवन्नलक्खा य । छत्तीससहस असिआ तिहुअणबिंबाणि पणमामि १५४२५८३६०८० ॥ ३ ॥" ज्योतिर्व्यन्तराणामसङ्ख्यभवनेषु प्रत्येकं चैत्यभावाच्च प्रतिमासङ्ख्येति चतुश्चत्वारिंशगाथार्थः ॥४४॥ अथ सर्वसाधुवन्दनार्थमाह—

जावंत केइ साहू भरहेरवयमहाविदेहे अ । सव्वेसिं तेसिं पणओ तिविहेण तिदंडविरयाणं ॥ ४५ ॥

यावन्तः केचित् साधवः केवलिपरमतविततरावधिमनःपर्ययविपुलमतिचतुर्दशदशपूर्वधरएकादशाङ्गिजिन
स्थविरकल्पिकयथालन्दिकपरिहारविशुद्धिकक्षीरमधुसर्पिरास्रवसंभिन्नश्रोतःकोष्ठबुद्धिविद्याजङ्घाचारणपदानु
सारिवैक्रियपुलाकविप्रुषामर्शखेलजल्लौषधिसर्वौषध्यादिलब्धिपुलाकनिर्ग्रन्थस्नातकाचार्योपाध्यायप्रवर्त
कादिभेदभिन्ना उत्कर्षतो नवकोटिसहस्रसङ्ख्या जघन्यतस्तु द्विकोटिसहस्रमिता भरतैरावते महाविदेहे च
पञ्चपञ्चभेदे, एवं पञ्चदशकर्मभूमिषु चशब्दात्पूर्वान्तरहरणादिनाऽकर्मभूम्यादिषु सन्ति सर्वेभ्यस्तेभ्यः प्रणतोऽस्मि
'त्रिविधेन' मनोवाक्कायैः, तत्र मनसा तद्गुणस्मरणगर्भबहुमानात् वाचा तन्नामोच्चारणात् कायेन शिरस्थिरेन
मनात्, 'त्रिदण्डविरतेभ्यः' अशुभमनोवाक्कायप्रयोगविरतेभ्यः, इति पञ्चचत्वारिंशगाथार्थः ॥ ४५ ॥ एव
मसौ प्रतिक्रमणकर्त्ता कृतसमस्तचैत्यपतिप्रणतिः प्रवर्द्धमानशुभतरपरिणामो भविष्यत्कालेऽपि शुभमाशा-
शंसां करोति—

चिरसंचिअपावपणासणीइ भवसयसहस्समहणीए। चउवीसजिणविणिग्गयकहाइ वोलंतु मे दिअहा॥४६

'चिरे'ति ॥ चिरसञ्चितपापप्रणाशन्या भवशतसहस्रमथन्या, अत्रोपलक्षणत्वादनन्ता भवा ग्राह्याः, चतु-
र्विंशतिजिनेभ्यो वीजेभ्योऽङ्कुरवद्विनिर्गतया कथया–तन्नामोत्कीर्त्तनतद्गुणगानतच्चरितवर्णनादिरूपया वचनप
दत्ता जिनार्चने पुष्पादिवत्कायोत्सर्गस्य, एकेनापि सर्वोऽपि केवलमव्ययाः 'वोलंतु' त्ति अजन्तु 'मे' मम

'दिवसाः' अहोरात्राणि, बोधिप्रार्थनबस ग्रोपायेवमिति पदयत्वारिंशगाथार्थ ॥ ४६ ॥ अथ मङ्गलपूर्व जन्मान्तरेऽपि समाधिं बोधिं च प्रार्थयते—

मम मंगलमरिहंता सिद्धा साहू सुअं च धम्मो अ। सम्मद्दिट्ठी देवा दिंतु समाहिं च बोहिं च ४७

'मम मंगले'ति ॥ मम मङ्गलमर्हन्तः सिद्धाः साधवः श्रुतं च—अङ्गोपाङ्गाद्यागमः धर्मः—श्रुतचारित्रधर्मात्मकः, चत्वार्यपि लोकोत्तमानि शरणं चेति द्रष्टव्य, 'चत्तारि मंगलं' इत्यादौ चत्वार्येव मङ्गलान्युक्तानि अत्र तु धर्मान्तर्गतस्येऽपि श्रुतस्य मङ्गलतया पृथगुपादानं ज्ञानक्रियाभ्यां समुदिताभ्यामेव मोक्ष इति ज्ञापनार्थं, तदाहुः—"हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १ ॥" इत्यादि, तथा—"नग्नस्थे पशवो जलेजलचराः सर्वे जटाभिर्वटा, वल्कैर्भूरुलताः शुकाः करिसराः स्नानादयो भस्मभिः। वह्नीनां ज्वलनैर्जना हरिमृगाः संतानिता रज्जुभिः, स्वर्गं यान्ति कथं न ते यदि वृथा ज्ञानक्रिये निष्फले ? ॥ १ ॥" भाषाराष्ट्रेऽपि—"अणाणाए एगे सोवट्ठाणा आणाए एगे निरुवट्ठाणा एय ते मा होउ" त्ति, तथा सम्यग्दृष्टयः—अर्हत्पाक्षिका देवा वैश्यमेत्स्येकशोपादेवा—धरणेन्द्राम्बिकायक्षादयो 'ददतु' प्रयच्छन्तु 'समाधिं' चित्तस्वास्थ्य, समाधिर्हि मूलं सर्वधर्माणां स्कन्ध इव शाखानां शाखा वा प्रशाखानां पुष्पं वा फलस्य बीजं वाऽङ्कुरस्य, चित्तस्वास्थ्यं विना विशिष्टानुष्ठानस्यापि कष्टानुष्ठानमात्रत्वात्, समाधिश्चाधिव्याधिभिर्विधूयते, तन्निरोधश्च तद्धेतुकोपसर्ग-

निवारणेन स्यादिति तत्प्रार्थना, 'बोधिं' परलोके जिनधर्मप्राप्तिं, यत–"सावयघरंमि वर हुज्ज चेडओ नाणदंसणसमेओ। मिच्छत्तमोहियमई मा राया चक्कवट्टीवि ॥ १ ॥" कश्चिदाह-ननु देवाः समाधिबोधिदाने किं समर्था न वा ?, यद्यसमर्थास्तर्हि तत्प्रार्थनस्य वैयर्थ्यं, यदि समर्थास्तर्हि दूरभव्याभव्येभ्य किं न यच्छन्ति ?, अथैवं मन्यते-योग्यानामेव समर्था नायोग्यानां, तर्हि योग्यतैव प्रमाणं किं तैरजागलस्तनकल्पैः ?, अत्रोत्तरं, सत्यं योग्यतैव प्रमाणं, परं न वयं विचाराक्षमनियतिवाद्यादिवदेकान्तवादिनः, किन्तु सर्वनयसमूहात्मकस्याद्वादवादिनः, 'सामग्री वै जनिके'ति वचनात्, यथा हि घटनिष्पत्तौ मृदो योग्यतायामपि कुलालचक्रचीवरदवरकदण्डादयोऽपि सहकारिकारणमेवमिहापि जीवस्य योग्यतायां सत्यामपि तथा तथा प्रत्यूहव्यूहनिराकरणेन देवा अपि समाधिबोधिदाने समर्थाः स्युः, मेतार्यस्य प्राग्भवमित्रसुर इवेति फलवती तत्प्रार्थना, ननु देवादिषु प्रार्थनाद्यनुमानादिकरणे कथं न सम्यक्त्वमालिन्यम् ?, उच्यते, नहि ते मोक्षं दास्यन्तीति प्रार्थ्यन्ते बहु मन्यन्ते वा, किन्तु धर्मध्यानकरणेऽन्तरायं निराकुर्वन्तीति, न चैव कश्चिद्दोषः, पूर्वश्रुतधरैरप्याचीर्णत्वादागमोक्तत्वाच्च, उक्तञ्चावश्यकचूर्णौ श्रीवज्रस्वामिचरित्रे-"तत्थ य अब्भासे अन्नो गिरी तं गया, तत्थ देवयाए काउस्सग्गो कओ, सावि अब्भुट्ठिआ, अणुग्गहत्ति अणुन्नाय" मिति, आवश्यककायोत्सर्गनिर्युक्तावपि-"चाउम्मासिअवरिसे उस्सग्गो खित्तदेवयाए अ। पक्खिअ सिज्जसुरीए करंति चउमासिए वेगे ॥ १ ॥" बृहद्भाष्येऽपि-"पारि-

अकाउस्सग्गो परमिट्ठीण य कयनमुक्कारो । वेयावच्चगराण दिज्ज थुई जक्खपमुहाण ॥ १ ॥" प्रकरणकृतः श्रीहरिभद्रसूरयोऽप्याहुर्ललितविस्तरायां–"चतुर्थी स्तुतिर्वैयावृत्त्यकराणा"मिति, तदेव प्रार्थनाकरणेऽपि न काचिद्युक्तिरिति सप्तचत्वारिंशगाथार्थः ॥ ४७ ॥ ननु येनैतानि व्रतानि स्वीकृतानि स प्रतिक्रामतु न त्वन्यः अस्वीकृतेऽतिचारासम्भवात्, ग्रामसद्भावे हि सीमाकरणमर्हति, तदयुक्तं, द्वावपि प्रतिक्रामेतां, यतो नातिचारे ष्वेव प्रतिक्रमणं, किन्तु चतुर्षु स्थानेष्वपि, तान्येवाह—

पडिसिद्धाण करणे किच्चाणमकरणे अ पडिक्कमणं । असद्दहणे अ तहा विवरीअपरूवणाए अ ॥४८॥

'पडिसिद्धाणं' इति । श्राद्धस्यापि सिद्धान्ते प्रतिषिद्धानि स्थूलप्राणातिपातादीन्यष्टादश पापस्थानानि, तेषु प्राणातिपातादयः पञ्च क्रोधादयश्च चत्वारः प्रागुक्ताः, एवं प्रेम–अव्यक्तमायालोभोदयरूपं १० द्वेषः–अव्यक्तक्रोधमानोदयरूपः ११ अभ्याख्यानं–असद्दोषाधिरोपणं १२ रत्यरती–इष्टानिष्टेषु प्रीत्यप्रीती १३।१४ पैशुन्यं–द्रोहेण परदोषोद्घट्टनं १५ परपरिवादो मात्सर्येण परनिन्दनं १६ मायामृषावादो मायया मृषाभाषणं १७ मिथ्यात्वं प्रागुक्तं १८ एषेःस्वरराट्यादिरूपः कलहोऽपि पापस्थानेषु क्वचित् पठितः श्रूयते, तत्र रत्यरत्योरेकत्वगणनं संभाव्यते, एषां प्रतिषिद्धानां करणे १ तथा कृत्यानां–'नवकारेण विबोहो' इत्यादिश्रुतोक्तश्राद्धदिनकृत्यानां स्वीकृतव्रतादिनियमानां चाऽकरणे, दिनकृत्यव्यक्तिस्तु मत्कृतश्राद्धविधिप्रकरणवृत्तेर्ज्ञेया २ तथा आज्ञाग्राह्याणां

निगोदादिसूक्ष्मार्थानामश्रद्धाने ३, तथा विपरीतप्ररूपणा–उन्मार्गदेशना, इयं च दुरन्तदुःखहेतुर्मरीच्यादेरिव, यदोक्तं–"दुब्भासिएण इक्केण मरीई दुक्खसागरं पत्तो। भमिओ कोडाकोडिं सागरसरिनामधिज्जाणं ॥ १ ॥" अस्यां चानाभोगादिना कृतायां प्रतिक्रमणं भवति ४, ननु श्रावकस्य धर्मकथनेऽधिकारोऽस्ति ?, अस्तीति ब्रूमः, गुर्वादिभ्य सम्यक् सूत्रार्थानवबुध्य गुरव एवमादिशन्तीति धर्मकथने को नाम नाधिकारः ? "पढइ सुणेइ गुणेइ अ जणस्स धम्मं परिकहेई"त्यादिवचनप्रामाण्यात्, तथा चावश्यकचूर्णिः–"सो जिणदाससावओ अट्ठमीचउद्दसीसु उववासं करेइ पुत्थयं च वाएई"त्यादि अष्टचत्वारिंशगाथार्थः ॥ ४८ ॥ उक्तं सविषयं सहेतुकं च प्रतिक्रमणं, सम्प्रत्यनादिसंसारान्तर्गतानां सर्वेषां जीवानां नानाभवेष्वन्योऽन्यवैरसम्भवात्तरक्षमणेन प्रतिक्रमणमाह–

खामेमि सव्वजीवे, सव्वे जीवा खमंतु मे। मित्ती मे सव्वभूएसु, वेरं मज्झ न केणई ॥ ४९ ॥

'खामेमी'ति 'क्षमयामि' मर्षयामि सर्वान् जीवाननन्तभवेष्वज्ञानमोहाकृतेन पीडितानहं, सर्वे जीवाः 'क्षमन्तु' मर्षन्तु दुश्चेष्टितम्, एतावता मामाश्रित्याक्षान्तिहेतुकस्तेषां कर्मबन्धो मा भूदिति कारुण्यं सूचितं, हेतुमाह–यतो मैत्री मे 'सर्वभूतेषु' सर्वसत्त्वेषु, 'वैरम्' अप्रीतिर्मम न केनचित्प्राणिना सह, कोऽर्थः ?–मुक्तिलाभहेतुमिस्तान् सर्वान् यथाशक्ति मुक्तिं रूम्भयामि, न च केषाश्चित्स्वप्रकृतामपि विघाते वर्तेऽहं, न च निन्द-

कादीनपि द्वेष्मि, आत्मतत्त्वात्, उक्तं हि ज्ञानाङ्कुशे–"मभिन्त्वया यदि जन परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे । श्रेयोऽर्थिनो हि पुरुषाः परितुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १ ॥" मैत्रीस्वरूपं चैवमाहुः–"मा कार्षीत् कोऽपि पापानि, मा च भूत् कोऽपि दुःखितः । मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥ १ ॥" वैरं च स्वल्पमप्यनल्पानर्थकृद्भवद्वयेऽपि, तत्रात्र कौरवपाण्डवादीनामिवाष्टादशाक्षौहिणीक्षयादिहेतुश्चेटककोणिकयोरिव वा, यदुक्तं पञ्चमाङ्गादिसंवादि–"वज्जयकोणिअभुजो चुलसी छन्नउअ लक्खमणुआण । रहमुसलंमि अ नेआ महासिलाकंटए चेव ॥१॥ वरुणो सोहम्ममी तस्स य मित्तो अ माणुसगईए। नयलक्ख मच्छउअरे सेसा पुण तिरिअनरएसु ॥ २ ॥ कालाइओवि मरिउं चउत्थपुढवीइ इत्थि उप्पन्ना । तत्तो ते उव्वट्टा सिज्झिस्सन्ति विदेहंमि ॥ ३ ॥ तेसिंपि अ जणणीओ वीरसगासंमि पव्वइआओ । उस्सप्पिणी इमीसे न एरिसो अक्खसंगामो ॥ ४ ॥" परत्र तु वैरं भवपरम्परानुयायि कमठमरुभूत्यादीनामिव, पठन्त्यपि–"वैरवैश्वानरव्याधिवादव्यसनलक्षणाः । महाऽनर्थाय जायन्ते, वकाराः पञ्च वर्द्धिताः ॥ १ ॥" क्षमाप्रधानश्च जैनधर्मः, श्रीवीरजिनेन स्वयं तथादर्शितत्वात्, 'इच्छामि खमासमणो' इत्यादौ च तस्याः प्राधान्येन भणनात्, आगमेऽपि च–"खंती सुहाण मूलं मूलं धम्मस्स उत्तमा खंती । हरइ महाविज्जा इव खंती दुरिआइं सयाइं ॥ १ ॥" समर्थस्य च क्षमा बहुफला, यतः–"दाणं दरिद्दस्स पहुस्स खंती, इच्छानिरोहो अ सुहाइदिअस्स । पढमे

चउ इंदिअनिग्गहो य, चत्तारि एआणि सुदुद्धराणि ॥ १ ॥" क्षमाफलं च कूरगडुकादीनामिव तद्भवेऽपि केवलज्ञानलाभादि प्रतीतमतः क्षमाभावस्य धर्मार्थिना वैरं त्याज्यमेवेत्येकोनपञ्चाशगाथार्थः ॥ ४ ॥ सम्प्रति प्रतिक्रमणाध्ययनमुपसंहरन्नुत्तरोत्तरधर्मवृद्ध्यर्थमन्त्यमङ्गलमाह—

एवमहं आलोइअ निंदिअ गरहिअ दुगंछिउं सम्मं। तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीसं ५०

॥ इति श्रीश्राद्धप्रतिक्रमणसूत्रं सम्पूर्णम् ॥

'एवमहं'मिति, 'एवम्' अनेन प्रकारेणाहं सम्यग् 'आलोच्य' गुरोर्निवेद्य 'निन्दित्वा' दुष्टु कृतमिति स्वसमक्षं गर्हित्वा-तदेव गुरुसमक्षं जुगुप्सित्वा-धिग् मां पापकारिणमित्यादिना, सम्यगिति सर्वत्र योज्यं, 'दुगुंछिअं' इति पाठे तु एवमालोच्य निन्दित्वा गर्हित्वा जुगुप्सितं विचिकित्सितं वाऽतिचारजातं सम्यक् 'त्रिविधेन' मनोवाक्कायलक्षणेन 'प्रतिक्रान्तः' कृतप्रतिक्रमणश्चतुर्विंशतिजिनान् वन्दे इति प्रान्त्यगाथार्थः ॥ ५० ॥

अत्राह परः-इदं प्रतिक्रमणसूत्रं केन कृतम् ?, उच्यते, यथाऽपरप्रतिक्रमणसूत्राणि श्रुतस्थविरकृतानि तथेतदपि, यदुक्तमावश्यकबृहद्वृत्तौ-'अक्खरसन्नी'तिगाथाव्याख्याने-अङ्गप्रविष्टं गणधरकृतमाचाराङ्गादि, अनङ्गप्रविष्टं तु स्थविरकृतमावश्यकादीनि, अथ श्रावकप्रतिक्रमणसूत्रस्य यद्यार्षत्वं तदा किं न तस्य निर्युक्तिभा

ध्यादि ? इति चेत् तदावश्यकदशवैकालिकादिदशशास्त्रीव्यतिरेकेण शेषाणां निर्युक्त्यभावादौपपातिकाद्युपाङ्गानां च चूर्णेरप्यभावात् अनाप्तत्वप्रसक्तस्तस्मात् किञ्चिदेतत्। श्राद्धप्रतिक्रमणसूत्रस्य च विक्रम ११८३ वर्षे श्रीविजयसिंहसूरिश्रीजिनदेवसूरिकृते चूर्णिभाष्ये अपि स्तः, वृत्तयश्च बहव्यः, अतः श्रुतस्थविरकृतत्वेन सर्वातीचारविशोधकत्वेन श्रावकैरतदुपादेयमेव, साधुभिः स्वप्रतिक्रमणसूत्रमिव, एवं सति ये स्वकदाग्रहमात्राभिनिविष्टहृदयः पाश्चात्येन केनचित् कृतं सर्वथा चानुपादेयमिदमिति ब्रुवते न चिह्नस्तेषां का गतिः ?, सर्वज्ञप्रणीतप्राचीनस्थविराचरितसम्यग्मार्गस्योपमर्दनात्, तदुक्तं–"एगो आणाभंगे इक्कुच्चिअ निग्गहो हवइ लोए। सव्वन्नाणाभंगे अणंतसो निग्गहं लहइ ॥ १ ॥" ननु श्रावकस्य प्रतिक्रमणकरणमेवासङ्गतं दूरेऽस्तु प्रतिक्रमणसूत्रविचारः, तदपि प्रलापमात्रं, सिद्धान्ते श्राद्धानामनेकत्र तस्योक्तत्वात्' यदनुयोगद्वार–"से किं तं लोउत्तरिअं भावावस्सयं ?, २ जन्नं समणो वा समणी वा सावओ वा साविआ वा तच्चित्ते जाव उभओ कालं आवस्सयं करेइ"त्ति, तथा तत्रैव–"समणेण सावएण य अवस्सकायव्वय हवइ जम्हा। अतो अहो निसस्सा तम्हा आवस्सयं नाम ॥ १ ॥" तथाङ्गवृत्तिकृदभयदेवसूरिकलिकालसर्वज्ञश्रीहेमसूरिप्रमुखपूर्वाचार्यरचितेषु पञ्चाशकचूर्णियोगशास्त्रप्रभृतिग्रन्थेषु च श्राद्धानां प्रतिक्रमणं साक्षादुक्तं सर्वप्रसिद्धमेव, तत् पञ्चमेदं–दैवसिकं १ रात्रिकं २ पाक्षिकं ३ चातुर्मासिकं ४ सांवत्सरिकं ५ चेति, एषां कालविध्यादि मत्कृतविधिकौमुद्या अवधार्यम् ॥

विख्याततपेत्याख्या जगति जगच्चन्द्रसूरयोऽभूवन् । श्रीदेवसुन्दरगुरूत्तमाश्च तदनु क्रमाद्विदिता ॥ १ ॥
पञ्च च तेषां शिष्यास्तेष्वाद्या ज्ञानसागरा गुरवः। विविधावचूर्णिलहरिप्रकटनतः सान्वयाह्वानाः ॥२॥ श्रुतगत-
विविधालापकसमुद्धृतः समभवंश्च सूरीन्द्राः। कुलमण्डना द्वितीया श्रीगुणरत्नास्तृतीयाश्च ॥३॥ षड्दर्शनवृत्ति
क्रियारत्नसमुच्चयविचारनिचयसृजः। श्रीभुवनसुन्दरादिषु भेजुर्विद्यागुरुत्वं ये ॥४॥ श्रीसोमसुन्दरगुरुप्रवरास्तुर्या
अहार्यमहिमानः। येभ्यः सन्ततिरुच्चैर्भवति द्वेधा सुधर्मभ्यः ॥ ५ ॥ यतिजीतकल्पविवृतश्च पञ्चमाः साधुरत्न
सूरिवराः। यैर्मादृशोऽप्यकृष्यत करप्रयोगेण भवकूपात् ॥६॥ श्रीदेवसुन्दरगुरोः पट्टे श्री सोमसुन्दरगणेन्द्राः।
युगवर इव विजयन्ते, तेषां शिष्याश्च पञ्चैते ॥ ७ ॥ मारीत्यवमनिराकृतिसहस्रनामस्मृतिप्रभृतिकृत्यैः। श्रीमुनि
सुन्दरगुरवश्चिरन्तनाचार्यमहिमभृत ॥ ८ ॥ श्रीजयचन्द्रमुनीन्द्रा निस्तन्द्राः सङ्घगच्छकार्येषु। श्रीभुवनसुन्दर
वरा दूरविहारैर्गणोपकृतः ॥ ९ ॥ एकाङ्गा अप्येकादशाङ्गिनश्च जिनसुन्दराचार्याः। निर्ग्रन्थाः ग्रन्थकृतः श्रीमज्
जिनकीर्त्तिगुरवश्च ॥ १० ॥ एषां श्रीसुगुरूणां प्रसादतोऽब्दे षडङ्कविश्व १४९६ मिते । श्रीरत्नशेखरगणिर्वृत्ति-
मिमामकृत कृतिमुदे ॥ ११ ॥ चातुर्विद्योदधिभिर्वैभिभिर्विशुद्धपरमपरमागम् । साऽशोध्यत प्रयत्नाल्लक्ष्मी
भद्राह्वविबुधेन्द्रैः ॥ १२ ॥ विज्ञाऽपतत्सविहितसमर्शांसूगणिसख्यहंसविबुधाद्यैः। गुरुभक्त्याऽस्या प्रथमादर्शो साधि
ष्यमाणापि ॥ १३ ॥ एतस्यां टीकायामनुष्टुभामर्थदीपिकानाम्न्याम् । षट्पञ्चिशतीचत्वारिंशाद्गुरुत्तराऽनुमिता

॥ १४ ॥ वरचूर्णिविविधवृत्त्याद्यनुसृत्य कृतेयमल्पमतिनाऽपि । उत्सूत्रमत्र विबुधैः शोध्यं जीयादियं च चिरम् ॥ १५ ॥

॥ इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ शेषाधिकारः पञ्चमः ॥५॥ संवत् १६०३ श्रावण सुदि ५ रवि श्रीजीराउलागच्छे लिखित फीका जाउरनगरे ।

॥ समाप्ता चेयमर्थदीपिकानाम्नी श्रावकप्रतिक्रमणसूत्रटीका ॥ ॥ सर्वग्रन्थ ६६४४ ॥ श्री ॥ श्रीरस्तु ॥

# ॥ श्रीमद्रत्नशेखरसूरिवर्यविवृतं श्राद्धप्रतिक्रमणसूत्र ॥

इति श्रेष्ठि देवचन्द्र लालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः—७१